# महावीरचरितम् ।

महाकविश्रीभवभूतिप्रणीतम् ।

पण्डितकुलपतिना

बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया

समलङ्कृतम् ।

तृतीयसंस्करणम् ।

कलिकातानगरे

गोवर्द्धनयन्त्रे

मुद्रितम् ।

इं १९०६

# महावीरचरितम् ।

## प्रथमोऽङ्कः ।

अथ स्वस्थाय देवाय नित्याय हतपाप्मने ।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः ॥ १ ॥

[ नान्द्यन्ते सूत्रधारः (क) ]

सूत्र । अद्य खलु भगवतः कालप्रियनाथस्य यात्रायामार्य्यमिश्राः समादिशन्ति (ख) ।

---

प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
नाटके वीरचरिते व्याख्येयं क्रियते मया ॥

अथेति । अथेति मङ्गलार्थम् "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥" इत्युक्तेः । स्वस्थाय स्वस्मिन् आत्मतत्त्वे तिष्ठतीति तथोक्ताय नित्याय चिरन्तनाय हतानि नाशितानि पाप्मानि कलुषाणि पापरूपाणि जगदुपद्रवरूपाणि असुरादीनि वा येन तथोक्ताय त्यक्तः क्रमस्य उत्पत्तिस्थितिभङ्गात्मकस्य विभागः येन तथाभूताय उत्पत्त्यादिक्रमवर्जितायेत्यर्थः चैतन्यं विशुद्धं ज्ञानमेव ज्योतिः तेजो यस्य तथाभूताय विशुद्धज्ञानतेजोरूपाय वा दीव्यति स्वमायया क्रीड़तीति देवाय नमः । अनुष्टुब्वृत्तम् ॥ १ ॥

(क) नान्द्यन्ते इति । नन्दयतीति नान्दी देवद्विजनृपादीनामानन्दनाय माङ्गलिको वाग्विशेषः । तदुक्तं दर्पणे—"आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥" सा चात्र अष्टपदा । उक्तञ्च तेनैव । "माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी । पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुतेति । सूत्रधार इति सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः । तदुक्तं,—"वर्णनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते" इति ।

(ख) कालप्रियेति । "कलनात् सर्वभूतानां स कालः परिकीर्त्तितः" इत्युक्तस्य जगत्-

महापुरुषसंरम्भो यत्र गम्भीरभीषणः ।
प्रसन्नकर्कशा यत्र विपुलार्था च भारती ॥ २ ॥
अप्राकृतेषु पात्रेषु यत्र वीरः स्थितो रसः ।
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते ॥ ३ ॥

स सन्दर्भोऽभिनेतव्यः (ग) इति । [सहर्षम्] महावीरचरितं तर्हि प्रयोक्तव्यमित्यादिष्टमर्थतो भवति ।

वश्यवाचः कवेः काव्यं सा च रामाश्रया कथा
लब्धश्च वाक्यनिष्यन्दनिष्पेषनिकषो जनः ॥ ४ ॥

---

संहारिणः कालस्य युगान्तस्येत्यर्थः प्रियश्चासौ नाथः प्रभुश्चेति तथाभूतस्य तदाख्यदेवादिदेवस्येत्यर्थः यात्रायाम् उत्सवे आर्य्यमिश्राः आर्य्येषु साधुषु मिश्राः मान्याः ।

महापुरुषेति । यत्र सन्दर्भे गम्भीरश्चासौ भीषणश्चेति गम्भीरभीषणः दुरवगाहभयङ्कर इत्यर्थः महापुरुषस्य भगवतो रामरूपेणावतीर्णस्येति भावः संरम्भः सङ्कोपः "संरम्भः संभ्रमे कोपे" इत्यमरः । वर्णित इति शेषः यत्र च प्रसन्नकर्कशा प्रसन्ना प्रसादाख्यगुणयुक्ता कर्कशा ओजोगुणयुक्ता च तथोक्ता विपुलो महान् अर्थः यस्यां तथाविधा भारती वाणी प्रसरतीति शेषः ॥ २ ॥

यत्र अप्राकृतेषु प्राकृतानि प्रकृतिसिद्धानि लौकिकानीति यावत् न भवन्तीति अप्राकृतानि अलौकिकानि तेषु लोकातिशायिषु इत्यर्थः पात्रेषु रामादिरूपाभिनेतृषु नटेषु यद्यपि नटानां तादृगप्राकृतत्वं नोपपद्यते, तथापि अप्राकृताभिनेतृत्वात् तथात्वमुपचर्य्यते इति बोध्यम् । वीरो रसः । "उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः । महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः । आलम्बनविभावास्तु विजेतव्यादयो मताः । विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः । अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ।" सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चा इत्युक्तलक्षणः सूक्ष्मैः अविस्पष्टैः सहृदयसंवेद्यैरिति भावः अभिव्यक्तैः सम्यक् प्रकटितैरित्यर्थः भेदैः विशेषैः आधारे आधारे प्रत्याधारं प्रतिवीरमिति भावः विभज्यते पृथक् पृथक् कीर्त्त्यते इत्यर्थः । अनुष्टुब्वृत्तद्वयम् ॥ ३ ॥

(ग) अभिनेतव्यः अभिनयविषयीकर्त्तव्यः । अभिनयश्चोक्तो दर्पणेन—"भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।—"आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" इति ।

वश्येति । वश्या वशं गता वाक् यस्य तथाभूतस्य वाक्पटोरिति भावः कवेः भवभूतेः काव्यम् अलौकिकरसान्वितवाक्प्रपञ्चः, सा प्रसिद्धा रामायणकथा रामचरितप्रसङ्गः

सोऽहमेतद्विज्ञापयामि। अस्ति दक्षिणापथे (घ) पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयिणः (ङ) काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उडुम्बरा ब्रह्मवादिनः प्रतिवसन्ति (च)। तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य

---

वाक्यानां निष्यन्दस्य निस्रवस्य निष्पे निष्कर्षे निकषः कष्टिप्रस्तरः जनः सभ्यवर्ग इत्यर्थः लब्धश्च प्राप्तश्च अस्माभिरिति शेषः। महाकविसन्दर्भस्तु स्वत एव हारी तत्र तावत् रामचरितमतीव मनोहरं दर्शकश्च परमभिज्ञः सहृदयश्चेति वितथसङ्गतिर्मणिकाञ्चनरूपयोग इति भावः। अनुष्टुब्वृत्तम्॥ ४॥

(घ) दक्षिणापथे दक्षिणदिग्वर्त्तिदेशभेदे।

(ङ) तैत्तिरीयिणः वेदेषु यजुषो द्वे शाखे कृष्णा शुक्ला च तत्र कृष्णयजुःशाखा तित्तिरिशाखेत्युच्यते। अत्राचक्षते प्राक्तनाः पुरा याज्ञवल्क्यो महर्षिः वैशम्पायननामकादाचार्य्याद् यजुर्वेदमधीतवान्। कदाचित् केनचित् कारणेन कुपितो गुरुः देहि मे यजुर्भागं त्वया गृहीतमित्युवाच। स च महामुनिस्तथेति तस्मै तदुपदेशेन गृहीतं यजुर्भागमुज्जगार। उद्गीर्णञ्च तं तत्र विचारिणस्तित्तिरिनामकाः पक्षिणः खादन्ति स्म तैश्च उद्धरितः स वेदभागः कृष्णयजुरिति। विस्तरस्तु भागवते द्वादशस्कन्धे षष्ठाध्याये ५८ श्लोकादिषु द्रष्टव्यः। तं वेदभागमधीयते विदन्ति वेति तैत्तिरीयिणः तित्तिरिशाखिन इत्यर्थः।

(च) काश्यपाः कश्यपगोत्राः। चरणगुरवः चरणेषु तत्तद्वेदपादेषु गुरवः श्रेष्ठाः सुनिपुणा इति यावत्। पङ्क्तिपावनाः पङ्क्तौ आहारार्थं श्रेणीभावेनोपविष्टान् ब्राह्मणान् पावयन्ति पवित्रीकुर्वन्तीति तथोक्ताः। उक्तञ्च मनुना।—"अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः। तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान्॥ अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥ त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्। ब्राह्मदेयात्मसन्तानो ज्येष्ठसामग एव च॥ वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः। शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः॥" इति। पञ्चाग्नयः पञ्चाग्निसाध्यवैदिककर्म्मरताः। तदुक्तं मनुटीकायां हारीतेन।—"पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे। सायं प्रातः प्रदीप्यन्ते स विप्रः पङ्क्तिपावनः॥" इति। पवनः आवसथ्याग्निः। पावनः सभ्योऽग्निः यः शीतापनोदनार्थं बहुषु देशेष्वपि विधी-

पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातूकर्णीपुत्रः कविर्मित्रधेयमस्माकमित्यत्रभवन्तो विदांकुर्वन्तु (छ)।

श्रेष्ठः परमहंसानां महर्षीणामिवाङ्गिराः।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः ॥५॥

तेनेदमुद्धृतजगत्त्रयमन्युमूल-
मस्तोकवीरगुरुसाहसमद्भुतञ्च।
वीराद्भुतप्रियतया रघुनन्दनस्य
धर्मद्रुहो दमयितुश्चरितं निबद्धम् ॥ ६ ॥

---

यते। इति कुल्लूकभट्टः। त्रेता दक्षिणाग्निर्गार्हपत्यो ह्वनीयस्त्रयोऽग्नयः। अग्नित्रयमिदं त्रेतेत्यमरोक्तमग्नित्रयं पवनः पावनश्चेति द्वयञ्च मिलित्वा अग्नीनां पञ्चसंख्यत्वं बोध्यम्। धृतव्रता अवलम्बितचान्द्रायणादितपोनियमा इत्यर्थः। सोमपीथिनः सोमाख्ययज्ञे सोमरसपायिन इत्यर्थः। उदुम्बराः उच्चसंभ्रमशालिनः उच्चवंशप्रसूता इति यावत्। ब्रह्मवादिनः वेदवादिनः वेदज्ञा इत्यर्थः तत्त्वज्ञाः परमार्थविदो वा। वेदस्तत्त्वं तपो ब्रह्मेत्यमरः।

(छ) तदामुष्यायणस्य तत्कुलभवस्येत्यर्थः। तत्रभवतः पूज्यस्य, पूज्यस्तत्रभवानत्रभवानित्यमरः। वाजपेययाजिनः वाजपेयेन तदाख्येन यज्ञेन यजते देवानर्चयतीति तथोक्तस्य कृतवाजपेययज्ञस्येत्यर्थः। पञ्चमः पञ्चानां पूरणः। सुगृहीतेति सुष्ठु सुखार्थं वा गृहीतं नाम यस्य सः सुगृहीतनामा तस्य स सुगृहीतनामा स्यात् यः सदा सुखदः स्मृत इत्युक्तेः। आत्मसम्भवः आत्मजः आत्मा वै जायते पुत्र इति स्मृतेः। श्रीकण्ठेति श्रीः सरस्वती कण्ठे यस्य, स श्रीकण्ठ इति पदं लाञ्छनम् उपाधिर्यस्य तथाभूतः। जातूकर्णीपुत्रः जातूकर्णस्य अपत्यं स्त्री जातूकर्णी जातूकर्णस्य तदाख्यस्य विदुषः पुत्रीत्यर्थः तस्याः पुत्रः गर्भजः। मित्रधेयं मित्रं नाम। अत्रभवन्तः पूज्याः मान्या वा।

श्रेष्ठ इति। महर्षीणाम् अङ्गिरा इव परमहंसानां योगिनां श्रेष्ठः यथार्थम् अन्वर्थं नाम यस्येति यथार्थाभिधेयः भगवान् ज्ञाननिधिः तदाख्यो मुनिविशेषः यस्य भवभूतेः गुरुः आचार्यः। अनुष्टुब्वृत्तम् ॥ ५ ॥

तेनेति। तेन भवभूतिना वीरो रसः अद्भुतश्च रसः प्रियो यस्य तस्य भावः तत्तया हेतुना उद्धृतम् उन्मूलितं जगत्त्रयस्य मन्युमूलं शोककारणं राक्षसकुलमिति भावः यस्मिन्

तदिदं भवन्तः परिपुनन्तु (ञ)। उक्तञ्च तेन श्रोत्रियपुत्रेण।

प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत् पावनं रघुपतेः प्रणिनाय वृत्तम्।
भक्तस्य तत्र समरंसत मेऽपि वाच-
स्तत् सुप्रसन्नमनसः कृतिनो भजन्ताम्॥ ७॥

[ प्रविश्य नटः ]

नटः। कृतप्रसादाः पारिषदाः। किन्तु अपूर्वत्वात् प्रबन्धस्य कथाप्रदेशं समारम्भे (झ) ज्ञातुमिच्छन्ति।

सूत्र। स तु भगवान् दीक्षिष्यमाणः कौशिको विश्वामित्र ऐक्ष्वाकस्य राजर्षेर्वशिष्ठपुरोधसो दशरथस्य गृहानुपेत्य स्वमेव तपोवनं प्रत्यागतः (ञ)। स च—

---

येन वा तत् मन्युशोकौ तु शुक् स्त्रियामित्यमरः। अस्तोकम् अनल्पं वीरे वीररसे वीरस्य रसस्य वा गुरु महत् साहसं विक्रमो यस्मिन् तथोक्तम् अतएव अद्भुतम् आश्चर्य्यं लोकोत्तरचमत्कारीत्यर्थः धर्मान् द्रुह्यतीति धर्मध्रुक् रावणः तस्य दमयितुः शासितुः विनाशयितुरित्यर्थः रघुनन्दनस्य रघुवंशानन्दिनो रामस्य इदं चरितं निबद्धं विरचितम्। वसन्ततिलकं वृत्तं, "ज्ञेयं वसन्ततिलकं तभजा जगौ ग" इति तल्लक्षणात्॥ ६॥

(ञ) परिपुनन्तु सर्वतः पवित्रीकुर्वन्तु दर्शनश्रवणादिना शोधयन्तु इत्यर्थः गर्वपरिहारार्थमिदम्।

प्राचेतस इति। मुनिवृषा मुनीन्द्रः कवीनां काव्यप्रणेतॄणां प्रथमः आद्यः प्रचेतस अपत्यं पुमानिति प्राचेतसः वाल्मीकिः रघुपतेः रामस्य यत् पावनं पापध्वंसकारणं वृत्तं चरितं प्रणिनाय निबबन्ध भक्तस्य रघुपतिसेवकस्येति यावत् मे ममापि तत्र वृत्ते वाचः समरंसत सम्यक् क्रीडन्ति स्म तच्चरितविषयिणीं वाचं मयापि पर्य्यालोच्य यत्किञ्चिन्निबद्धमिति यावत् कृतिनः सुनिपुणाः भवन्तः सुप्रसन्नमनसः सन्तः तत् मन्निबद्धमिति भावः भजन्तां सेवन्तां पर्य्यालोचयन्तु इति निष्कर्षः। वसन्ततिलकं वृत्तम्॥ ७॥

(झ) कृतप्रसादाः कृतानुग्रहाः दर्शनार्थं कृतोद्यमा इति यावत्। पारिषदाः परितः सीदन्तीति पारिषदाः सभ्या इत्यर्थः। कथाप्रदेशं कथांशम्। समारम्भे उपक्रमे।

(ञ) दीक्षिष्यमाणः यज्ञानुष्ठाने प्रवर्त्तिष्यन्नित्यर्थः। कौशिकः कुशवंशनन्दनः।

विजयि सहजमस्तैवीर्थ्यमुच्छ्राययिष्यन्
जगदुपकृतिवीजं मैथिलीं प्रापयिष्यन्।
दशमुखकुलघातश्लाघ्यकल्याणपात्रं
धनुरनुजसहायं रामदेवं निनाय ॥ ८ ॥

निमन्त्रितस्तेन विदेहनाथः स प्राहिणोद् भ्रातरमात्तदीक्षः।
कुशध्वजो नाम स एष राजा सीतोर्मिलाभ्यां सहितोऽभ्युपैति ॥९॥

[ इति निष्क्रान्तौ ]

[ इति प्रस्तावना (ट) ]

---

ऐक्ष्वाकस्य इक्ष्वाकोरपत्यं पुमान् ऐक्ष्वाकः तस्य इक्ष्वाकुकुलोत्पन्नस्येत्यर्थः। वशिष्ठपुरोधसः वशिष्ठः पुरोधाः पुरोहितः यस्य तथोक्तस्य, पुरोधास्तु पुरोहित इत्यमरः।

विजयीति। विजयि विजयशीलं सहजं स्वाभाविकं जगताम् उपकृतेः उपकारस्य हितस्येत्यर्थः वीजं हेतुभूतं वीर्य्यं रामदेवस्येति भावः उच्छ्राययिष्यन् उच्छ्रितं कारयिष्यन् उन्नमयिष्यन्निति यावत् तथा मैथिलीं जानकीं प्रापयिष्यन् सङ्घटयिष्यन्निति भावः जगदुपकृतिवीजमिति मैथिलीमित्यस्य विशेषणमपि सङ्गच्छते। अनुजः लक्ष्मणः सहायः सहचरो यस्य तथोक्तं दशमुखस्य रावणस्य कुलघातेन वंशविनाशेन श्लाघ्यं प्रशंसनीयं यत् कल्याणं मङ्गलं तस्य पात्रं भाजनं रामदेवं धनुः धनुर्वेदं निनाय प्रापयामास शिक्षयामास धनुः ऐश्वरं कार्मुकं जनकगृहस्थमिति भावः निनाय प्रापितवान् दर्शयामासेति चेति व्यज्यते। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ८ ॥

निमन्त्रित इति। तेन विश्वामित्रेण विदेहनाथो जनकः निमन्त्रितः यज्ञोत्सवे इति शेषः। स विदेहनाथः जनकः आत्तदीक्षः यज्ञार्थं गृहीतव्रत इत्यर्थः भ्रातरं कुशध्वजं प्राहिणोत् प्रेरयामास। स एष कुशध्वजो नाम राजा सीतोर्मिलाभ्यां सीतया उर्मिलया च सहितः अभ्युपैति आगच्छति। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिवृत्तम्। स्यादिन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति च अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता च इति तल्लक्षणात् ॥ ९ ॥

(ट) प्रस्तावना प्रस्ताव्यते अनयेति प्रस्तावना सन्दर्भसंसूचनी वाक्परम्परेत्यर्थः। उक्तञ्च दर्पणे।—नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं

[ ततः प्रविशति रथस्थो राजा सूतः कन्ये च ]

राजा। आयुष्मत्यौ सीतोर्मिले! अद्य भगवान् विश्वामित्रः श्रद्दधानेन चेतसा वत्साभ्यां प्रणन्तव्यः (ठ)।

कन्ये। जधा कणिट्ठतादो आणवेदि (ड)।

राजा। तुरीयो ह्येष मेध्योऽग्निराम्नायः पञ्चमोऽथवा।
अथवा जङ्गमं तीर्थं धर्मो वा मूर्त्तिसञ्चरः॥ १०॥

सूतः। साङ्काश्यनाथ! एवमेतत्। न खलु विश्वामित्रादृषेर्महत्त्वेन कश्चिदपरः प्रकृष्यते। यस्य भगवतस्त्रैशङ्कवं शौनःशेफं रम्भास्तम्भनं च इति अपरिमेयम् आश्चर्यजातम् आख्यानविद आचक्षते (ढ)।

---

यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि चेति।

(ठ) श्रद्दधानेन श्रद्धा पूज्येष्वनुरागः तद्वता। प्रणन्तव्यः अभिवादनीयः।

(ड) यथा कनिष्ठतातः आज्ञापयति।

तुरीय इति। एष विश्वामित्रः तुरीयश्चतुर्थः त्रेताग्निभिन्न इत्यर्थः मेध्यः पवित्रः अग्निः, अथवा पञ्चमः ऋग्यजुःसामाथर्वभ्यः भिन्न इत्यर्थः आम्नायः वेदः। अथवा जङ्गमं सञ्चरत् तीर्थं पुण्यक्षेत्रं वा किंवा मूर्त्त्या सञ्चरतीति मूर्त्तिसञ्चरः देहवानित्यर्थः धर्मः श्रुतिस्मृत्युदितक्रियाकलापस्तज्जन्यापूर्वापरनामा अदृष्टविशेषो वा। विषयविषयिणोरभेदाध्यवसायाद्रूपकमलङ्कारः॥ १०॥

(ढ) साङ्काश्यनाथ! साङ्काश्यो नाम जनपदविशेषः तस्य नाथः अधिपतिः तत्सम्बोधने। प्रकृष्यते उन्नम्यते। त्रैशङ्कवं त्रिशङ्कुर्नामा राजा तत्सम्बद्धम्। पुरा त्रिशङ्कुर्नाम ऐक्ष्वाको नृपतिः सशरीरः स्वर्गं जिगमिषुर्यष्टुमिच्छन् पुरोधसं वशिष्ठमन्वकथत्। स तु महर्षिस्तं तथानर्हतया प्रत्याचचक्षे। राजा कोपाक्रान्तो गुरुसुतानभ्येत्य प्रोवाच गुरुपुत्राः! गुरुणाहमवज्ञातः तद्भवन्तो मां यज्ञे स्वर्गं नयन्त्विति। ते च तं गुरुद्रुहं मत्वा प्रत्याचख्युः। ततः स वशिष्ठद्वेषिणं विश्वामित्रं शरणं जगाम। विश्वामित्रस्तु तपोबलेन तं सशरीरमेव दिवं निनाय किन्तु गुरुद्रोहिणस्तस्य स्वर्गेऽनधिकारात् देवेन्द्रस्तथा स्वर्गमारोढुन्तं तम् अधःपातयामास। अधःपतंश्च स विश्वामित्रमाकार्य्य भगवन्! पातितोऽहं देवैरिति

तदस्मिन् ब्रह्माद्यैस्त्रिदशमुनिभिर्नाथितशमे
तपस्तेजोधाम्नि स्वयमुपनतब्रह्मणि गुरौ ।
निवासे विद्यानामुपहितकुटुम्बव्यवहृति-
र्भवानेव श्लाघ्यो जगति गृहमेधी गृहवताम् ॥ ११ ॥

---

वदन् विश्वामित्रेण तत्रैव तिष्ठेत्युक्तोऽन्तरीक्ष एव तस्थाविति पुरातनी गाथा। स चावाक्शिरा दक्षिणां दिशमाश्रित्याद्यापि तिष्ठति। तथाच—"त्रिशङ्कुर्बन्धुभिर्मुक्तः ऐक्ष्वाकः प्रीतिपूर्वकम्। अवाक्शिरा दिवं नीतो दक्षिणां दिशमास्थितः" इति। विस्तरस्तु वाल्मीकिरामायणस्य आदिकाण्डे षष्टितमसर्गे द्रष्टव्यः। शौनःशेफं शुनःशेफो नाम कश्चिदृषिपुत्रः तत्सम्बन्धम्। पुरा अम्बरीषनामा नृपतिर्नरमेधं यज्ञं चिकीर्षन् नरं लब्धुमितस्ततोऽन्विष्यन् ऋचीकस्य मुनेः पुत्रं शुनःशेफं प्राप्य गगनमार्गेण रथारूढः प्रस्थितः। विश्वामित्रस्याश्रमोपरिभागेन व्रजतस्तस्य रथस्थितोऽसौ शुनःशेफः "पितरौ धनलुब्धौ च राजा खड्गधरस्तथा। देवता बलिमिच्छन्ति को मे त्राता भविष्यतीति वदन् रोदिति स्म। विश्वामित्रः उपरि तथा रुदितमाकर्ण्य कोऽयं यातीत्युच्चैर्जगाद। राजा तु भृशं परित्रस्तो विश्वामित्रात् तत्क्षणमेवान्तरीक्षात् अवतरन् तेनैव बालकेन विश्वामित्रमुपजगाम। विश्वामित्रस्तं बालकं तथा विलपन्तं दृष्ट्वा नितरां दयमानः स्वान् पुत्रान् मधुच्छन्दादीन् उवाच वत्साः! राज्ञोऽस्य अभीप्सितं यज्ञं समाधत्तेति। ते तु पितुराज्ञां नैवामन्यन्त। विश्वामित्रः सकोपस्तान् परित्यज्य शुनःशेफमवादीत्! वत्स! गृहाणेमं मन्त्रं मत्तः, यदा राजा त्वां वधाय नेष्यति तदा अनेन मन्त्रेण देवान् स्तोष्यसि। स्तवेन तुष्टाश्च देवास्त्वां रक्षिष्यन्ति मा भैरित्युक्त्वा राजानं सबालकं मुमोच। ततश्च तस्मिन् यज्ञे शुनःशेफस्तुता देवास्तमरक्षन् राज्ञश्च यज्ञं सफलमकुर्वन्। अथ शुनःशेफो विश्वामित्रेण पुत्रीकृत इति पुरातनी कथाऽनुसन्धेया। विस्तरस्तु वाल्मीकिरामायणे आदिकाण्डे द्विषष्टितमसर्गे द्रष्टव्यः। रम्भास्तम्भनं रम्भा नाम काचिदप्सराः अस्य तपसः विघ्नार्थमागता तस्याः स्तम्भनं शापात् निश्चलीकरणं शैलीभावप्रापणमिति यावत्। तथाचोक्तं,—"तपोविघ्नकरी चैव पञ्चचूडा सुमध्यमा। रम्भा नामाप्सराः शापाद् यस्य शैलत्वमागतेति। विस्तरस्तु वाल्मीकिरामायणस्य बालकाण्डे चतुःषष्टितमसर्गे द्रष्टव्यः। अपरिमेयं परिमातुमशक्यम् इयत्तया प्रमाणतश्च परिच्छेत्तुमशक्यम्। आख्यानविदः इतिहासज्ञाः।

तदिति। तत् तस्मात् ब्रह्माद्यैः विरिञ्चिप्रमुखैः त्रिदशमुनिभिः देवर्षिभिः नाथितः प्रार्थितः शमः शान्तिस्ततोविरतिर्यस्य तथाभूते तपसा जनितं यत् तेजः ज्योतिः तस्य यद्धा

राजा । साधु भोः ! साधु सूनृतं हि सूत ! भाषसे । प्रकृष्टकल्याणोदर्कसङ्क्रमा ह्येते भगवन्तः साक्षात्कृतब्रह्माणो महर्षयः (ण) ।

तमांसि ध्वंसन्ते परिणमति भूयानुपशमः
सकृत् संवादेऽपि प्रथत इह चामुत्र च शुभम् ।
अथ प्रत्यासङ्गः कमपि महिमानं वितरति
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ १२ ॥

सूतः । दृश्यते हरितपरिसरारण्यरमणीयं कौशिकीपरिक्षिप्तमायतनमृषेस्तस्य सिद्धाश्रमपदं नाम । किं बहुना । अयम् आत्मना तृतीयः कुशिकनन्दनो भवन्तमेवाभ्युद्यातः (त) ।

---

तपश्च तेजश्च तयोः धाम आश्रयः तस्मिन् स्वयम् आत्मना स्वतेजसैवेत्यर्थः उपनतम् उपस्थितं ब्रह्म ब्रह्मण्यमिति यावत् यस्य तथाभूते गुरौ सर्वजनपूज्ये विद्यानां निवासे आधारे अस्मिन् विश्वामित्रे उपहिता निहिता कुटुम्बव्यवहृतिः स्वजनव्यवहारः येन तथाविधो भवानेव जगति गृहवतां गृहिणां मध्ये श्लाघ्यः प्रशस्यः गृहैर्दारैः मेधते सङ्गच्छते इति गृहमेधी गृहस्थः भवतीति शेषः । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ ११ ॥

(ण) सूनृतं सत्यमधुरम् । प्रकृष्टेति । प्रकृष्टं कल्याणं मङ्गलमेव उदर्कः उत्तरं फलं "उदर्कः फलमुत्तरम्" इत्यमरः । तस्य संक्रमाः सेतवः उपायभूता इति यावत् । साक्षादिति । साक्षात्कृतं प्रत्यक्षीकृतं ब्रह्मतत्त्वं परमात्मा वा यैः तथोक्ताः । महर्षय इति गौरवे बहुवचनम् । महर्षिसमवायोऽयमिति भावः ।

तमांसीति । सकृत् एकवारं संवादेऽपि सङ्गेऽपि एभिरिति शेषः तमांसि अज्ञानानीति भावः ध्वंसन्ते विनश्यन्ति भूयान् महान् उपशमः चित्तनिवृत्तिरिति यावत् परिणमति फलति, इह च अस्मिन् लोके च अमुत्र च परस्मिन् लोके च शुभं प्रथते उत्पद्यते । अथ संवादानन्तरमित्यर्थः प्रत्यासङ्गः पुनः पुनरासम्यक् सङ्गः कमपि अनिर्वचनीयं महिमानं वितरति ददाति पृथयतीति यावत् ततश्च प्रसन्नानां प्रीतानामेषामिति शेषः वाचः आशीरूपा इति भावः अपरिमेयम् असंख्यं फलं प्रसुवते प्रकर्षेण उत्पादयन्ति । शिखरिणीवृत्तम् ॥ १२ ॥

(त) हरितेति । हरितः श्यामलः परिसरः आभोगः यस्य तादृशं यत् अरण्यं वनं

राजा । यद्येवमवतरामो रथात् [ कन्याभ्यां सहावतीर्य्य ] सूत ! सूत ! उच्यन्तां सैनिकाः न कैश्चिदाश्रमाभ्यर्णभूमयः परिक्रम्यन्तामिति (थ) ।

सूतः । यथाज्ञापयसि [ इति निष्क्रान्तः ]

[ ततः प्रविशति विश्वामित्रो रामलक्ष्मणौ च ]

विश्वा । [ स्वगतम् ]

रक्षोघ्नानि च मङ्गलानि सुदिने कल्प्यानि दारक्रिया
वैदेह्या च रघूद्वहस्य कुशलैर्दीक्षाप्रवेशश्च नः ।
आख्याप्यानि च तानि तानि जगतीक्षेमाय रामात्मनो
दैत्यारेश्चरिताद्भुतान्यथ खलु व्यग्राः प्रमोदामहे ॥ १३ ॥

सन्दिष्टं च मैथिलस्य राजर्षेरस्माभिः आचार इति जय-

---

तेन रमणीयं मनोहारि । कौशिकीपरिचित' कौशिकी नाम नदी तया परिचित' परिवेष्टितम् । आयतनम् आवासचैत्यम् ! सिद्धाश्रमपदं सिद्धानां सफलतपसामाश्रमपदम् आश्रमस्थानं नामेति प्राकाश्ये सिद्धाश्रमनाम्ना ख्यातमिति यावत् । अयं कुशिकनन्दनः आत्मना स्वेन तृतीयः बालकद्वयसहित इति भावः अभ्युदयातः अभिनन्दनार्थमुत्थित इत्यर्थः ।

(थ) आश्रमाभ्यर्णभूमयः आश्रमसन्निकृष्टदेशाः । परिक्रम्यन्ताम् आगम्यन्ताम् ।

रक्षोघ्नानीति । सुदिने शुभे दिवसे रक्षांसि घ्नन्तीति तथोक्तानि राक्षसविनाशकानि मङ्गलानि माङ्गलिककार्य्याणि कल्प्यानि विधेयानि वैदेह्या सीतया सह रघूद्वहस्य रघुपतेः रामस्य दारक्रिया परिणयव्यापारः नः अस्माकं दीक्षायां यज्ञव्यापारे प्रवेशः प्रवर्त्तनञ्च कुशलैः मङ्गलैः कल्प्य इति वचनविपर्य्यासेनान्वयः । अथानन्तरं रामात्मनः रामरूपिणः दैत्यारेः विष्णोः जगतीक्षेमाय भुवनमङ्गलाय तानि तानि चरिताद्भुतानि अद्भुतचरितानि च आख्याप्यानि प्रख्याप्यानि खलु यतः व्यग्राः तत्पराः वयमिति शेषः प्रमोदामहे प्रमोदमनुभवाम इत्यर्थः । शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ १३ ॥

मानोऽपि यज्ञे निमन्त्रितोऽस्मि कुशध्वजस्तु सीतोर्मिलाभ्यां सहितः प्रेषितव्य इति कृतश्च तत् प्रियसुहृदा (द)।

कुमारौ। भगवन्! कः पुनरयं महात्मा यमत्रभवन्तोऽपि एवम् अभ्युद्याताः?

विश्वा। श्रूयन्त एव निमिकुलात्मसम्भवा राजर्षयो विदेहेषु (ध)।

तेषामिदानीं दायादो वृद्धः सीरध्वजो नृपः।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ॥ १४॥

कुमारौ। यस्य गृहेषु तत् माहेश्वरं धनुः पूज्यते?

विश्वा। अथ किम्?

कुमारौ। [सकौतुकम्] अथ किल अन्यदपि तत्र आश्चर्य्यं यत् अयोनिजा कन्यका इति।

विश्वा। [विहस्य] तदपि अस्ति।

अयन्तु यजमानेन यक्ष्यमाणस्य मे गृहम्।
प्रेषितस्तेन वात्सल्यादनुजन्मा कुशध्वजः॥ १५॥

---

(द) सन्दिष्टं वाचिकं प्रहितम्। आचारः व्यवहारः शिष्टरीतिरिति यावत्। यजमानः यज्ञं कुर्वन्।

(ध) श्रूयन्त एव श्रुतिविषयीक्रियन्त एव युष्माभिरिति शेषः। विदेहेषु तदाख्यजनपदेषु।

तेषामिति। इदानीं साम्प्रतं तेषां राजर्षीणां दायादः उत्तराधिकारी सीरध्वजो नाम वृद्धो नृप अस्तीति शेषः। याज्ञवल्क्यो मुनिः यस्मै सीरध्वजाय ब्रह्मपारायणं ब्रह्मणः वेदस्य पारायणं पारगमनं जगौ गीतवान् आद्योपान्तसमग्रवेदं यमध्यापितवानित्यर्थः। यस्मै इति तादर्थ्ये चतुर्थी। अनुष्टुब् वृत्तम्॥ १४॥

अयमिति। यजमानेन यज्ञव्यापृतेनेत्यर्थः तेन सीरध्वजेन तु वात्सल्यात् स्नेहात् मयि अनुरागादिति यावत्। अयम् अनुजन्मा अनुजः कुशध्वजः यक्ष्यमाणस्य यागं करिष्यतः मे मम गृहम् आश्रमं प्रेषितः। अनुष्टुब् वृत्तम्॥ १५॥

तत् अस्मिन् राजश्रोत्रिये वत्साभ्यां प्रश्रयेण (न) वर्त्तितव्यम् ।

कुमारौ । एवम् ।

राजा । [ तौ निर्वर्ण्य ]—

प्रकृत्या पुण्यलक्ष्मीकौ कावेतौ ज्ञायते त्विदम् ।
राजन्यदारकौ नूनं कृतोपनयनाविति ॥ १६ ॥

द्वितीयस्य च वर्णस्य प्रथमस्याश्रमस्य च ।
अहो ! रम्ये इमे मूर्त्ती वयसो नूतनस्य च ॥ १७ ॥

तथाहि—चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोमपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डं परं पैप्पलम् ॥ १८ ॥

---

(न) राजश्रोत्रिये राजर्षावित्यर्थः । प्रश्रयेण विनयेन ।

प्रकृत्येति । प्रकृत्या स्वभावेन पुण्या पवित्रा विशुद्धेत्यर्थः लक्ष्मीः श्रीः ययोः तथाभूतौ एतौ बालकाविति शेषः कौ ? तु किन्तु नूनं निश्चितं कृतम् उपनयनं तदाख्यसंस्कारो ययोः तथाविधौ उपनीतावित्यर्थः राजन्यदारकौ क्षत्रियकुमारौ इतीदं ज्ञायते । अनुष्टुब्-वृत्तम् ॥ १६ ॥

द्वितीयस्येति । इमे मूर्त्ती शरीरे द्वितीयस्य वर्णस्य च क्षत्रियजातेरित्यर्थः प्रथमस्य आश्रमस्य च ब्रह्मचर्य्यस्य चेत्यर्थः नूतनस्य नवस्य वयसश्च रम्ये मनोज्ञे, अहो आश्चर्य्ये वर्णाः स्युर्ब्राह्मणादय इति ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्रीति चामरः । अनुष्टुब्वृत्तम् ॥ १७ ॥

चूड़ेति । पृष्ठतः अभितः पृष्ठस्य उभयोः पार्श्वयोः चूड़या शिखया चुम्बितः स्पृष्टः कङ्कपत्रः शरो यस्य तादृशं तूणीद्वयं भस्मनां स्तोमो निचय एव पवित्रं लाञ्छनं चिह्नं यस्य तादृशम् उरः वक्षःस्थलं रौरवीं रुरुर्नाम मृगः तत्सम्बन्धिनीं त्वचं चर्म्म । तथाच मनुः । कार्ष्णरौरवव्याघ्राणि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि चेति । मौर्व्या मूर्वा लताविशेषः तन्मयी तया मेखलया कटीसूत्रेण नियन्त्रितं निबद्धं माञ्जिष्ठिकं मञ्जिष्ठा लताविशेषः तस्या रसेन रञ्जितम् अधोवासः परिधानवस्त्रं मौञ्जी

कन्ये। सोम्मदंसणा क्खु एदे (प)।

राजा। [ उपसृत्य ] भगवन्! अभिवादये।

विश्वा। दिष्ट्या गर्भरूपकं त्वां कुशलिनमागतं राजर्षिगृहात् पश्यामि (फ)। तत् परिष्वजस्व। [ आलिङ्ग्य ]

अपि प्रवृत्तयज्ञोऽसौ विदेहाधिपतिः सुखी।
गौतमश्च शतानन्दो जनकानां पुरोहितः?॥ १८॥

राजा। ननु आर्य्ये स एकः सुखी सह पुरोधसा दैर्घतपसेन यस्यैवं भवन्तः कुटुम्बवृत्तिमनुपतिताः (ब)।

कन्ये। पणमामो (भ)।

---

त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला। क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवीति मनुः। पाणौ कार्मुकं धनुः अक्षसूत्रवलयं जपमालामण्डलं परम् उत्कृष्टं पैप्पलं पिप्पलो वटः तस्यायमिति पैप्पलः तं दण्डम्। तदुक्तं मनुना। ब्राह्मणो विल्वपालाशौ क्षत्रियो वाटखादिरौ। पैलवोदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मत इति। धत्ते धारयति बालकद्वयमिति कर्तृपदमूह्यम्। यद्वा चूडाचुम्बितकङ्कपत्रं तूणीद्वयं पृष्ठतः अभितः वर्त्तते इति शेषः भस्मस्तोमपवित्रलाञ्छनम् उरः वक्षःस्थलं रौरवीं त्वचं धत्ते धारयति, मौर्व्या मेखलया नियन्त्रितं माञ्जिष्ठिकम् अधोवासः पाणौ कार्मुकम् अक्षसूत्रवलयम् अस्मिन् पक्षे दण्डः परः पैप्पल इति पाठः परः उत्कृष्टः पैप्पलो दण्डश्च वर्त्तते इति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ १८॥

(प) सौम्यदर्शनौ खलु एताविति सं। सौम्यं सुखदं दृश्यते इति दर्शनं रूपं ययोः तथाभूतौ।

(फ) गर्भरूपकं पुत्रस्वरूपम्। राजर्षिगृहात् जनकगृहात्।

अपीति। असौ विदेहानामधिपतिः जनकः प्रवृत्तयज्ञः प्रारब्धयज्ञः सुखी अपि? निर्विघ्नः किमित्यर्थः। जनकानां जनकवंशीयानां पुरोहितः गोतमस्य अपत्यं पुमान् गौतमः शतानन्दश्च अपि सुखीत्यन्वयः। अनुष्टुब् वृत्तम्॥ १९॥

(ब) दैर्घतपसेन दीर्घतपसः गोतमस्य अपत्यं पुमान् दैर्घतपसः तेन। कुटुम्बवृत्तिं बन्धुव्यवहारम्। अनुपतिता अनुगताः।

(भ) प्रणमाव इति सं।

राजा । लाङ्गलोल्लिख्यमानाया यज्ञभूमेः सुनिर्गता ।
सीतेयमूर्मिला चेयं द्वितीया जनकात्मजा ॥ २० ॥

विश्वा । भद्रमस्तु ।

लक्ष्म । [ जनान्तिकम् ] आश्चर्य्यमियमद्भुतसूतिरार्य्या (म) ।

रामः । उत्पत्तिर्देवयजनात् ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्त्तिरस्याः स्नेहं करोति मे ॥ २१ ॥

राजा । भगवन् !
कौ त्वामनुगतावेतौ क्षत्रियौ ब्रह्मचारिणौ ? ।
प्रतापविक्रमौ धर्मं पुरस्कृत्योद्गताविव ॥ २२ ॥

विश्वा । रामलक्ष्मणौ दाशरथौ ।

कुमारौ । [ सविनयमुपसृत्य ] गुरो ! अभिवादयावहे ।

राजा । दिष्ट्या महाराजदशरथप्रसूतिर्दृश्यते । [ परिष्वज्य ]
नान्यत्र राघवाद्वंशात् प्रसूतिर्वत्सयोः क्षमा ।
दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः ? ॥ २३ ॥

---

लाङ्गलेति । लाङ्गलेन उल्लिख्यमानाया उत्खन्यमानायाः यज्ञभूमेः सुनिर्गता इयं सीता इयञ्च द्वितीया जनकात्मजा ऊर्मिला नामेति शेषः ॥ २० ॥

(म) जनान्तिकं त्रिपताककरेणान्यानपवार्य्यान्तरा कथा । अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकमित्युक्तलक्षणम् । अद्भुतसूतिः अद्भुता अलौकिकी सूतिः उत्पत्तिः यस्याः तथाभूता । अयोनिजत्वादिति भावः ।

उत्पत्तिरिति । अस्या इति सर्व्वत्रान्वयः । देवयजनात् यज्ञभूमेः उत्पत्तिः एतेन विशुद्धेः परा काष्ठा दर्शिता । ब्रह्मवादी नृपो जनकः पिता, तथा सुप्रसन्ना अतिसौम्या उज्ज्वला च मूर्त्तिः मे मम स्नेहम् अनुरागं जनयति । अनुष्टुब् वृत्तम् ॥ २१ ॥

काविति । प्रतापविक्रमौ तेजःपराक्रमौ धर्मं पुरस्कृत्य उद्गताविव उत्थिताविव एतौ त्वामनुगतौ क्षत्रियौ ब्रह्मचारिणौ कौ ? अनुष्टुब् वृत्तम् । उत्प्रेक्षालङ्कारः ॥ २२ ॥

नान्यत्रेति । रघोरयं राघवः तस्मात् वंशात् अन्यत्र वत्सयोः अनयोः प्रसूतिः उत्पत्तिः न क्षमा न योग्या । दुग्धार्णवात् क्षीरनिधेः ऋते विना चन्द्रकौस्तुभयोः जन्म कुतः ?

श्रुतपूर्वं हि एतदस्माभिः कर्णामृतम्—

> ग्रामाः कृच्छ्राद्दृष्यशृङ्गोपचारैः
> पुण्यश्लोकाः कोशलेन्द्रेण पुत्राः ।
> ये दीप्तस्य श्रेयसः पारकामा-
> श्चत्वारोऽपि ब्रह्मचर्य्यं चरन्ति ॥ २४ ॥

तदत्रभवता निष्पन्नाशिषां काममरिष्टतातिम् आशास्महे सिद्ध एव तु रघूणां प्रसूतेः उत्कर्षः ।

> यान् मैत्रावरुणिः प्रशास्ति भगवानाम्नायपूते विधौ
> शश्वद् येषु विशामनन्यविषयो रक्षाधिकारः स्थितः ।
> सावित्रस्य मनोर्महीयसि कुले तेषामवामात्मनां
> राज्ञां नो महिमा न जातु वचनप्रज्ञानयोर्गोचरः ॥ २५ ॥

---

न कुतोऽपि सम्भवतीत्यर्थः । अत्र प्रतिवस्तूपमालङ्कारः । तदुक्तं दर्पणे, प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । अनुष्टुब्वृत्तम् ॥ २३ ॥

ग्रामा इति कोशलेन्द्रेण दशरथेन ऋष्यशृङ्गस्य उपचारैः सेवाभिः तत्कृतयज्ञानुष्ठानैर्वा कृच्छ्रात् अतिदुःखात् पुण्या श्रीः येषां तथाभूताः चत्वारः अपि पुत्राः, ये पुत्राः दीप्तस्य उद्दिप्तस्य श्रेयसः मङ्गलस्य पारकामाः पारगमनेच्छवः सन्तः ब्रह्मचर्य्यं प्रथममाश्रमं चरन्ति सेवन्ते । शालिनीवृत्तं, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ २४ ॥

(य) अत्रभवता पूज्येन । निष्पन्नाशिषां निष्पन्ना निर्वृत्ता आशीः मङ्गलं येषां तथाभूताम् । कामं सम्यक् । अरिष्टतातिं मङ्गलवृद्धिम् अशुभध्वंसं वा, अरिष्टन्तु शुभाशुभे इत्यमरः । सिद्ध एव स्वाभाविक एवेत्यर्थः ।

यामिति । भगवान् मैत्रावरुणिः मित्रश्च वरुणश्च तौ मित्रावरुणौ तयोरपत्यं मैत्रावरुणिः वशिष्ठः । पुरा मित्रावरुणयोस्तपस्यतोर्नियमविघ्नकरणाय समागतामुर्वशीं पश्यतो रेतश्चस्कन्द । तस्मात् वशिष्ठ उदभूदिति वार्त्तानुसन्धेया । आम्नायो वेदः तेन पूते तद्विहिते इति भावः विधौ यज्ञादिव्यापारे इति यावत् यान् प्रशास्ति उपदिशति, येषु शश्वत् सततं विशां मनुष्याणां, द्वौ विशौ वैश्यमनुजावित्यमरः । न अन्येषां विषयो भवतीत्य-

विश्वा। अश्रान्तपुण्यकर्माणः पावनप्रायकीर्त्तयः।
महाभाग्यविदस्तेषां यूयमेव स्तवक्षमाः॥ २६॥

सखे! विश्रम्य लौकिकाः संस्त्यायान् अनुप्रविशन्ति तदस्मिन् विकङ्कतप्रच्छाये मुहूर्त्तमास्महे (र)।

[ इति सर्वे परिक्रम्य उपविशन्ति ]

[ नेपथ्ये ]

जय जय जगत्पते! रामचन्द्र! जय।

[ सर्वे साद्भुतमवलोकयन्ति ]

राजा। भगवन्! का पुनरियं देवता?

विश्वा। अस्ति अहल्या नाम गोतमस्य महर्षेरौतथ्यस्य धर्मपत्नी। यस्याः शतानन्द आङ्गिरसोऽजायत। तामिन्द्रश्चकमे। तस्मात्तं गोतमदारावस्कन्दिनमहल्याजार इति निर्दिशन्ति। अथ भगवान् मन्युमाप। तस्यां धर्मपत्नयामन्धतामिस्रमभ्यध्यायत्। सेयम् अद्य रामभद्रतेजसा तस्मादेनसो निरमुच्यत (ल)।

---

नन्यविषयः रक्षाधिकारः पालनाधिकारः स्थितः, सवितुः सूर्य्यस्य अपत्यं पुमान् सावित्रः तस्य मनोः महीयसि अतिमहति कुले अवाप्तात्मनां लब्धजन्मनां तेषां राज्ञां महिमा प्रभावः जातु कदाचिदपि नोऽस्माकं वचनप्र[illegible]नसोः वाङ्मनसयोरित्यर्थः न गोचरः न विषयः। वयं वाक्यैर्मनोभिश्च सूर्य्यवंश्यनृपतीनां प्रभावं ज्ञातुं न समर्था इति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ २५॥

अश्रान्तेति। अश्रान्तानि अविरतानि पुण्यानि कर्माणि येषां तथाभूताः पावनप्राया प्रायेण पावनाः कीर्त्तयः येषां तथोक्ताः यूयमेव तेषां सावित्राणां महाभाग्यविदः महाभाग्यज्ञाः अतएव स्तवक्षमाः स्तुतियोग्याः अनुष्टुब्वृत्तम्॥ २६॥

(र) विश्रम्य विश्रान्ता भूत्वा। लौकिकाः लोकाचारज्ञा जनाः संस्त्यायान् संलापान् अनुप्रविशन्ति कुर्वन्ति। विकङ्कतप्रच्छाये विकङ्कतः स्रुवावृक्षः तस्य प्रकृष्टा छाया प्रच्छायं तस्मिन्। आस्महे उपविशामः।

(ल) औतथ्यस्य उतथ्यस्य अपत्यं पुमान् औतथ्यः तस्य। आङ्गिरसः अङ्गिरस अप-

राजा। कथमप्रमेयसहजानुपमसामर्थ्य एव वत्सो वैकर्त्त नकुमारः? (व)।

सीता। [ससन्देहानुरागं निर्वर्ण्य अपवार्य्य च] सरीरणिम्माणसरिसो णं से अणुभावो (श)।

राजा। [निःश्वस्य]

रामाय पुण्यमहसे सदृशाय सीता
दत्तैव दाशरथिचन्द्रमसेऽभविष्यत्।
आरोपणेन पणमप्रतिकार्य्यमार्य्य-
स्त्रैयम्बकस्य धनुषो यदि नाकरिष्यत्॥ २७॥

---

त्यम् आङ्गिरसः। अत्रेयं वंशावली, ब्रह्मा तत्पुत्रः अङ्गिराः, तत्पुत्र उतथ्यः, तत्पुत्रः दीर्घतमाः, तत्पुत्रः गौतमः, तत्पुत्रः शतानन्द इति। तस्मात् अहल्यास्कन्दनादिति भावः तम् इन्द्रं गौतमदारा अहल्या ताम् अवस्कन्दति अभिगच्छतीति तथोक्तम्। अहल्याजारः अहल्याया जारः उपपतिः, जारस्तूपपतिः समावित्यमरः। अथ अहल्याधर्षणानन्तरं भगवान् गौतम इति शेषः। मन्युं क्रोधम्। अन्धतामिस्रं तदाख्यं नरकं पाषाणरूपेण स्थितिरूपमिति भावः। अभ्यध्यायत् अभिचिन्तितवान् पाषाणमयी भवेति अभिशशापेति भावः। एनसः पापात् निरमुच्यत निर्मुक्तेत्यर्थः।

(व) अप्रमेयेति अप्रमेयं प्रमातुमशक्यम् अपरिच्छेद्यमित्यर्थः सहजं स्वाभाविकम् अनुपमम् असाधारणं सामर्थ्यं शक्तिः प्रभाव इति यावत् यस्य तथाभूतः। वैकर्त्तनकुमारः विकर्त्तनः सूर्य्यः तस्यापत्यं पुमान् वैकर्त्तनो दशरथः तस्य कुमारः।

(श) शरीरनिर्माणसदृशो ननु अस्य अनुभावः इति सं। शरीरस्य निर्माणं घटनं तत्सदृशः आकृतिसदृश इत्यर्थः। अनुभावः प्रभावः।

रामायेति। आर्य्यः जनकः यदि त्रैयम्बकस्य ऐश्वरस्य धनुष आरोपणेन हस्तेन उत्तोलनेन सीताकर्त्तृकेणेति भावः हेतुना। पुरा कस्मिंश्चित् कारणान्तरे धनुर्गृहसम्मार्जनाय राजमहिषीमादिश्य जनको बहिरगमत्। राजमहिषी तु स्वयं केनचित् कारणेन तदक्षमतया ज्येष्ठां दुहितरं सीतां तत्कर्मणि आदिदेश। सा तु धनुर्गृहं प्रविश्य वामेन हस्तेन धनुरुत्तोल्य तद् गृहं सुपरिष्कृतमकरोत। अथ जनकः धनुरर्चनार्थं तद्गृहं प्रविश्य धनुःस्थानपर्य्यन्तं सुपरिष्कृतं दृष्ट्वा सविस्मयः राजमहिषीमाकार्य्य पप्रच्छ। सा तु बालिकया असम्यक् परिष्कृतमिति मन्यमाना भयेन स्वस्यासामर्थ्यं निवे-

[ प्रविश्य तापसः ]

रावणपुरोहितः सर्वमायो नाम वृद्धराक्षसः प्राप्तः। स किल राजकार्य्याद् वः पश्यति।

कन्ये। हुं रक्खसो (ष)।

कुमा। महत् कौतुकस्थानम्।

राजविश्वामित्रौ। [ विमृश्य ] आः आगच्छतु।

[ तापसो निष्क्रान्तः ]

[ प्रविश्य राक्षसः ]

मातामहेन प्रतिषिध्यमानः
स्वयंग्रहान्माल्यवता दशास्यः।
अजोनिजां राजसुतां वरीतुं
मां प्राहिणोन्मैथिलराजधानीम् ॥ २८ ॥

दृष्टश्च तत्र यजमानः स राजा। तद्वचनात् कौशिककुशध्वजावनुसृतोऽस्मि (स)। [ इति परिक्रामति ]

---

दयामास। राजा ततः प्रभृति नेयं कन्या साधारणीति मत्वा तद्विवाहे तस्यैव धनुषो भङ्गं पणं चकारेति पुरातनी गाथा। अप्रतिकार्य्यम् अप्रतिविधेयं नान्यथाकरणीयमिति यावत् पणं तद्धनुर्भङ्गरूपमिति भावः यद्वा अप्रतिकार्य्यम् आरोपणेन मौर्वीसङ्गमनेन अभेद्यं दृतीया पणम् आरोपणाभिन्नं पणमित्यर्थः न अकरिष्यत् तदा पुण्यमहसे पवित्रतेजसे सदृशाय अनुरूपाय दाशरथिषु दशरथात्मजेषु चन्द्रमा तस्मै रामाय सीता दत्तैव अभविष्यत्। वसन्ततिलकं वृत्तं ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ २७ ॥

(ष) हुं राक्षसः। सं।

मातामहेनेति। मातामहेन माल्यवता स्वयंग्रहात् बलाद्ग्रहणादिति यावत प्रतिषिध्यमानः निवार्य्यमाणो दशास्यो रावणः अयोनिजां राजसुतां सीतामित्यर्थः वरीतुं याचितुं मां मैथिलराजधानीं मिथिलामित्यर्थः प्राहिणोत् प्रेषयामासेत्यर्थः। उपजातिवृत्तम् ॥ २८ ॥

(स) तत्र मिथिलायाम्। यजमानः यज्ञकर्मणि व्यापृतः। तद्वचनात् तस्य राज्ञः ः जनकस्येत्यर्थः वचनात्।

रामलक्ष्मणौ । [ सीतोर्मिले प्रति यथासंख्यम् आत्मगतम् ] तत् किमियममृतवर्त्तिरिव चक्षुः आप्याययति (ङ) ।

सीतोर्मिले । [ तथैव तौ प्रति ] किंत्ति सज्जइ इमस्सिं लोअणाणन्दे मे दिट्ठी (च) ।

रात्त । [ उपसृत्य दृष्ट्वा ] इयं सा अद्भुताकृतिः सीता । स्थाने देवस्य पत्नी । ऋषे ! नमस्ते । अपि अनामयं राज्ञः ? (क) ।

तौ । [ स्वागतम् ] इहास्यताम् ।

अपि प्रभोर्वः कुशलं तस्य यस्यार्चयत्यसौ ।
मूर्ध्ना स्खलत्किरीटेन शासनं पाकशासनः ? ॥ २८ ॥

रात्त । [ उपसृत्य ] कुशलं स्वामिनः । संदिष्टश्च वो महाराजेन ।

कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
रत्नं चेत् क्वचिदस्ति तत् परिणमत्यस्मासु शक्रादपि ।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं
बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च सम्बन्धिनः ॥ ३० ॥

---

(ङ) आप्याययति प्रीणाति ।

(च) किमिति सज्जते अस्मिन् लोचनानन्दे मे दृष्टिः । स । सज्जते लगति अनुरज्यते इति भावः ।

(क) स्थाने युक्तम् । देवस्य रावणस्य । अनामयं कुशलम् ।

अपीति । असौ पाको नामासुरः तस्य शासनः इन्द्रः स्खलन् पतन् किरीटो यस्मात् तादृशेन व्यस्तमुकुटेनेति भावः मूर्ध्ना शिरसा यस्य शासनम् आज्ञाम् अर्चयति वहतीति भावः तस्य वः युष्माकं प्रभोः रावणस्य अपि कुशलम् ? मङ्गलं किम् ? ॥ २८ ॥

कन्यारत्नमिति । अयोनिजन्म अयोनिजं कन्यारत्नम् उत्कृष्टा कन्येत्यर्थः, जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते इति कोषः । भवताम् आस्ते तिष्ठति, वयम् अर्थिनश्च याचका एव, क्वचित् प्रदेशे रत्नम् अस्ति चेत् तत् रत्नं शक्रादपि यत्र पञ्चमी शक्रं त्यक्त्वापीत्यर्थः

सीता । हद्धी ! हद्धी ! रक्खसो मं पत्थेदि (ख) ।

ऊर्म्मि । कहं एव्वं (ग) ।

राजविश्वामित्रौ । [ चिन्तयतः ]

लक्ष्म । [ जनान्तिकम् ] * (घ) आर्य्य ! आर्य्य ! किं न पश्यसि निशाचरपतिर्देवीमिमां प्रार्थयते ? .

राम: । वत्स !

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते ।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः ॥ २१ ॥

लक्ष्म । अतिसौजन्यादार्य्यस्य तस्मिन्नपि निसर्गवैरिणि निशाचरे बहुमानः (ङ) ।

---

अस्मासु परिणमति उपतिष्ठते । ननु कन्या मया न कस्मैचिदपि दास्यते इति चेत्तत्राह कन्याया इति । कन्यायाश्च परार्थता परस्वता एव मता हि सिद्धैरित्यर्थः । तस्याः कन्यायाः प्रदानात् महान्निति शेषः अहं वः युष्माकं बन्धुः भविता भावी, भवतेः कर्त्तरि तृण्प्रत्ययः । पुलस्त्यपुलहाः पुलस्त्यपुलहयोः कुलजाः राक्षसा इत्यर्थः तेषु प्रष्ठाः अग्रगाः श्रेष्ठा इति यावत । पुलस्त्यकुलजश्रेष्ठा इति पाठान्तरम् । सम्बन्धिनश्च स्वजनाश्च भवितार इति शेषः । * शार्दूल-विक्रीड़ितं वृत्तम् ॥ २० ॥

(ख) हा धिक् ! हा धिक् ! राक्षसो मां प्रार्थयते इति सं ।

(ग) कथमेवमिति सं ।

(घ) त्रिपताककरेणान्यानपवार्य्यान्तरा कथा । अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् । स एव त्रिपताकः स्याद् वक्रितानामिकाङ्गुलिरिति च ।

साधारण्यादिति । अन्योऽपि इतरोऽपि जनः साधारण्यात् कन्यासु सर्वेषां समानाधिकारात् हेतोः निरातङ्कः निर्भयः सन् कन्यां याचते प्रार्थयते । जगतां जेता परमेष्ठिनः ब्रह्मणः प्रपौत्रः रावणः किं पुनः ? किं वक्तव्यमेतस्य प्रार्थनायामित्यर्थः । अर्थापत्तिरलङ्कारः । तदुक्तं दर्पणे । दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति । अनुष्टुब्-वृत्तम् ॥ २१ ॥

(ङ) निसर्गवैरिणि स्वभावशत्रौ ।

यो मस्त्रयीपरिध्वंसात् क्षात्रं तेजोऽपकर्षति ।
ऐक्ष्वाकं यश्च राजर्षिमनरण्यं किलावधीत् ॥ ३२ ॥

रामः । कामं शत्रुरिति वध्यः स्यात्र पुनरप्रमेयतपसमतिवीरमप्राकृतं प्राकृतवदर्हसि व्यपदेष्टुम् ? (च) ।

लक्ष्म । निरस्तवीरपुरुषाचारस्य का तस्य वीरता ? (छ)

रामः । वत्स ! मा मैवम् ।

यद्विद्वानपि तादृशोऽप्यभिजने धर्म्यात् पथो विच्युतः
किं ब्रूमोऽत्र ? तदन्यदेव न वसन्त्येकत्र सर्वे गुणाः ।
लीलानिर्जितषण्मुखाद्भगवतः श्रीजामदग्न्यादृते
निर्विघ्नप्रतिपन्नविश्वविजयो वीरस्तु कस्तादृशः ? ॥ ३३ ॥

---

य इति । यः त्रयीपरिध्वंसात् त्रय्या ऋग्यजुःसामरूपस्य वेदत्रयस्य परिध्वंसः उन्मूलनं तदुदिताचारविहिंसनमिति भावः तस्मात् नः अस्माकं क्षात्रं क्षत्रियसम्बन्धि तेजः प्रतापं श्रुतिविहितधर्मप्रतिपालकमिति भावः अपकर्षति भ्रंशयति नाशयतीत्यर्थः । यश्च ऐक्ष्वाकम् इक्ष्वाकुकुलजं राजर्षिम् अनरण्यम् अवधीत् किलेति प्रसिद्धौ । पुरा दिग्विजयाय निर्गतो दशाननः अयोध्यामेत्य वृद्धम् अनरण्यम् अन्याययुद्धेन हतवानिति रामायणवार्त्ता । वाल्मीकिरामायणस्य उत्तराकाण्डे १९ सर्गे विस्तरस्तु द्रष्टव्यः । अनुष्टुब्वृत्तम् ॥ ३२ ॥

(च) अप्रमेयतपसम् अप्रमेयं प्रमातुमशक्यं तपः कठोरव्रतं दशमस्तककर्त्तनेनाग्निइष्टतोषणरूपमिति भावः यस्य तथाभूतम् । अप्राकृतम् अलौकिकशक्तिमिति यावत् । प्राकृतवत् सामान्यजनवत् । व्यपदेष्टुं निर्देष्टुं कीर्त्तयितुमिति यावत् ।

(छ) निरस्तेति निरस्तः त्यक्तः वीरपुरुषस्य आचारः धर्मपथप्रवृत्तिरूपः येन तादृशस्य ।

यदिति । विद्वानपि कृतक्रियोऽपि तादृशे अतिमहतीति भावः अभिजने कुलेऽपि ब्रह्मवंशप्रसूतावपीति भावः धर्म्यात् धर्मादनपेतात् पथः सदाचारादित्यर्थः विच्युतः विभ्रष्टः इति यत् अत्र किं ब्रूमः किं कथयामः ? तत् धर्म्यमार्गात् भ्रंशनम् अन्यदेव अन्यहेतुकमेवेति भावः । सर्वे गुणाः एकत्र एकस्मिन् जने न वसन्ति । लीलया अवहेलया निर्जितः षण्मुखः षडाननः कार्त्तिकेयः येन तथाभूतात् भगवतः श्रीजामदग्न्यात् श्रीपरशु-

राक्ष । ननु भोः । किमत्र चिन्त्यते ?

द्राङ्‌निष्पेषविशीर्णवज्रशकलप्रत्युप्तरूढव्रण-
ग्रन्थ्युल्लासिनि भङ्गमोघमघवन्मातङ्गदन्तोद्यमे ।
भर्त्तुर्नन्दनदेवताविरचितस्रग्दाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु ॥ २४ ॥

[ नेपथ्ये कलकलः ]

राजा । भगवन्! य एते यज्ञे उपनिमन्त्रिताः पुत्रदारैः सह दिग्भ्यो महर्षयः सम्पतन्ति तत एवाक्रन्दकलिलः कलकलः (ज) ।

[ सर्वे उत्तिष्ठन्ति । ]

लक्ष्म । का पुनरियम् ?—

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।

---

रामात् ऋते विना निर्विघ्नं यथा तथा प्रतिपन्नः प्राप्तः विश्वेषां जगतां विजयो येन तथाभूतः तादृशः वीरस्तु कः ? न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

द्रागिति । भूमेः सुता जानकी द्राक् झटिति निष्पेषेण चूर्णनेन विशीर्णस्य दलितस्य वज्रस्य इन्द्रेण प्रहितस्येति भावः शकलैः खण्डैः प्रत्युप्तेन निखातेन भावे क्तप्रत्ययः रूढानि जातानि यानि व्रणानि क्षतानि तेषां ग्रन्थिभिः किणैरिति भावः उल्लासते विराजते इति तथोक्ते भङ्गेन मोघः विफलः मघवतः इन्द्रस्य यः मातङ्गः हस्ती ऐरावत इत्यर्थः तस्य दन्तोद्यमः दन्तप्रहारः यस्मिन् तथाभूते नन्दनं देवोद्यानं तस्य देवता तदधिष्ठात्री देवी तया विरचितं गुम्फित्वा दत्तमिति यावत् स्रग्दाम माल्यभूषणं यस्मिन् तथाविधे जगद्वीरस्य त्रिभुवनैकवीरस्य तस्य भर्त्तुः स्वामिनो रावणस्य वक्षसि वीरश्रीरिव विश्राम्यतु सुखिता तिष्ठतु । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

(ज) तत एव तस्मादेव महर्षीणां सम्पतनादित्यर्थः । आक्रन्दकलिलः आक्रन्दः उच्चैर्नादः तेन कलिलः युक्तः । कलकलः कलरवः ।

पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ३५ ॥

विश्वा । सेयं सुकेतोर्दुहिता भार्य्या सुन्दासुरस्य च ।
मारीचजननी घोरा ताटका नाम राक्षसी ॥ ३६ ॥

कन्ये । ताद ! ताद ! भीषणा हदासा (झ) ।

राजा । मा भैष्टमायुष्मत्यौ ।

विश्वा । [ रामं चिवुके स्पृशन् ] वत्स ! हन्यतामियम् ।

सीता । हद्धी ! हद्धी ! एसा एव्व एत्थ णिउत्तो (ञ) ।

रामः । भगवन् ! स्त्री खल्वियम् (ट) ।

ऊर्मि । सुदं अज्जाए एदं (ठ) ।

---

अन्त्रैरिति । अन्त्रैः शिराभिः प्रोतानि गुम्फितानि वृहन्ति कपालानि नरशिरोऽस्थीनि एव नलकवत् नलाख्यतृणवत् क्रूरं परुषं यथा तथा क्वणन्ति स्वनन्ति कङ्कणप्रायाणि कङ्कण-बहुलानि प्रेङ्खितानि आन्दोलितानि भूरीणि प्रभूतानि यानि भूषणानि तेषां रवैः अम्बरम् आकाशम् आघोषयन्ती ध्वनयन्ती तथा पीतच्छर्दितेन पीतोद्वान्तेन रक्तकर्दमेन शोणित-पङ्केन घनः सान्द्रः व्याप्त इति यावत् प्राग्भारः विस्तारः आभोग इति यावत् तेन घोरम् उग्रं यथा तथा उल्लसन् उल्लासमानः व्यालोलः प्रलम्बः यः स्तनभारः तेन भैरवं भीषणं वपुः शरीरं यस्याः तथाभूता दर्पेण उद्धतम् उत्कटं यथा तथा धावति आगच्छति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३५ ॥

सेयमिति । सा इयं सुकेतोः गन्धर्वभेदस्य दुहिता कन्या सुन्दो नाम असुरः तस्य भार्य्या मारीचो नाम राक्षसः तस्य जननी घोरा दारुणा ताटका नाम राक्षसी । अनु-ष्टुब् वृत्तम् ॥ ३६ ॥

(झ) तात ! तात ! भीषणा हताशेति सं । भीषणा इयं हताशा निराशा भवत्विति शेषः ।

(ञ) हा धिक् ! हा धिक् ! एष एव अत्र नियुक्तः । एष रामः अस्य ताड़कावधे ।

(ट) स्त्रीति स्त्रीजातिरवध्येति भावः ।

(ठ) श्रुतमार्य्यया एतत् ।

सीता। [सविस्मयानुरागम्] अम्मदोभुदो एव्व से चित्त-भेदो (ड)।

राजा। साधु सत्यमैक्ष्वाको रामभद्रः (ढ)।

राक्षः। अयं स रामो दाशरथिः। य एषः—

उत्तालताटकोत्पातदर्शनेऽप्यप्रकम्पितः।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सते ॥ ३७ ॥

विश्वा। त्वरतां वत्स! किं न पश्यति ब्राह्मणजनस्य महतः सङ्घातं बहुमन्यतः? (ण)।

रामः। एवं भवन्तो जानन्ति (त)।

सर्वदोषानभिष्वङ्गादाम्नायसमतां गताः।
युष्माकमभ्युपगमाः प्रमाणं पुण्यपापयोः ॥ ३८ ॥

[इति परिक्रम्य निष्क्रान्तः।]

---

(ड) अन्यतो भूतोऽस्य चित्तभेदः सं। अस्य रामस्य चित्तभेदः मनोभङ्गः राक्षसीं प्रति विद्वेषबुद्धिरिति यावत् अन्यतः अन्यथा भूतः स्त्रीत्वाद् जिघांसावृत्तिः स्थगितेति भावः।

(ढ) सत्यमैक्ष्वाक इति इक्ष्वाकुकुलजानां शिष्टाचारानुवर्तित्वात् शिष्टाचारे च स्त्रीवधस्य विगर्हितत्वादिति भावः।

उत्तालेति। उत्ताला तालवृक्षादपि उन्नतेत्यर्थः या ताड़का सैव उत्पातः तया उत्पातो वा दर्शनेऽपि अप्रकम्पितः अविचलितः तस्याः प्रमाथाय विध्वंसाय नियुक्तः प्रेरितः विश्वामित्रेणेति शेषः स्त्रैणेन स्त्रीत्वेन ताड़कायाः इति शेषः विचिकित्सते संशेते हन्यां न वेति सन्देग्धीत्यर्थः ॥ ३७ ॥

(ण) सङ्घातं समूहम् अनया बाध्यमानमिति शेषः यद्वा सङ्घातं हत्याम् अनया क्रियमाणमिति शेषः।

(त) एवं भवन्तो जानन्ति युक्तमयुक्तं वेदमिति शेषः।

सर्वेति। युष्माकम् अभ्युपगमाः आदेशा इत्यर्थः सर्वेषां दोषाणाम् अनभिष्वङ्गात् अस्पर्शात् आम्नायस्य वेदस्य समतां तुल्यतां गताः अतएव पुण्यपापयोः प्रमाणं व्यवस्थापकत्वेन स्थिता इति यावत्। भवदाज्ञयाहमेनां हन्मीत्याशयः। अनुष्टुब्वृत्तम् ॥ ३८ ॥

सीता । अम्मो ! परागदो एव्व । हद्धी ! हद्धी ! उप्पाद-वादालो विअ इदाआ महाणुभावं अभिद्दवदि (थ) ।

राजा [ धनुरास्फाल्य ] आः पापे ! तिष्ठ तिष्ठ ।

ऊर्मि । अए ! दाणिं सअं एव्व तादो पत्थिदो (द) ।

लक्ष्म । [ विहस्य ] पश्यन्तु भवन्तस्ताटकाम्—

हृन्मर्म्मभेदिपतदुत्कटकङ्कपत्र-
संवेगतत्क्षणक्षतस्फुरदङ्गभङ्गा ।
नासाकुटीरकुहरद्वयतुल्यनिर्य्य-
दुद्बुद्बुदध्वनदसृक्प्रकरा मृतैव ॥ ३९ ॥

कन्ये । अच्चरिअं ! अच्चरिअं ! प्पिअं णो (ध) ।

राजा । अहो ! दृढ़प्रहारिता राजपुत्रस्य ।

राम । हा आर्य्ये ताटके ! किं हि नामैतत् ? अम्बुनि मज्जन्त्यलावूनि ग्रावाणः प्लवन्त इति (न) ।

---

(थ) अहो परागत एव । हा धिक् ! हा धिक् ! उत्पातवातालीव इमाश्चा महानुभावम् अभिद्रवति सं । परागतः प्रस्थितः अस्याः बधार्थमिति भावः । उत्-पाते प्रलये वातालीव वात्येव । महानुभावं महाप्रभावं राममिति शेषः । अभिद्रवति अभिधावति ।

(द) अये ! इदानीं स्वयमेव तातः प्रस्थितः सं ।

हृन्मर्मेति । हृत् हृदयमेव मर्म सन्धिस्थानविशेषः यत्र प्रहारेण मृत्युः स्यादिति भावः तस्य भेदी विदारकः पतन् उत्कटः दारुणः यः कङ्कपत्रः शरः तस्य संवेगेन सम्वेधेन तत्क्षणात् क्षतः स्फुरतां प्रचलताम् अङ्गानां भङ्गः पातनं यस्याः तथाभूता तथा नासाकुटीरस्य नासिकारूपक्षुद्रगृहस्य कुहरद्वयात् विवरयुगलात् तुल्यं समं यथा तथा निर्य्यन् निर्गच्छन् उद्गता बुद्बुदाः स्फीटविशेषा यत्र तद् यथा तथा ध्वनन् असृक्प्रकरः शोणितनिवहः यस्याः तथोक्ता एव मृता । वसन्ततिलकं वृत्तम् ॥ ३९ ॥

(ध) आश्चर्य्यम् ! आश्चर्य्यम् ! प्रियं नः । इति सं ।

(न) अलावूनि तुम्बीफलानि । ग्रावाणः प्रस्तराः ।

नन्वद्य राक्षसपतेः स्खलितः प्रतापः
प्राप्तो नवः परिभवोऽद्य मनुष्यपोतात्।
दृष्टः स्थितेन च मया स्वजनप्रमारो
दैन्यं जरा च निरुणद्धि कथं करोमि ॥ ४० ॥

विश्वा। एष तावदोङ्कारः (प)।

राज। अपि भोः! किमस्मासु वः प्रतिवचनम्?

विश्वा। अत्र सीरध्वजो वेत्ता कनिष्ठो हि कुशध्वजः।
अस्याः पिता हि कन्यायाः कुलज्येष्ठः प्रभुश्च नः ॥४१॥

राज। सोऽप्याह कुशध्वजो जानाति विश्वामित्रश्चेति।

विश्वा। [स्वगतम्] अस्यायमवसरो दिव्यास्त्रमङ्गलानां दानस्य वर्त्तते च मङ्गल्यो मुहूर्त्तः [प्रकाशम्] सखे कुशध्वज! मया हि कृशाश्वात् गुरुचर्य्याव्रतैरधिगतस्य सरहस्यजृम्भक-प्रयोगसंहारस्य दिव्यास्त्रमन्त्रपारायणस्य विद्यातत्त्ववीजानि तत्प्रसादादर्थितश्च प्रभ्वतश्च रामभद्रस्य सम्प्रति प्रकाश्यन्ते (फ)।

---

नन्विति। ननु भोः! अद्य राक्षसपतेः प्रतापः स्खलितः पतितः क्षीणतां गत इति यावत्। अद्य मनुष्यपोतात् मानवशिशोः सकाशात् नवः अपूर्व्व इति भावः परिभवः पराजयः प्राप्तः उपस्थितः। मया स्थितेन च अत्रेति शेषः स्वजनस्य आत्मीय-जनस्य ताड़काया इति भावः प्रमारः वधः दृष्टः। दैन्यं दीनभावः असामर्थ्यमित्यर्थः जरा वार्द्धकञ्च निरुणद्धि निवारयति मामिति शेषः। कथं करोमि? वसन्ततिलकं वृत्तम् ॥ ४० ॥

(प) ओङ्कारः प्रथम इति यावत् राक्षसपरिभव इति शेषः।

अत्रेति। अत्र प्रतिवचने सीरध्वजो जनकः वेत्ता ज्ञाता भवत्प्रतिवचनं किं स एव जानातीत्यर्थः। हि यतः कुशध्वजः कनिष्ठः अनुजः। अस्याः कन्यायाः पिता हि कुलज्येष्ठः नः अस्माकं प्रभुश्च ॥ ४१ ॥

(फ) अस्येति। अस्य दिव्यास्त्राण्येव मङ्गलानि तेषां दानस्य रामायेति शेषः अयम् अवसरः समयः। मङ्गल्यः माङ्गलिकः। मुहूर्त्तः समयः कृशाश्वात् तदाख्यात् महा-

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परः सहस्राः शरदस्तपांसि ।
एतान्यदर्शन् मुनयः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ ४२ ॥

राजा । अनुगृहीतं रघुकुलम् ।

लक्ष्म । दिष्ट्या देवदुन्दुभिध्वनिः पुष्पवृष्टिश्च ।

राम । आः दिवौकसोऽपि राजविरुद्धमनुमोदन्ते (ब) ।

लक्ष्म । कथम् ?

झटित्येवोत्तप्तद्रुतकनकसिक्ता इव दिशः
पिशङ्गत्वात् सन्ध्यान्तरित इव निर्भाति दिवसः ।
ज्वलत्केतुव्रातस्थगितमिव दिव्यास्त्रनिचयैः
नभो नैरन्तर्यप्रचलिततडित्पिञ्जरमिव ॥ ४३ ॥

---

मुनेरित्यर्थः । गुरुचर्य्याव्रतैः गुरौ गुरुकुले इत्यर्थः चर्य्या ब्रह्मचर्य्यमित्यर्थः तत्र यानि व्रतानि नियमाः तैः गुरुसेवाविशेषैरिति भावः अधिगतस्य प्राप्तस्य सरहस्यः सतत्त्वः जृम्भकाणां तदाख्यानाम् अस्त्रविशेषाणां प्रयोगः संहारश्च यत्र तथाभूतस्य दिव्यास्त्राणां मन्त्रपारायणस्य आद्योपान्तसमग्रमन्त्रजातस्येत्यर्थः विद्यातत्त्वबीजानि विद्याविज्ञानं तत्त्वाः तत्त्वं याथार्थ्यं तात्पर्य्यमित्यर्थः तस्य बीजानि हेतवः । तत्प्रसादात् तस्य कृशाश्वस्य प्रसादात् अनुग्रहात् ।

ब्रह्मादय इति । पुराणा मुनयः ब्रह्मादयः ब्रह्मणो वेदस्य हिताय उपकाराय वेदविरोधिनाम् असुराणां वधेन रक्षणायेति भावः परः सहस्राः सहस्राधिकाः शरदः वत्सरान् तपांसि कठोरव्रतानि तप्त्वा अनुष्ठाय स्वानि निजानि तपोमयानि तेजांस्येव एतानि दिव्यास्त्राणि अदर्शन् प्रापुरिति यावत् । उपजातिवृत्तम् ॥ ४२ ॥

(ब) राजविरुद्धं राज्ञः रावणस्य विरुद्धं प्रतिकूलमिति यावत् अनुमोदन्ते अनुसरन्तीत्यर्थः दिवौकसोऽपि राजविरुद्धमित्यनेन देवानां रावणस्य राज्ञः वशीभूतत्वं प्रजात्वञ्च गम्यते ।

झटितीति । दिव्यास्त्राणां निचयैः समवायैः तत्सम्पातहेतुभिरित्यर्थः । झटित्येव सहसैव दिशः उत्तप्तैः ज्वलितैः अतएव द्रुतैः गलितैः कनकैः काञ्चनैः सिक्ता इव क्षालिता

तेजोभिर्दिशि दिशि विश्वतः प्रदीप्तै-
रादित्यद्युतिमवधीर्य विस्फुरद्भिः ।
पर्य्यायत्वरितगृहीतविप्रयुक्तं
सामर्थ्यं रहयति तापनो मयूखः ॥ ४४ ॥

कन्ये । समंतदो पज्जलिदविज्जुपुञ्जपिञ्जरेण उक्कमंति विअ लोअणाइं पहावणिप्फंदेण (भ) ।

राम । अहो ! दुरासदं दिव्यास्त्रतेजः । संस्त्यायता येन रावणपुरन्दरद्वन्द्वसंरम्भं स्मारितोऽस्मि (म) ।

---

इव । दिवसः पिशङ्गत्वात् पिञ्जरत्वात् सन्ध्यया अन्तरित इव मिश्रित इव निर्भाति निःशेषेण अवभासते । नभः आकीर्णं ज्वलतां केतूनां धूमकेत्वाख्योत्पातविशेषाणां व्रातैः सङ्घैः स्थगितमिव व्याप्तमिव । तथा नैरन्तर्य्येण सातत्येन प्रचलिताभिः स्फुरिताभिः तडिद्भिः विद्युद्भिः पिञ्जरमिव कृष्णपीतादिमिश्रवर्णमिव जातमिति शेषः । उत्प्रेक्षालङ्कारः । शिखरिणीवृत्तम् ॥ ४३ ॥

तेजोभिरिति । तपनस्य अयं तापनः सौर इत्यर्थः मयूखः आलोकः विश्वतः समन्तात् दिशि दिशि प्रदीप्तैः आदित्यद्युतिं सौरीं प्रभाम् अवधीर्य्य अवज्ञाय विस्फुरद्भिः प्रसरद्भिः तेजोभिः ज्योतिर्भिः पर्य्यायेण परम्पराक्रमेण त्वरितं अचलितं स्फुरितमिति यावत् गृहीतं कवलितं विप्रयुक्तं विमिश्रितं सामर्थ्यं स्वप्रभावं रहयति त्यजयति सङ्कोचयतीत्यर्थः । सूर्य्यतेजः प्रथममस्त्रतेजसा स्फुरितं ततः समाक्रान्तं ततश्च संमिश्रितमिति भावः । प्रहर्षणीवृत्तं त्र्याशाभिर्मनजरगाः प्रहर्षणीयमिति तल्लक्षणात् ॥ ४४ ॥

(भ) समन्ततः प्रज्वलितविद्युत्पुञ्जपिञ्जरेण उत्क्रामन्त इव लोचनानि प्रभावनिष्पन्देन स ।

प्रभावेण स्वसामर्थ्येन निष्पन्दः निश्चलः दीर्घकालस्थायीत्यर्थः तेन विद्युत्स्फुरणमिवास्य तेजसः स्फुरणं न क्षणिकमपि तु दीर्घकालस्थायीति भावः । प्रज्वलितानां विद्युत्पुञ्जानां पिञ्जरेण कृष्णपीतादिमिश्रवर्णेन लोचनानि नयनानि उत्क्रामन्त इव प्रतिहन्यत इव ।

(म) संस्त्यायता सम्यग्वृद्धिं गच्छता । रावणपुरन्दरेति रावणस्य पुरन्दरस्य तयोः द्वन्द्वः संरम्भः परस्परसंयुगसङ्कोपं, संरम्भः संभ्रमे कोपे इत्यमरः ।

सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्ष-
स्तत्सङ्घट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः।
एवं वेगात् कुलिशमकरोद्व्योम विद्युत्सहस्रैः
भर्तुर्वक्त्रज्ज्वलनकपिशास्ते च रोषाट्टहासाः॥ ४५॥

विश्वा। अभिवन्दस्व विसर्जय च रामभद्र! दिव्यास्त्राणि।

ब्रह्मेन्द्रद्रविणेशरुद्रवरुणप्राचीनबर्हिर्मरुत्-
कालाग्निव्यतिरेकिणां भगवतामाम्नायमन्त्रात्मनाम्।
एतेषां तपसामिवाप्रतिरथैस्तेजोभिरुत्कर्षिणा-
मेकैकस्य जगत्त्रयप्रमथनत्राणावधिर्योग्यता॥ ४६॥

[ नेपथ्ये ]

एष प्रह्वोऽस्मि भगवन्नेषा विज्ञापना च नः।
दिव्यास्त्रसम्प्रदायोऽयं लक्ष्मणेन सहास्तु मे॥ ४७॥

---

सर्वेति। सर्वैः प्राणैः बलैः प्रवणेन विकटेन मघवता इन्द्रेण मुक्तं प्रहितं रावणायेति भावः कुलिशं वज्रं वक्षः उरस्थलं रावणस्येति भावः आहत्य तस्य वक्षसः सङ्घट्टात् सङ्घर्षणात् विघटिताः कृता बृहन्तः खण्डाः यस्य तथोक्तं खण्डखण्डीकृतमित्यर्थः। अतएव उच्चण्डा रोचिषः ज्वालाः यस्य तथाभूतं सत् वेगात् सहसेत्यर्थः विद्युतां सहस्रैः व्योम आकाशम् एवम् इत्थम् एतद्दिव्यास्त्रज्योतिःप्रज्वलितमिवेति भावः अकरोत्। भर्तुः प्रभोः रावणस्य वक्त्रेभ्यः वदनेभ्यः ज्वलनवत् अग्निवत् कपिशाः पीतरक्तोज्ज्वलाः ते रोषेण क्रोधेन अट्टहासाः उच्चैर्हासाः च व्योम विद्युत्सहस्रैः एवम् अकुर्वन्निति वचनव्यत्ययेनान्वयः॥४५॥

ब्रह्मेति। ब्रह्मा इन्द्रः द्रविणेशः धनपतिः कुवेरः रुद्रः वरुणः प्राचीनबर्हिस्तदाख्यो नरपतिविशेषः मरुत् वायुः कालः यमः अग्निः एभ्यः व्यतिरेकीणि विभिन्नानि तेषां भगवतां सर्वशक्तिमताम् आम्नायो वेदः तस्य मन्त्राः एव आत्मानः स्वरूपाणि येषां तथोक्तानां तपसामिव अप्रतिरथैः अप्रतिद्वन्द्विभिः तेजोभिः उत्कर्षिणाम् उत्कर्षमापन्नानाम् एतेषां दिव्यास्त्राणाम् एकैकस्य प्रत्येकस्य जगत्त्रयस्य त्रिभुवनस्य प्रमथनं विध्वंसनं त्राणं रक्षणञ्च अवधि सीमा यस्याः तादृशी योग्यता शक्तिः। एषामेकैकमस्त्रं जगन्ति ध्वंसयितुं वा ध्वंसकेभ्यो रक्षितुं शक्नोतीति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम्॥ ४६॥

एष इति। हे भगवन्! एषः अहं प्रह्वः प्रणतः अस्मि नः अस्माकम् एषा

विश्वा। रामभद्र! एवमस्तु।

लक्ष्म। अहो! प्रसादः।

झटित्युन्मीलितप्रज्ञमप्रतर्क्यैश्च शक्तिभिः।
ज्योतिर्मयमिवात्मानं मन्ये विद्याप्रकाशनात्॥ ४८॥

[ नेपथ्ये ]

राम! राम! महाबाहो! वयं त्वय्यायतामहे।
विश्वामित्राभ्यनुज्ञानात् सह भ्रात्रा प्रशाधि नः॥ ४९॥

कन्ये। देवदाओ मंते ति अहो अच्चरिअं! अच्चरिअं! (य)

[ नेपथ्ये ]

भगवन्तो दिव्यास्त्रनिकायाः! (र)

विश्वामित्रात् प्राप्य विश्वस्य मित्रात्
पुण्यैर्युष्मानद्य रामः कृतार्थः।
ध्यातैर्ध्यातैः सन्निधेयं भवद्भिः
स्वं स्वं स्थानं यात यूयं नमो वः॥ ५०॥

---

विज्ञापना च प्रार्थना चेति यावत्। अयं दिव्यास्त्राणां सम्प्रदायः समवायः लक्ष्मणेन सह मे मम अस्तु भवतु। अहं लक्ष्मणश्च एतेषु अधिकारी भवानीति निष्कर्षः॥ ४७॥

झटितीति। विद्यानां दिव्यास्त्रसम्बन्धिनीनामिति भावः प्रकाशनात् आत्मनि अनुरणादिति भावः आत्मानं झटिति उन्मीलिता उल्लासिता प्रज्ञा यस्य तथोक्तं शक्तिभिः सामर्थ्यैः न प्रकर्षेण तर्क्यते निर्णीयते इति अप्रतर्क्यं दुरासदमिति भावः अतएव ज्योतिर्मयमिव तेजोमयमिव मन्ये सम्भावयामि। उत्प्रेक्षालङ्कारः। अनुष्टुब्वृत्तम्॥ ४८॥

रामेति। हे राम राम महाबाहो! वयं त्वयि आयतामहे सम्यक् वर्त्तामहे इत्यर्थः त्वदधीनाः स्म इति यावत् विश्वामित्रस्य अभ्यनुज्ञानात् अनुमोदनात् भ्रात्रा लक्ष्मणेन सह नः अस्मान् प्रशाधि प्रकर्षेण आज्ञापय कर्मणीति भावः। अनुष्टुब्वृत्तम्॥ ४९॥

(य) देवताः मन्त्रयन्ति अहो आश्चर्य्यम्! आश्चर्य्यम्! इति सं॰ मन्त्रयन्ति आलपन्ति।

(र) दिव्यास्त्रनिकायाः दिव्यास्त्रसमुदायाः।

विश्वामित्रादिति। अद्य रामः पुण्यैः सुकृतैः हेतुभिः विश्वस्य जगतो मित्रात्

लक्ष्म। आर्य्यवचनादन्तरितानि अस्त्राणि (त)

राजा। भगवन्! महाद्भुतनिधे! कुशिकनन्दन! नमस्ते।

ज्वलिततपसस्तेजोराशेर्जगत्यमितौजस-
स्तव निरवधौ माहाभाग्ये कृतस्तुतिसाहसः।
प्रमितविषयां शक्तिं विन्दन् वाचि न चेतसि
प्रतिहतपरिस्पन्दः स्तोता विषद्य हृणीयते॥ ५१॥

स्पृहयामि युष्मदनुगृहीतरामभद्रालङ्कृताय राज्ञे दश-रथाय। वयं पुनरार्य्येण वञ्चिताः यद् ईदृशेन जामात्रा न संयुज्यामहे (व)।

विश्वा। किमद्यापि असम्भावनेयमस्मासु (श)।

---

हितैषिण इति यावत् विश्वामित्रात् युष्मान् प्राप्य कृतार्थः सिद्धमनोरथः सञ्जात इति शेषः। भवद्भिः ध्यातैः ध्यातैः चिन्तितैश्चिन्तितैः स्मृतैः स्मृतैरित्यर्थः सन्निधेयम् उपस्थातव्यं मत्समीपमिति शेषः। यूयं स्वं स्वं स्थानम् आवासं यात गच्छत साम्प्रतमिति शेषः, वः युष्मभ्यः नमः प्रणतिरस्तु ममेति शेषः। शालिनीवृत्तम्॥ ५०॥

(त) आर्य्यवचनात् आर्य्यस्य रामस्य वचनात् वाक्यात्। अन्तरितानि तिरोभूतानि।

ज्वलितेति। ज्वलितं दीप्तं तपो यस्य तथोक्तस्य तेजोराशेः ज्योतिर्मयस्येत्यर्थः जगति भुवने अमितम् अपरिमितम् अतुल्यं वा ओजः तेजः शक्तिरित्यर्थः यस्य तथाभूतस्य तव निरवधौ अनन्ते माहाभाग्ये महति ऐश्वर्य्ये कृतं स्तुतौ प्रशंसने साहसं यस्य तथाविधः स्तोता जनः वाचि तथा चेतसि प्रमितविषयां पर्य्याप्तविषयां शक्तिं न विन्दन् न लभमानः अतएव प्रतिहतपरिस्पन्दः विहतवाक्प्रसर इति भावः। विषद्य विषण्णो भूत्वा न हृणी-यते? ग्लायते जनैरिति शेषः अपितु अवग्लायत एवेत्यर्थः। हरिणीवृत्तं, नसमर-सला गः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात्॥ ५१॥

(व) स्पृहयामि इच्छामि सङ्गत्यर्थमिति भावः आर्य्येण मान्येन जनकेनेति भावः। वञ्चिताः प्रतारिताः धनुर्भङ्गरूपपणबन्धेनेति भावः। ईदृशेन रामरूपेण।

(श) असम्भावना किम्? रामो जामाता भविष्यतीत्यत्र सम्भावना नास्ति किम्? अपितु सम्भावना अस्त्येवेत्यर्थः।

राजा। शान्तम् (घ)।

विश्वा। तेन हि—

शम्भोर्वरादनुध्यानमात्रोपस्थानदायि वः।
रामभद्रस्य पुरतः प्रादुर्भवतु तद्धनुः॥ ५२॥

राजा। एवमस्तु। [ध्यात्वा प्रणमति]।

राम। [स्वगतम्] एभिरन्यदेव किमपि प्रस्तुतम् (ङ)। [प्रकाशम्] भोः कुशध्वज! कियच्चिरं विचार्य्यते?

राजा। उक्तमेव। आर्य्यो जानातीति।

राम। प्रत्युक्तमेतत् सोऽप्याह कुशध्वजो जानातीति।

राजा। एवमेतत्।

[नेपथ्ये कलकलानन्तरम्]

स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः (५३)।

सीता। [अपवार्य्य] सम्मदं संसद्द ह्मि (च)।

विश्वा। [राजानं प्रति]

शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव * * * * * * (५३—अ)

---

(घ) शान्तम् असम्भावना दूरीभवत्विति भावः।

शम्भोरिति। शम्भोः हरस्य वरात् अनुध्यानमात्रेण स्मरणमात्रेण उपस्थानं सन्निधानं ददाति तथोक्तं वो युष्माकं तत् धनुः ऐश्वरं कार्मुकं रामभद्रस्य पुरतः अग्रतः प्रादुर्भवतु उपतिष्ठतु। अनुष्टुब् वृत्तम्॥ ५२॥

(ङ) प्रस्तुतं प्रक्रान्तम् आलपितं वा।

स्फूर्जदिति। त्रिपुरान्तकृत् त्रिपुरासुरघातकं दिविषदां देवानां तेजोभिः इद्धं प्रदीप्तम् अतएव स्फूर्जद्भिः ज्वलद्भिः वज्रसहस्रैः निर्मितमिव घटितमिव धनुः रामस्य अग्रतः प्रादुर्भवतु॥ ५३॥

(च) साम्प्रतं संशयितास्मि सं। संशयिता अभीष्टवरवामि इति भावः।

ऊर्मि । अवि णाम एव्वं भवे (घ) ।

राजा । * * * गर्जितगुणं क्रष्टच * * * (५३—आ) ।

ऊर्मि । [ हृष्टां लज्जितां सीतामालिङ्ग्य ] दिट्ठिआ वड्ढामो (ङ) ।

राजा । [ सानुतम् ] * * * * भग्नञ्च तत् (५३—इ) ।

रावण । [ स्वगतम् ] अहो ! दुरात्मनो रामहतकस्य सर्वङ्कष: प्रभाव: (च) ।

लक्ष्म । दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत:
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिम: ।
द्राक्‌पर्य्यस्तकपालसम्पुटमिलद्‌ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो ! नाद्यापि विश्राम्यति ॥५४

---

गुण्डार इति । कलमेन करिशावकेन अचले पर्वते गुण्डार: अपकृष्टगुण्ड इत्यर्थ:, अपकर्षे रप्रत्यय: । शावकत्वात् क्षुद्रगुण्ड इति भाव: यद्वत् यथा आधीयते इति शेष: तथा वत्सेन रामेण तस्मिन् धनुषि दोर्दण्डक: भुजदण्ड: आहित एव अर्पित एव ॥ ५३—अ ॥

(घ) अपि नाम एवं भवेत् सं ।

गर्जितेति । गर्जित: ध्वनित: गुणो मौर्वी यत्र तद् तथा यथा क्रष्टम् आक्रष्टञ्च ॥५३-आ

(ङ) दिष्ट्या वर्द्धामहे सं॰ ।

भग्नञ्च तत् तद्धनु: भग्नञ्च खण्डितञ्च । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५३—इ ॥

(च) सर्वङ्कष: सर्वातिरेकी सर्वातिशायीत्यर्थ: । प्रभाव: सामर्थ्यम् ।

दोर्दण्डेति । दोर्दण्डाभ्यां बाहुदण्डाभ्याम् अञ्चित: आकुञ्चित: य: चन्द्रशेखरस्य हरस्य धनुर्दण्ड: तस्य अवभङ्गेन दलनेन उद्धत: उत्थित: आर्य्यस्य रामस्य बालचरितं बाल्यलीला तस्य प्रस्तावना घोषणा तस्या डिण्डिम: वाद्यभेदध्वनिरिवेति भाव: टङ्कारध्वनि: द्राक् झटिति, द्राक् झटित्यञ्जसाह्नायेत्यमर: । पर्य्यस्तयो: परस्परोपरि पतितयोरिति यावत् टङ्कारवेगादिति भाव: कपालयो: ऊर्द्ध्वाधोऽवस्थितावयवविशेषयो: द्यावापृथिव्योरिति भाव: सम्पुटयोरन्योन्यावरणभूतयोरिति यावत् मिलत् सङ्गच्छत् ब्रह्माण्डमेव भाण्डम् आधारविशेष: । ब्रह्माण्डविवरमं मनुमीतम् । यथा, तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् । स्वयमेवात्मनो

राजा । [ सहर्षोन्मादमिव ]

एह्येहि वत्स रघुनन्दन रामचन्द्र !

चुम्बामि मूर्द्धनि चिराय परिष्वजे त्वाम् ।

आरोप्य वा हृदि दिवानिशमुद्वहामि

वन्देऽथवा चरणपुष्करकद्वयं ते ॥ ५५ ॥

[ प्रविश्य ] रामः । कथमतिवात्सल्यादतिक्रमोऽपि ? (ग)

विश्वा । गुरुर्भवान्, अर्भकरूपश्च ते वत्सो रामभद्रः (घ) ।

राजा । [ तं प्रणम्य ] भगवन् !

रामोपपत्त्या सीतायाः पूर्णास्ता युष्मदाशिषः ।

अभिषेकोत्सवे दत्ता लक्ष्मणाय मयोर्मिला ॥ ५६ ॥

कन्ये । [ सास्रम् ] अम्महे दिष्टिया (ङ) ।

रामः । [ स्वगतम् ] इष्टं द्रष्टव्यम् ।

---

ध्यानात्तदण्डमकरोद् द्विधा ॥ ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्ममे । मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतमिति । तस्य उदरे अभ्यन्तरे आत्मम् पूर्यमाणः पिण्डितः घनीभूतः महिमा प्रचण्डभावः यस्य तथाभूतः सन् कथम् अद्यापि न विश्राम्यति ? न उपशाम्यति ? अहो आश्चर्य्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

एह्येहीति । एहि एहि आगच्छ आगच्छ वत्स ! रघुनन्दन रामचन्द्र ! मूर्द्धनि शिरसि त्वां चुम्बामि चिराय परिष्वजे आलिङ्गामि । ते तव चरणपुष्करकद्वयं पदपङ्कजयुगलं हृदि आरोप्य दिवानिशं वा उद्वहामि अथवा वन्दे प्रणमामि वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ ५५ ॥

(ग) अतिक्रमः गुरुजनस्यापि अस्मच्चरणवन्दनकथनरूप इति भावः ।

(घ) अर्भकरूपः बालकरूपः पुत्ररूप इत्यर्थः ।

रामेति । रामस्य उपपत्त्या लाभेन सीतायाः ताः युष्माकम् आशिषः इष्टार्थाशंसनरूपा इति शेषः पूर्णाः सिद्धाः । अभिषेके उत्सवे सीताया मङ्गलस्नाने मया लक्ष्मणाय ऊर्मिला दत्ता । अनुष्टुब्वृत्तम् ॥ ५६ ॥

(ङ) अहो दत्ते स्वः स्वः ।

विश्वा। सुष्ठु शिरसा वहुमन्यामहे। वक्तव्यशेषस्तु पवि (च)।

राजा। ननु! आज्ञापय।

विश्वा। दुहितरौ ते माण्डवी श्रुतकीर्त्तिश्च भरतशत्रुघ्ना-भ्यामर्थये।

राजा। [स्वगतम्] पश्यत वनेचरस्य सतः चत्रियै कुटुम्ब-वैजात्यं ब्राह्मणस्य (छ)।

राजा। भगवन्! किमत्र किञ्चिद्विचार्य्यमस्ति? किन्तु अत्र वस्तुनि परवानस्मि (ज)।

विश्वा। केन?।

राजा। एकेन तावद्भवतैव।

विश्वा। अथान्येन केन?

राजा। आर्य्यसीरध्वजेन गौतमेन शतानन्देन च।

विश्वा। [अपहसन्] सीरध्वजशतानन्दयोरहं विवेक्ता (झ)।

राजा। भगवान् इदानीं जानाति—

जनकानां रघूणाञ्च सम्बन्धः कस्य न प्रियः?।
यत्र दाता ग्रहीता च कल्याणप्रकृतिर्भवान्॥ ५७॥

---

(च) सुष्ठु शोभनं भवता लक्ष्मणाय ऊर्म्मिलादानमिति भावः। मन्यावहे आद्रियामहे। वक्तव्यशेषः वक्तव्यः शेषः यस्मिन् तथोक्तः।

(छ) पश्यत अवलोकयत यूयमिति मनःकल्पितजनान् प्रत्युक्तिः। वनेचरस्य अरण्यवासिनः। कुटुम्बवैजात्यं वितरां वन्धुत्वमिति यावत्।

(ज) अत्र वस्तुनि माण्डवीश्रुतकीर्त्योर्दाने इति यावत्। परवान् पराधीनः।

(झ) विवेक्ता विचारकः कार्य्याध्यक्ष इति भावः।

जनकानामिति। जनकानां विदेहवंश्यानां रघूणां रघुवंशीयानाञ्च सम्बन्धः यौन इति शेषः कस्य जनस्य न प्रियः? अपितु सर्वस्यैव प्रिय इत्यर्थः। यत्र सम्बन्धे कल्याणी शुभा प्रकृतिः स्वभावो यस्य तथाभूतो भवान् दाता च ग्रहीता च दानकर्त्ता च ग्रहणकर्त्ता, च उभयोरपि वंशयोर्भवदधीनत्वादिति भावः। अनुष्टुप् वृत्तम्॥ ५७॥

विश्वा। वत्स शुन:शेफ! (ज) अयोध्यां गत्वा ब्रूहि भगवन्तमस्मद्वचनाद् वशिष्ठम्।

एताश्चतुर्भ्यो रघुनन्दनेभ्यो निमेर्गृहे राजसुताश्चतस्रः।

वशिष्ठवद्गौतमवच्च भूत्वा दत्ताः प्रतीष्टाश्च समं मयैव ॥५८॥

तदा उपनिमन्त्र्य सर्वान् महर्षीन् महाराजदशरथस्यानुयातो वैदेहनगरमागच्छ। तदा मम मैथिलस्य च राज्ञो यज्ञसमाप्तौ विततगोदानमङ्गलाः कुमाराः परिणेष्यन्तीति (ट)।

कुमा। [ स्वगतम् ] प्रियात् प्रियतरं नः।

कन्ये। दिट्ठिआ अविप्पवासो दाणिं भइणिआणं भविस्सदि (ठ)।

राज। अद्यापि भोः! शृणुत धर्माचरम् (ड)। अनर्थ एव वो यत् कन्येयमन्यस्मै दीयत इति।

पौलस्त्येऽपि नयेन याचत इति श्लाघ्येऽपि वो नादरः

सम्बन्धे सति यत् त्रिलोकपतिना सख्यं न तत्र स्पृहा।

---

(ज) ऋचीकात्मजः शुन:शेफनामा विश्वामित्रशिष्यः।

एता इति। निमेः गृहे एताश्चतस्रः राजसुताः सीता ऊर्मिला माण्डवी श्रुतकीर्त्तिरित्याख्याता इति शेषः चतुर्भ्यः रघुनन्दनेभ्यः रामलक्ष्मणभरतशत्रुघ्नेभ्य इति शेषः उद्दिश्येत्यर्थः तादर्थ्ये चतुर्थी। मया वशिष्ठवत् गौतमवत् शतानन्दवच्च भूत्वा सममेव युगपदेव प्रतीष्टाः गृहीताः दत्ताश्च। अहं गौतमो भूत्वा रामाद्युद्देशेन कन्या इमाः दत्तवान् वशिष्ठश्च भूत्वा गृहीतवानिति निष्कर्षः। उपजाति वृत्तम् ॥ ५८ ॥

(ट) तदेति। तदा भवतामिहागमनसमये। यज्ञसमाप्तौ सत्यामिति शेषः। विततेति। विततं विस्तृतं समृद्ध्या सम्पादितमिति यावत् गावः केशा दीयन्ते छिद्यन्ते अस्मिन्निति गोदानं केशकर्त्तनरूपी विवाहात् प्राक् कर्त्तव्यः संस्कारविशेषः एव मङ्गलं माङ्गलिकाचारः येषां तथाभूताः। तदुक्तं मनुना। केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके तत इति।

(ठ) दृष्ट्या अविप्रवासः इदानीं भगिनीनां भविष्यति खं। अविप्रवासः अविरहः।

(ड) धर्माचरं धर्मकथाम्।

गन्तव्या पुनरन्यथैव नियतं लङ्काऽपि नः सीतया
तस्मा भूदिह वः पुरन्दरपुरीवन्दिप्रसक्तो विधिः ॥ ५९ ॥

[ नेपथ्ये कलकलः ]

राजा। तत् कावेतावकालपर्जन्यभीमौ वृन्देन धावतः (ढ) ?

विश्वा। एतौ सुबाहुमारीचौ पुत्रौ सुन्दोपसुन्दयोः।
रावणानुचरौ घोरौ यज्ञप्रत्यूहकारिणौ ॥ ६० ॥

तद्वत्सौ रामलक्ष्मणौ! हन्यतामेष यज्ञप्रत्यूहः।

तौ। यथा आज्ञापयसि इति [ विकटं परिक्रामतः (ण) ]

कन्ये। एत्थ दाणिं कहं (त)।

राजा। हन्त! साध्विव सम्पन्नं विपर्य्यस्तो विधिर्भवेत्।
तद्वोच्य कार्य्यपर्य्यन्तं माल्यवत्युपवेदये ॥ ६१ ॥

---

पौलस्त्ये इति। पुलस्त्यस्य अपत्यं पुमान् पौलस्त्यः तस्मिन्नपि रावणेऽपीत्यर्थः नयेन नीत्या शिष्टाचारेणेति भावः याचते प्रार्थयते। न तु बलात् आस्कन्दतीति भावः इति हेतोः श्लाघ्येऽपि प्रशस्तेऽपि आदरणीयेऽपीति यावत् वः युष्माकं न आदरः न बहुमानः। सम्बन्धे कन्यादानरूपसंसर्गे सति त्रिलोकपतिना रावणेन यत् सख्यं बन्धुत्वं भवतीति शेषः तत्र न स्पृहा नाकाङ्क्षा। सीतयापि अन्यपरिणीतयेति शेषः नः अस्माकं लङ्का अन्यथा अन्येन प्रकारेणैव बलात् हरणादिनेति भावः पुनः नियतं निश्चितं गन्तव्या। ननु सीताया लङ्कागमनस्यावश्यम्भावे किमनया प्रार्थनया इत्यत आह तदिति। तत् तस्मात् इह जगति वः युष्माकं पुरन्दरपुरी अमरावती तस्या ये वन्दिनः कारावद्धा देवा तेषु प्रसक्तः जातः विधिः व्यापारः कष्टजीवनमिति भावः माभूत् न भवतु। सीतायां सद्भावेन अदत्तायां सा तु बलात् हर्त्तव्यैव भविष्यति, युष्माकञ्च देवानामिव कारावन्धनक्लेशो भावीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

[ढ] अकालपर्जन्यभीमौ अकालजलदभयङ्करौ। वृन्देन सङ्घेन बहुना सैन्येनेति भावः।

एताविति। यज्ञप्रत्यूहकारिणौ यज्ञविघ्नकरौ। अन्यत् स्पष्टम् ॥ ६० ॥

[ण] विकटम् उत्कटम्।

[त] अत्रेदानीं कथमिति सं। कथं कीदृग् भविष्यतीति शेषः।

हन्तेति। हन्त! हर्षे, साधु आत्मनोऽभीष्टमिति यावत् सम्पन्नमिव सिद्धमिव

राजा। [ धनुरास्फालयन् ] वत्स रामभद्र! वत्स लक्ष्मण! अप्रमत्तः प्रमत्तं विजयस्व। अयमहं परागत एव (थ)।

विश्वा। [ विहस्य सहस्तग्राहम् (द) ]।

राजन्नितो ह्येहि महानुजस्य रामस्य पश्याप्रतिमानमोजः।
ब्रह्मद्विषो ह्येष हिनस्ति सर्वानाथर्वणस्तीव्र इवाभिचारः ॥६२॥

[ इति निष्क्रान्ताः सर्वे ]

[ इति कौमारो नाम प्रथमोऽङ्कः ]

---

एताभ्यां सुबाहुमारीचाभ्यामवश्यमेव रामस्य निधनं भविष्यतीति भावः। विधिः यज्ञानुष्ठानं विपर्य्यस्तः विध्वस्तः भवेत्। तत् तस्मात् वीक्ष्य दृष्ट्वा साम्प्रतं राक्षसयोः सम्पाते किं स्यादिति भावः माल्यवति रावणस्य मातामहे राजमन्त्रिणीति शेषः कार्य्यपर्य्यन्तं कार्य्यशेषं यत् यत् कार्य्यमव संवृत्तं तदित्यर्थः उपवेदये निवेदयामि। अनुष्टुब् वृत्तम् ॥६१॥

[थ] अप्रमत्तः अवहितः। प्रमत्तम् अनवहितम् अविमृश्यकारिणमिति यावत् राक्षसमिति शेषः। परागतः अनुसृतः।

[द] सहस्तग्राहं हस्तस्य ग्राहेण सहितं यथा तथा सहस्तग्राहं हस्तं धृत्वेत्यर्थः।

राजन्निति। हे राजन्! इतः अस्मिन् एहि हि आगच्छैव। महानुजस्य समहत्कस्य रामस्य अप्रतिमानम् अतुल्यम् अपरिमाणं वा ओजः तेजः पश्य अवलोकय। एष हि रामः तीव्रः दारुणः आथर्वणः अथर्ववेदविहितः अभिचार इव मारणादिविधिरिव सर्वान् ब्रह्मद्विषः वेदविद्वेषिणो राक्षसान् हिनस्ति हन्ति। नात्र प्रयासो भवता कार्य्य इति भावः। इन्द्रवज्रावृत्तम् ॥ ६२ ॥

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागर-
भट्टाचार्य्येण विरचिता महावीरचरितनाटकस्य
प्रथमाङ्कव्याख्या समाप्ता।

# द्वितीयोऽङ्कः ।

[ ततः प्रविशति उपविष्टः सचिन्तो माल्यवान् ] (ख)

माल्य । भोः ! यतः प्रभृति सर्वमायात् सिद्धाश्रमवृत्तान्तम् अश्रौषं तत आरभ्य—

दूराद्दवीयो धरणीधराभं यस्ताड़केयं तृणवद् व्यधूनोत् ।
हन्ता सुबाहोरपि ताड़कारिः स राजपुत्रो हृदि बाधते माम् ॥१॥

तदनुप्लवानां (क) च भूयसां सर्वैनैकेन वध इति किमेतदित्याश्चर्य्यम् ।

वीर्य्योत्कर्षैर्यदमृतभुजां निर्ममे पद्मयोनि-
स्तस्य द्वैधं व्यधित धनुषः शाम्भवीयस्य रामः ।
दिव्यामस्त्रोपनिषदमृषेर्यत् कृशाश्वस्य शिष्याद्
विश्वामित्राद्विजयजननीमप्रमेयः प्रपेदे ॥ २ ॥

---

(ख) रावणस्य मातामहभ्राता सुकेशराक्षसपुत्रः रावणमन्त्री ।

दूरादिति । यः राजपुत्रः धरणीधराभं पर्वतनिभं ताड़काया अपत्यं पुमान् ताड़केयः तं मारीचमित्यर्थः तृणवत् तृणेन तुल्यं यथा तथा दूराद्दवीयः दूरतरं व्यधूनोत् निचिक्षेप, सुबाहोरपि हन्ता तथा ताड़कारिः सः रामः हृदि मां बाधते पीड़यति विध्यतीत्यर्थः उपजातिवृत्तम् ॥ १ ॥

(क) तदनुप्लवानां तस्य मारीचस्य अनुप्लवाः अनुचराः राक्षसा इति भावः तेषाम् ।

वीर्य्योत्कर्षैरिति । पद्मयोनिः ब्रह्मा अमृतभुजां देवानां वीर्य्योत्कर्षैः यत् निर्ममे निर्मितवान् त्रिपुरासुरविनाशार्थमिति भावः अप्रमेयः अमितशक्तिरित्यर्थः रामः तस्य शम्भोरिदं शाम्भवीयं तस्य धनुषः द्वैधं व्यधित कृतवान् तदैश्वरं धनुर्भग्नमित्यर्थः । इति यत् तथा कृशाश्वस्य शिष्यात् विश्वामित्रात् ऋषेः विजयजननीं दिव्याम् अस्त्रोपनिषदम् अस्त्रविद्यां प्रपेदे प्राप इति च यत् तदेवाश्चर्य्यम् इति पूर्वेणान्वयः । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्ममिति तल्लक्षणात् ॥२॥

प्रसह्य रावणद्विष्टमस्मद्दूतस्य पश्यतः ।
अस्त्रदानाद्भुतं काले प्रौढेन मुनिना कृतम् ॥ ३ ॥

यतः। सीतावन्दिग्रहपरिभवस्तस्य राज्ञो निरस्तो
नीतं चास्मान् प्रति शिथिलतामैकमुख्यं सुराणाम् ।
नान्दीनादप्रभृति हि कृतं मङ्गलं तैस्तदानीं
सर्वं प्रायो भजति विकृतिं भिद्यमाने प्रतापे ॥ ४ ॥

कथं वत्सा शूर्पणखा प्राप्ता ?

[ प्रविश्य ] शूर्पणखा । जेदु जेदु मादामहो (ख) ।

---

प्रसह्येति । प्रौढेन प्रगल्भेन मुनिना विश्वामित्रेण पश्यतः अस्माकं दूतस्य सर्वमायस्येति भावः अनादरे षष्ठी पश्यन्तम् अस्मद्दूतमनादृत्येत्यर्थः काले प्रसह्य बलादित्यर्थः रावणद्विष्टं रावणविरुद्धम् अस्त्रदानादद्भुतं दिव्यास्त्रदानरूपम् अद्भुतं कर्मेति शेषः कृतम् । अनुष्टुब्वृत्तम् ॥ ३ ॥

सीतेति । तस्य राज्ञः जनकस्य सीताया वन्दिभावे ग्रहः ग्रहणं रावणकर्तृकं बलात् कारानिरोधनमिति भावः तस्मात् परिभवः अवमानना यद्वा सीता एव वन्दिर्हठहृता कारावरुद्धा स्त्री तस्या ग्रहः कस्मैचिदपि अदत्त्वा रक्षणमिति यावत् तेन परिभवः दुःखमिति यावत् प्रौढ़ायाः कन्यायाः पात्राभावे गृहे कारावरुद्धावद्रक्षणे पितुर्निरतिशयक्लेशो भवतीति प्रसिद्धिः । निरस्तः निराकृतः रामेण धनुर्भङ्गरूपपणबन्धस्य प्रतिबन्धकस्य निराकृतत्वादिति भावः । सुराणां देवानाम् अस्मान् प्रति ऐकमुख्यम् अस्मत्परवशत्वमिति भावः शिथिलतां नीतञ्च व्याहतञ्चेत्यर्थः । हि यतः तैः सुरैः तदानीं धनुर्भङ्गदिव्यास्त्रग्रहणकाले इत्यर्थः नान्दीनादप्रभृति नान्दी पूर्वोक्ता तस्या नादः पाठ इति यावत् तत्प्रभृति मङ्गलं माङ्गलिकमनुष्ठानमित्यर्थः कृतम् । उक्तमर्थमर्थान्तरेण द्रढयति सर्वमिति । सर्वं वस्तु प्रतापे तेजसि भिद्यमाने क्षीयमाणे इति यावत् प्रायः बाहुल्येन विकृतिं वैरूप्यं भजति प्राप्नोति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति । मन्दाक्रान्तावृत्तम् ॥ ४ ॥

(ख) जयति जयति मातामहः सः । शूर्पणखा—रावणस्य भगिनी कालकेन्द्रस्य विद्युज्जिह्वस्य पत्नी च ।

माल्य। वत्से! आस्यताम्। का राजसन्निधौ वार्त्ता?

शूर्प। णिव्वुत्ताइं किल तहिं पाणिग्गहणाइं। अस्सं च। अगत्थिमहेसिणा रामस्स मङ्गलोवहारिअं माहिंदं धणुव्वरं अणुप्पेसिदं (ग)।

माल्य। यानि भुवनेषु अप्रतर्क्यसामर्थ्यानि आयुधानि तानि रामे ब्रह्मर्षिभ्यः परिणमन्ति (घ)। [ सचिन्तम् ]

अमोघमस्त्रं क्षत्रस्य ब्राह्मणानामनुग्रहः।
दुरासदं च तत्तेजः क्षात्रं च ब्रह्मसंयुतम्।

शूर्प। माणुसमेत्तए वि एत्तिए का चिंदा (ङ)?

माल्य। वत्से! मा मैवम्—

उत्पत्त्यैव हि राघवः किमपि तद्रूपो जगत्यद्भुतं
मर्त्यत्वेन किमत्र यस्य चरितं देवासुरैर्गीयते।
वस्तुष्वादधते च शक्तिमृषयो देवाश्च तर्क्येतरां
मर्त्यादेव वरप्रदानसमये ब्रह्मा भयं नो जगौ॥ ६॥

---

(ग) निर्वृत्तानि किल तत्र पाणिग्रहणानि। अन्यच्च अगस्त्यमहर्षिणा रामस्य मङ्गलोपहारिकं माहेन्द्रं धनुर्वरम् अनुप्रेषितम् सं। मङ्गलाय उपहारत्वेन कल्पितम्। माहेन्द्रम् इन्द्रदैवतम्।

(घ) अप्रतर्क्येति न प्रतर्क्यं न चिन्त्यं सामर्थ्यं येषां तानि प्रभूतशक्तीनीत्यर्थः परिणमन्ति फलन्ति।

अमोघमिति। क्षत्रस्य क्षत्रियजातेः अस्त्रं ब्राह्मणानाम् अनुग्रहः आशीर्वादश्च अमोघम् अव्यर्थं ततश्च ब्रह्मसंयुतं ब्राह्मणाशिषा समन्वितं तत् क्षात्रं तेजः दुरासदं दुर्धर्षञ्च अनयोः प्रत्येकमेव अमोघं सङ्गतिस्तु किमु वक्तव्येति भावः॥ ५॥

(ङ) मानुषमात्रकेऽपि एतावति का चिन्ता? सं।

उत्पत्त्येति। राघवः रामः उत्पत्त्यैव जन्मनैव तद्रूपः तादृशनवदूर्वादलश्याममूर्त्तिः अतएव जगति किमपि अनिर्वचनीयम् अद्भुतं हि आश्चर्य्यमेव वस्त्विति शेषः। अत्र राघवे मर्त्यत्वेन किम्? मर्त्य इति अवज्ञा नैव कर्त्तव्येति भावः। देवासुरैः यस्य राघवस्य चरितं गीयते कीर्त्यते प्रशस्यते इति भावः। ऋषयः देवाश्च वस्तुषु पदार्थेषु

अपिच। निसर्गेण स धर्मस्य गोप्ता धर्मद्रुहो वयम्।
अर्थ्यो विरोधः शक्तेन जातो नः प्रतियोगिना ॥ ७ ॥

शूर्प। को संदेहो? जह दसमुहो इमि. मलिणाएहिं विंशदिट्ठीहिं ओहीअमाणलोललोअणो णमंतवअणो वट्टदि तह जाणामि दारुणो मे हिअअवेअणावेओ ण एव्वं विरमिस्सदि त्ति (च)।

माल्य। अहो नु खलु भोः!
वन्द्या विश्वसृजो युगादिगुरवः स्वायम्भुवाः सप्त ये
वैदेहस्य वयं च तर्हि किमहो! सम्बन्धिनो न प्रियाः?।
तन्नामास्तु दुरासदेन तपसा दीप्तस्य दीप्तश्रियः
पौलस्त्यस्य जगत्पतेरपि कथं जाता हृदि न्यूनता? ॥ ८ ॥

---

तर्क्यतराम् अचिन्त्यामित्यर्थः शक्तिं सामर्थ्यम् आदधते च अर्पयन्ति च। ननु तथापि त्रिभुवनविजेतरि रावणे मर्त्यात् का भीतिरित्यत आह मर्त्यादेवेति, ब्रह्मा वरप्रदानसमये वरस्य मर्त्येषु अनास्थया दैवात् सर्गादवध्यत्वमात्रस्य इष्टस्य रावणप्रार्थितस्य प्रदानसमये मर्त्यादेव नः अस्माकं भयं जगौ कथयामास। तथा दैवात् सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुख इति रघुवंशे कालिदासः। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

निसर्गेणेति। स राघवः निसर्गेण स्वभावेन धर्मस्य वेदविहितस्येति भावः गोप्ता रक्षिता वयं धर्मान् द्रुह्यन्तीति धर्मद्रुहः धर्मविरोधिनः। अतः शक्तेन प्रतियोगिना प्रतिद्वन्द्विना नः अस्माकम् अर्थ्यः अर्थादनपेतः अर्थसिद्ध इति यावत् विरोधः जातः। अनुष्टुब् वृत्तम् ॥ ७ ॥

(च) कः सन्देहः? यथा दशमुख एषन्मलिनाभिः विंशतिदृष्टिभिः अपक्रियमाणलोललोचनः नमद्वदनो वर्त्तते तथा जानामि दारुणोऽस्य हृदयवेदनावेगो न एवं विरंस्यतीति च। दशमुखः रावणः। मलिनाभिः कलुषाभिः विंशतिदृष्टिभिः विंशतिसंख्यकदर्शनव्यापारैः। अपक्रियमाणानि त्यज्यमानानि लोलानि चञ्चलानि लोचनानि नेत्राणि यस्य तथोक्तः निमीलितविंशतिलोचन इति यावत् नमद्वदनः अधोवदनः इत्यर्थः। विरंस्यति निवर्त्तिष्यति।

वन्द्या इति। विश्वसृजः जगत्स्रष्टारः युगादिगुरवः युगस्य कल्पान्तस्य आदितः

अथवा। अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते ? ॥ ९ ॥

[ नेपथ्यार्द्धप्रविष्टः प्रतीहारः ]

यः परशुरामस्य युष्माभिर्वार्त्ताहरः प्रहितः तेनेदं तमालरसविन्यस्ताक्षरं तालीपत्रमुपनीतम् (छ)।

[ उपक्षिप्य (ज) निष्क्रान्तः ]

---

गुरवः पूज्याः ये सप्त स्वायम्भुवाः ब्रह्मपुत्रा मरीच्यत्र्यङ्गिरः पुलस्त्यपुलहक्रतुवशिष्ठा इति यावत् वैदेहस्य सीरध्वजस्य जनकस्य वन्द्याः पूज्याः तर्हि वयञ्च तद्ब्रह्मपुत्रपुलस्त्यवंश्या इति भावः सम्बन्धिनः कन्यादानेन भाविबन्धव इति भावः किं कथं न प्रियाः ? तत् अप्रियत्वमिति भावः नाम अस्तु अस्माकमिति शेषः किन्तु दुरासदेन अन्यदुष्प्रापेण तपसा दीप्तस्य दीप्तश्रियः विद्योतितसम्पदः जगत्पतेः त्रिभुवनाधिकारिणः पौलस्त्यस्य रावणस्यापि न्यूनता निकृष्टता कथं केन प्रकारेण हृदि तस्येति शेषः जाता ? अहो आश्चर्य्यम् असम्भवमेवैतदिति भावः। अत्र प्रियत्वहेतावपि तदभावाद् विशेषोक्तिः अप्रियत्वहेतुं विनापि अप्रियस्वरूपकार्य्योत्पत्तिरिति विभावना च तदनयोः सन्देहसङ्करः। तदुक्तं दर्पणे। सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति च। शार्दूलविक्रीड़ितं वृत्तम् ॥ ८ ॥

अर्थित्वे इति। अर्थित्वे प्रार्थनायां प्रकटीकृतेऽपि प्रभोः स्वामिनः रावणस्य न फलस्य सीतारूपस्य प्राप्तिः लाभः। प्रत्युत वैपरीत्ये द्रुह्यन् विद्विषन् विरुद्धचरितः प्रतिकूलवर्त्ती दाशरथिः रामः तया कन्यया युक्तः सङ्गतः ! अतः जगत्पतिः त्रिभुवनेश्वरः अतएव दृप्तः दर्पयुक्तः दशमुखो रावणः परस्य शत्रोः मानयशसोः उत्कर्षञ्च आत्मनः विस्रंसनञ्च भ्रंशनं मानयशसोरित्यनेनान्वयः। स्त्रीरत्नञ्च तदप्राप्तिमिति भावः कथं मृष्यते क्षमते सहते इत्यर्थः ? शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

(छ) परशुरामस्य परशुरामसमीपे इत्यर्थः वार्त्ताहरः दूतः। तमालेति तमालस्य तदाख्यतरुकिसलयस्य रसेन विन्यस्तानि लिखितानि अक्षराणि यस्मिन् तत्।

(ज) उपक्षिप्य दत्त्वा।

माल्य। [ गृहीत्वा वाचयति ] स्वस्ति महेन्द्रद्वीपात् परशुरामो लङ्कायाममात्यं माल्यवन्तमभ्यर्हयति (झ)।

शूर्प। कहं पहुव्व सिढ़िलिअक्कमं लिहदि ? (ञ)

माल्य। अत्रैव परममाहेश्वरं लङ्केश्वरमभिनन्द्य ब्रवीति विदितमेतद्वो यदस्माभिर्दण्डकारण्यतीर्थोपासकेभ्यस्तपोधनेभ्यः प्रतिज्ञातमभयम्। तत्र विराधदनुकबन्धप्रभृतयः केऽप्यभिचरन्तीति श्रुतम्। तत्तान् प्रतिषिध्य सद्वृत्तिमस्मद्धितां च माहेश्वरप्रीतिमनुरुध्यन्तां भवन्तः (ट)।

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥ १० ॥ इति

शूर्प। ईसि मसिणावट्टम्भ गम्भीरगुरुओ उवस्सासो (ठ)

माल्य। अहो किमुच्यते ? जामदग्न्यः खलु असौ।

---

(झ) स्वस्ति सु अस्ति शुभमस्त्वित्यर्थः। अमात्यं मन्त्रिणम्। अभ्यर्हयति सत्करोति।

(ञ) कथं प्रभुरिव शिथिलितक्रमं लिखति मं। शिथिलितः अवज्ञात इति भावः क्रमः नियमः यस्मिन् तत् यथा तथा। प्रथमं राज्ञः अभिवन्दनं ततश्च तदमात्यस्येति नियमः अत्र तथा न दृश्यते इति भावः।

(ट) परममाहेश्वरं महेश्वरो देवता यस्यासौ माहेश्वरः शैव इत्यर्थः परमश्चासौ माहेश्वरश्चेति परममाहेश्वरः तं शैवप्रधानमित्यर्थः। दण्डकेति दण्डकारण्ये षु तीर्थानि पुण्यक्षेत्राणि उपासते इति तथोक्ताः तेभ्यः। अभिचरन्ति विरुद्धमाचरन्तीत्यर्थः तत्तीर्थोपासकान् तपोधनान् हिंसन्तीति भावः। अनुरुध्यन्ताम् अनुसरन्त्विति यावत्।

ब्राह्मणेति। ब्राह्मणानाम् अतिक्रमः हिंसनमिति यावत् तस्य त्यागः तदकरणमित्यर्थः भवतां भूतये मङ्गलाय एव भवतीति शेषः। अन्यथा वः युष्माकं मित्रं जामदग्न्यः परशुरामः दुर्मनायते दुःखितमना वा दुष्टमना भवतीत्यर्थः। अनुष्टुब्वृत्तम् ॥ १० ॥

(ठ) ईषन्मसृणावष्टम्भगम्भीरगुरुक उपन्यासः सं। ईषत् अल्पं मसृणः स्निग्धः कोमल इति भावः अवष्टम्भः रचनं यस्य तथाभूतः तथा गम्भीरगुरुकः महार्थादिमक इति यावत् उपन्यासः वचनम्।

अभिजनतपोविद्यावीर्य्यक्रियातिशयैर्निजै-
रुपचितशमः सर्वत्यागान्निरीहतया स्थितः।
व्यपदिशति नः शैवप्रीत्या कथञ्चिदनास्थया
प्रभुरिव पुनः कार्य्ये कार्य्ये भवत्यतिकर्कशः॥ ११॥

[ इति चिन्तयति ]

माल्य। वत्से !

हृदि प्रपद्येत धनुः प्रमाथः शिष्याय शम्भोर्न तितिक्षते सः।
आयोधने चेदुभयोर्निघातः संरम्भयोगाददति हि प्रियं नः॥१२॥

अन्यतरविजयेऽपि तु क्षत्रियान्तकरश्चेद्राजपुत्रं विजयते नैनमनभिहत्य रोषणो विरमेत्। एवञ्च सिद्धं नः समीहितं रामनिधनम्. ऐक्ष्वाकस्तु विजयमानो ब्राह्मणो न ब्रह्मर्षिमभिहन्यात्, निःश्रेयसापन्ने अपसृतमपि शस्त्रं प्रणिदध्यात्, एवञ्च दुष्टतरं स्यात् (ङ)।

---

अभिजनेति। निजैः स्वीयैः अभिजनः कुलं, कुलान्यभिजनान्वयावित्यमरः। तपः कठोरं व्रतं विद्या वेदादिज्ञानं वीर्य्यं बलम् एषां क्रियातिशयैः समुचितानुष्ठानविशेषैरित्यर्थः उपलक्षितः सर्वत्यागात् सर्वेषां भोग्यवस्तूनामिति भावः त्यागात् उपचितः वर्द्धितः शमः शान्तिः येन तथोक्तः विजितेन्द्रिय इति भावः निरीहतया निश्चेष्टतया निष्कामतयेति यावत् स्थितः सन् नः अस्मान् शैवप्रीत्या शैव इति प्रणयेन कथञ्चित् अनास्थया अयत्नेन अननुरागेण अस्माकं दृष्टतयेति भावः प्रभुरिव कार्य्ये व्यपदिशति विशेषेण उपदिशति। अकार्य्ये अनुचितकर्मणि पुनः अस्माभिः क्रियमाणे इति शेषः अतिकर्कशः अतिशयेन कठिनः क्रुद्ध इति यावत् भवति। हरिणीवृत्तम्॥ ११॥

हृदीति। धनुषः प्रमाथः भञ्जनं शम्भोः शिष्याय, सम्प्रदानविवक्षया सम्बन्धे चतुर्थी, शिष्यस्येत्यर्थः परशुरामस्येति भावः। शिष्यस्येति पाठः समीचीनः। हृदि प्रपद्येत लगेदित्यर्थः गुरुधनुर्भङ्गजनिता व्यथा तच्छिष्यस्य हृदये अवश्यं सम्भवेदिति यावत् तथा सति सः परशुरामः न तितिक्षते न क्षमते। ततश्च उभयोः रामभार्गवयोः संरम्भयोगात् अन्योन्यक्रोधवशात् आयोधने युद्धे निघातः बधः चेत् यदि भवतीति शेषः तदा नः अस्माकम् इति अति अत्यन्तं प्रियं हि प्रीतिकरमेवेत्यर्थः। उपजातिवृत्तम्॥ १२॥

शूर्प। को विसेसो (ढ) ?

माल्य। यदि जामदग्न्यस्तावदरण्यव्रतो हन्याद्राघवं हत्वाऽपि पुनस्तादृश एव। सन्धार्य्यस्तु राजपुत्रः पुनरुत्था-तुकामस्तं चेत् प्रहृष्टतममुत्साहशक्तिसम्पदा धर्मविजयिनं विजयेत सर्वे तं विजयिनमनुजानीयुः। तदैव हठाक्रान्त्या निभृतक्रुद्धा देवाः प्रसह्यैनमधिकुर्य्युः। नित्यानुषक्तो ह्यसुर-विजयिनामवमानतः प्रकृतिकोपः (ण)।

---

(ड) अन्यतरेति। अन्यतरस्य उभयोरेकतरस्य विजये जयलाभे। क्षत्रियान्तकरः भार्गवः राजपुत्रं रामम्। विजयते दुर्बलीकरोति एनं राजपुत्रम् अनभिहत्य अविनाश्य रोषणः कोपनः विरमेत् निवर्त्तेत। सिद्धं सम्पन्नम्। नः अस्माकम्। समीहितम् अभीष्टम्। ऐक्ष्वाकः रामः। विजयमानः भार्गवं दुर्बलीकुर्वन्नित्यर्थः। ब्राह्मण्यः ब्राह्मणप्रियः। अभिहन्यात् हिंस्यात्। निःश्रेयसापन्ने शान्तिमापन्ने सति भार्गवे इति शेषः अपहृतमपि संहितमपि प्रणिदध्यात् प्रतिसंहरेत्। एवञ्च सति दुष्टतरम् अतिशयेन दोष इत्यर्थः।

(ढ) को विशेष इति सं। विशेषो भेदः।

(ण) अरण्यव्रतः वानप्रस्थः। तादृश एव अरण्यव्रत एव। सन्धार्यः प्राणैरवियोज्यः परशुरामेणेति शेषः। राजपुत्रः रामः पुनः उत्थातुकामः पुनर्जयाय सन्नद्ध इति यावत् प्रहृष्टतमम् अतिशयेन प्रहर्षपरीतं प्रमादिनमिति भावः। उत्साहशक्तिसम्पदा उत्साह-सामर्थ्यसम्पदा। धर्मविजयिनं धर्मेण विजयते इति तथोक्तम् अन्याययुद्धविमुखमिति भावः। तं विजयिनं राजपुत्रम् अनुजानीयुः अनुमोदेरन्। तदैव तदानीमेव हठाक्रान्त्या बलात् पराभवेण अस्माभिरिति भावः निभृतक्रुद्धाः अन्तः सकोपा इति भावः बहिः किमपि कर्त्तुमक्षमत्वादिति भावः। प्रसह्य सहसा अविलम्बेनैवेत्यर्थः एनं विजयिनं राजपुत्रम् अधिकुर्य्युः आश्रयेयुरित्यर्थः। नित्यानुषक्तः सततमन्तः स्थितः। हि यतः। असुर-विजयिनां देवानाम् अवमानतः अस्मत्कृतादवमानादित्यर्थः प्रकृतिकोपः प्रकृतयः राज्याङ्गानि स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतय इत्यमरः। तासु कोपः। देवानामवमानात् त्रिभुवनराज्यवर्त्तिनां राज्याङ्गानां सर्वेषामेव अस्मान् प्रति कोपो नित्यानुषक्त इति निष्कर्षः।

पौलस्त्यापचयप्रचण्डचरिते यः कार्त्तवीर्य्ये मुनिः
सर्वक्षात्रकथासमापनविधेः प्राङ्मङ्गलं प्राकरोत्।
तस्मिन्नप्युपनीतयुक्तदमनः स्यादूर्जितासत्क्रिये
सामर्थ्ये सति धर्म्यसौम्यचरितो विश्वस्य रामः पतिः ॥१३॥

शूर्प। तदो एत्थ किं दाणिं चिंतिदं (त)।

माल्य। परशुरामोत्तेजनं कर्त्तव्यमिति (थ)।

शूर्प। पक्खंतरे महादोसो (द)।

माल्य। तत्रापि शक्तितः प्रतिविधास्यते (ध)। किन्तु

तान्येव यदि भूतानि ता एव यदि शक्तयः।
ततः परशुरामस्य न प्रतीमः पराभवम् ॥ १४ ॥

तदुत्तिष्ठ मिथिलाप्रस्थानाय जामदग्न्यमुत्तेजयितुं महेन्द्रद्वीपमेव गच्छावः द्रष्टव्यश्च तत्र भगवान् भार्गवः।

---

पौलस्त्येति। यो मुनिः पौलस्त्यस्य रावणस्य अपचयेन पराभवेण प्रचण्डं तीक्ष्णं चरितं यस्य तथाभूते कृतवीर्य्यस्यापत्यं पुमान् कार्त्तवीर्य्यः तस्मिन् सर्वेषां क्षत्राणां क्षत्रियाणां कथा कीर्त्तनं तस्याः समापनमेव विधिः तस्मात् सर्वक्षत्रियनिधनादिति यावत् प्राक् मङ्गलं मङ्गलाचरणं प्राकरोत् प्रकर्षेण कृतवान् सर्वप्रथममेव कार्त्तवीर्य्यमवधीदिति भावः ऊर्जिता प्रहृद्धा असत्क्रिया दुराचार इत्यर्थः सर्वजगत्सन्तापकत्वादिति भावः यस्य तथाभूते तस्मिन् भार्गवे अपि उपनीतं कृतं युक्तम् अनुरूपं दमनं येन तथोक्तः स्यात् यदीति शेषः तदा सामर्थ्ये शक्तौ सति धर्म्यं धर्मादनपेतं सौम्यं रम्यं चरितं यस्य तादृशः सामर्थ्यसहकृतधर्म्यसौम्यचरित इत्यर्थः रामः विश्वस्य जगतः पतिः भविष्यतीति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

(त) ततोऽत्र किमिदानीं चिन्तितमिति सं।

(थ) परशुरामोत्तेजनमिति परशुरामस्य उत्तेजनं तेजोवर्द्धनं क्रोधोद्दीपनमिति यावत्।

(द) पक्षान्तरे महादोष इति सं। पक्षान्तरे रामेण तत्पराजयपक्षे इति भावः।

(ध) प्रतिविधास्यते प्रतिकरिष्यते।

तानीति। तानि एव भूतानि पञ्च क्षित्यादीनि यदि सन्तीति शेषः ता एव शक्तयः सामर्थ्यानि तेषां भूतानामिति शेषः यदि सन्तीति शेषः ततस्तर्हि परशुरामस्य पराभवं

गभीरो माहात्म्यात् प्रथमशुचिरत्यन्तसुजन:
प्रसन्न: पुण्यानां प्रचय इव सर्वस्य सुखद: ।
प्रभुत्वस्योत्कर्षात् परिणतिविशुद्धेश्च तपसा-
मसौ दृष्ट: सत्त्वं प्रबलयति पापञ्च नुदति ॥ १५ ॥

[ उत्थाय परिक्रम्य निष्क्रान्तौ ]

[ विष्कम्भक: (न) ]

[ नेपथ्ये ]

भो भो विदेहनगरीगता: कुलचारिण: ! (प) कथयन्तु भवन्त: कन्यान्त:पुरगताय रामभद्राय ।

कैलासोद्धारसारत्रिभुवनविजयौर्जित्यनिष्णातदोष्ण:
पौलस्त्यस्यापि हेलापहृतरणमदो दुर्दम: कार्त्तवीर्य्य: ।
यस्य क्रोधात् कुठारप्रविघटितमहास्कन्धबन्ध: स्थवीयो-
दो:शाखादण्डमुण्डस्तरुरिव विहित: कुण्ठकाण्ड: पुराऽभूत् ॥१६॥

---

न प्रतीम: न विश्वसिम: न सम्भावयाम इत्यर्थ: । नूतनभूतसृष्टौ तस्यालौकिकसामर्थ्ये सति परशुरामस्य पराजयशङ्का नान्यथेति भाव: । अनुष्टुब्वृत्तम् ॥ १४ ॥

गभीर इति । माहात्म्यात् महाप्राणत्वात् गभीर: दुरवगाह: प्रथमशुचि: शुचीनां पूतात्मनां प्रथम: अग्रणीरित्यर्थ: अत्यन्तसुजन: अतीवसरल: प्रसन्न: प्रसादगुणयुक्त: पुण्यानां सुकृतानां प्रचय इव राशिरिव सर्वस्य जनस्य सुखद: मङ्गलकर इत्यर्थ: असौ परशुराम: दृष्ट: साक्षात् कृत: सन् प्रभुत्वस्य उत्कर्षात् अतिरेकात् तपसां परिणति-विशुद्धेश्च सत्त्वं बलम् उत्साहमित्यर्थ: प्रबलयति उत्तेजयति पापम् अन्तर्मलं नुदति नाशयति च । शिखरिणीवृत्तम् ॥ १५ ॥

(न) विष्कम्भक: वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शक: । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शित इत्युक्तलक्षण: प्रसङ्गविशेष: ।

(प) कुलचारिण: राजान्त:पुरचारिण इत्यर्थ: ।

कैलासेति । कैलासस्य पर्वतस्य उद्धारे उत्पाटने उत्तोलने वा सारो बलं येषां तथोक्ता: धृतकैलासा इत्यर्थ: तथा त्रिभुवनस्य विजये यत् और्जित्यं बलशालित्वं तेन

सोऽयं त्रिःसप्तवारानविकलविहतक्षत्रतन्त्रप्रसारो
वीरः क्रौञ्चस्य भेदात् कृतधरणितलापूर्वहंसावतारः।
जेता हेरम्बभृङ्गिप्रमुखगणचमूचक्रिणस्तारकारे-
स्त्वां पृच्छन् जामदग्न्यः स्वगुरुहरधनुर्भङ्गरोषादुपैति ॥ १७ ॥

[ ततः प्रविशति सधैर्य्यसंभ्रमो रामः सीता सख्यश्च ]

रामः। दिष्ट्या—

माहाभाग्यमहानिधिर्भगवतो देवस्य दग्धुः पुरा-
माम्नायेन विशुद्धसर्वचरितः शिष्यो भृगूणां पतिः।

---

निष्याताः प्रख्याताः दोषः भुजाः विंशतिरिति भावः यस्य तथाभूतस्य पौलस्त्यस्य रावणस्यापि हेलया अवज्ञया उपहृतः नाशितः रणमदः संग्रामगर्वः येन तथाभूतः अतएव दुर्द्दमः दुर्जयः कार्त्तवीर्य्यः हैहयाधिपतिः यस्य क्रोधात् कुठारेण प्रकर्षेण विघटिता विच्छिन्ना महतः स्कन्धस्य बन्धेन स्थवीयांसः अतिदृढ़ा इति यावत् दोषः भुजा एव शाखादण्डाः मुक्तश्च यस्य तथाभूतस्य पुरा पूर्व्वं कुल्यकन्दः मूलमात्रावशिष्टः तरुरिव वृक्ष इव अभूत्। स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ १६ ॥

सोऽयमिति। त्रिःसप्तवारान् एकविंशतिकृत्वः अविकलं सम्यक् यथा तथा विहतः ध्वंसितः क्षत्रतन्त्राणां क्षत्रियकुलानां प्रसारः विस्तारः येन तथोक्तः क्रौञ्चस्य तदाख्यपर्वतस्य भेदात् शरेण विवरकरणादिति भावः कृतः धरणितले पृथिव्याम् अपूर्वः नूतनः हंसानां मानससरःस्थितानामिति भावः अवतारः अवरोहणं येन तथाविधः यः क्रौञ्चं भित्त्वा हंसद्वारं कृतवानिति भावः। हेरम्बः गणेशः भृङ्गिः शिवानुचरविशेषः तत्प्रमुखं गणचमूचक्रं प्रमथगणसैन्यचयः अस्ति अस्येति तथोक्तस्य तारकारेः तारकासुरघातिनः स्कन्दस्येत्यर्थः जेता सोऽयं वीरः जामदग्न्यः स्वस्य गुरुराचार्य्यः हरः तस्य धनुर्भङ्गेन रोषः तस्माद्धेतोः त्वां पृच्छन् उपैति उपगच्छति। स्रग्धरावृत्तम् ॥ १७ ॥

माहाभाग्येति। महत् भाग्यं महाभाग्यं तदेव माहाभाग्यं स्वार्थे ष्यप्रत्ययः। तस्य महान् निधीयते अस्मिन्निति निधिराश्रयः महाभाग्यशालीत्यर्थः भगवतः पुरं त्रिपुरासुराणामित्यर्थः दग्धुः दहनकारिणः देवस्य हरस्येति यावत् शिष्यः छात्रः आम्नायेन आ सम्यक् म्नायते अभ्यस्यते इति आम्नायः वेदः तेन तदध्ययनेनेति यावत् विशुद्धं पूतं

द्रष्टव्यः स च मां दिदृक्षुरपि च त्यक्त्वा ह्रियं मुग्धया
सन्त्रासादिव आभिजात्यनिभृतः स्नेहो मयि द्योत्यते ॥ १८ ॥

सीता । हला सहीओ ! कहं दाणिं एदं (फ) ।

सख्यः । कुमार ! अलं दाव तुवराए (ब) ।

रामः । नोत्साहः परिधारणावैरस्यमर्हति (भ) ।

सख्यः । वारंवारं णिक्खत्तीकिदसमत्तजीअलोओ णिव्वडिद विसमव्ववसाअसाहसो अ परसुरामो सुणीअदि (म) ।

रामः । किमेकदेशेन महाब्राह्मणनिर्धर्मो माहात्म्यमुपसंक्षिप्यते ? (य) । य एषः—

---

सर्वं चरितं यस्य तथोक्तः । भृगूणां भृगुकुलजानां पतिः परशुरामः द्रष्टव्यः मयेति शेषः, स च मां दिदृक्षुः द्रष्टुमिच्छुः । अपिच किन्तु मुग्धया नवोढ़या सीतया सन्त्रासात् परशुरामोऽतिभयानकः किमाचरिष्यत्यार्य्यपुत्रे इति भयादिति यावत् ह्रियं लज्जां त्यक्त्वा आभिजात्येन सत्कुलप्रसूतत्वेन निभृतः सञ्चितः सत्कुलजा हि कन्याः स्वत एव पत्यौ सस्नेहा भवन्तीति भावः मयि निजः स्नेहः आर्य्यपुत्र ! परशुरामसकाशं मा गच्छ भीतास्मि तस्माक्तादित्येवं कातरतासङ्कुल इति भावः द्योत्यते प्रकाश्यते । शार्दूलविक्रीड़ितं वृत्तम् ॥ १८ ॥

(फ) हला सख्यः ! कथमिदानीम् इदम् सं ।

(ब) कुमार ! अलं तावत् त्वरया सं । परशुरामदर्शने त्वरया अलं त्वरायाः प्रयोजनं नास्तीत्यर्थः ।

(भ) उत्साहः उद्यमः परिधारणया अन्तर्धारणम् अप्रकटनमित्यर्थः विलम्बनमिति भावः तया वैरस्यं विरसीभावः तदनुचितमिति भावः ।

(म) वारं वारं निःक्षत्रीकृतसमस्तजीवलोको निर्वर्त्तितविषमव्यवसायसाहसश्च परशुरामः श्रूयते सं । वारंवारम् एकविंशतिवारम् इति भावः निःक्षत्रीकृतः क्षत्रियशून्यीकृतः समस्तः जीवलोकः भूतलं येन तथोक्तः । निर्वर्त्तितं सम्पादितं विषमेण दारुणेन व्यवसायेन चरितेन साहसं येन तथाभूतः ।

(य) एकदेशेन एकांशेन । उपसंक्षिप्यते सङ्क्षिप्यते ।

उत्खातक्षितिपालवंशगहनास्त्रिःसप्तकृत्वो दिशः
कृत्वा विश्रुतकार्त्तिकेयविजयश्लाघ्यस्य बाहोर्बलात् ।
सद्वीपामथ काश्यपाय गुरवे दत्त्वाऽश्वमेधे मही-
मस्त्रव्यस्तसमुद्रमुक्तविषयावस्थस्तपस्तप्यते ॥ १९ ॥

[ नेपथ्ये ]

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तेक्षणं वेत्रिभि-
र्दृष्टो दृष्टिविघातजिह्मितमुखैरव्याहतप्रक्रमः ।
रामान्वेषणतत्परः परिजनैरुन्मुक्तहाहारवं
कन्यान्तःपुरमेव हा ! प्रविशति क्रुद्धो मुनिर्भार्गवः ॥२०॥

रामः । ननु एत एव शिष्टाचारपद्धतेः प्रणेतारः । तत्

---

उत्खातेति । विश्रुतेन विख्यातेन कार्त्तिकेयस्य कर्मभूतस्य विजयेन श्लाघ्यः प्रशस्तः तस्य बाहोः बलात् दिशः त्रिःसप्तकृत्वः एकविंशतिवारानित्यर्थः. उत्खातानि उन्मूलितानि क्षितिपालानां क्षत्रियाणां वंशा एव गहनानि वनानि यासां तथाविधाः कृत्वा अथ क्षत्रियवंशनिधनानन्तरम् अश्वमेधे तज्जनितपापोपशमनफलके यागविशेषे इत्यर्थः गुरवे आचार्य्याय काश्यपाय सद्वीपां सप्तभिरष्टादशभिर्वा द्वीपैः सहितां महीं पृथ्वीं दत्त्वा अस्त्रेण अस्त्रप्रयोगभयेनेति भावः व्यस्तः दूरं गत इति यावत् यः समुद्रः तेन मुक्ते त्यक्ते विषये देशे अवतिष्ठते इत्यवस्थः कृतावस्थानः सन्नित्यर्थः । समस्तायाः पृथिव्या दत्तत्वेन तत्र वासस्यायुक्तत्वादनधिकाराच्च अस्त्रभयप्रवर्त्तनेन समुद्रमपसार्य्य तद्दत्तेऽवकाशे स्थितिरिति भावः । तपः पराकचान्द्रायणादिरूपं व्रतं तप्यते अनुतिष्ठतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

सत्त्वेति । सत्त्वस्य बलस्य भ्रंशेन भयादिति भावः विषीदन्तीति विषादिनः तैः वेत्रिभिः वेत्रपाणिभिः अन्तःपुररक्षिभिरिति शेषः त्रस्तानि भयेन व्यापारितानीति भावः ईक्षणानि नयनानि यस्मिन् तद् यथा तथा कथमपि कृच्छ्रेण दृष्टः तथा दृष्टेर्विघातेन प्रतिघातेन तेजोमयमूर्त्तित्वादिति भावः जिह्मितानि आमीलितानि मुखानि यैः तथाभूतैः परिजनैः अव्याहतः अविघ्नितः अनिरुद्ध इति यावत् प्रक्रमः पादविक्षेपः यस्य तथोक्तः क्रुद्धः मुनिर्भार्गवः परशुरामः रामस्य अन्वेषणतत्परः सन् हा खेदे उन्मुक्तः उच्चैरुच्चरितः हाहारवः यस्मिन् तथाभूतं कन्यान्तःपुरमेव प्रविशति । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

कथमयं विद्वान् प्रमाद्यति ? भवतु उपसर्पामि [ सधैर्य्यं विकटं परिक्रामति (र) ]

सख्यः । अह्मो समंतदो हाहा ! देव ! चंदमुह ! रामचंद ! हा ! आमाद ! इति परिदेवणामुहरकादरुव्विग्गसमत्तपरिअणपलविदं अंतेउरं वट्टदि । ता भट्टिदारिए ! सअं एव्व विण्णवेहि भट्टिदारअं (ल) ।

सीता । तेण तुवरंतोम्हो सम्भावेह्म वेअपसरिअं अज्ज-उत्तं (व) । [ इति परिक्रामति ]

सख्यः । कुमार ! कुमार ! अवेक्ख दाव तुवराविसंखल-माणविह्वलिदुब्भंतगमणं भट्टिदारिअं (श) ।

---

(र) एत एवेति । एते एव महर्षय इति भावः शिष्टाचारपद्धतेः सदाचारमार्गस्य प्रणेतारः प्रदर्शयितारः उपदेशका इति यावत् । विद्वान् जानन् । प्रमाद्यति अनवधानतया व्यवहरतीत्यर्थः । अन्तःपुरेषु अपरिचितानां पुरुषाणां स्वतः प्रवेशस्य शिष्टाचारविरुद्धत्वादिति भावः ! भवतु शिष्टाचारविरोध इति शेषः । उपसर्पामि उपगच्छामि । विकटम् उद्धतम् ।

(ल) अहो समन्ततः हाहा देव चन्द्रमुख ! रामचन्द्र ! हा आमात: इति परिदेवनामुखरकातरोद्विग्नसमस्तपरिजनप्रलपितं अन्तःपुरं वर्त्तते । तत् भर्तृदारिके ! स्वयमेव विज्ञापय भर्तृदारकम् । सं । परिदेवनेति परिदेवना विलापः विलापः परिदेवनमित्यमरः । तत्र मुखरः सशब्दः कातरः उद्विग्नः समस्तः परिजनः तस्य प्रलपितं प्रलापः यत्र तादृशम् । विज्ञापय अस्य समीपगमने निवारणनिश्चमिति भावः ।

(व) तेन त्वरमाणा सम्भावयामि वेगप्रसृतम् आर्य्यपुत्रम् सं । वेगप्रसृतं त्वरया प्रस्थितम् ।

(श) कुमार कुमार ! अवेक्षस्व तावत् त्वराविशृङ्खलमानविह्वलितोद्भ्रान्तगमनां भर्तृदारिकां सं ।

अवेक्षस्व पश्य । त्वरया विशृङ्खलमानं विकलीभवत् विह्वलितं विवशं ज्ञानहीनमिति भावः उद्भ्रान्तम् अपथेऽपि पदार्पणात् विशेषेण भ्रान्तमिति भावः गमनं यस्याः तथाभूता ताम् ।

राम:। [सप्रेमानुकम्पं प्रतिनिवृत्य] ननु कातरेयम-त्रभवतीभिरेव पर्य्यवस्थापनीया (ष)।

सख्य:। सहि! सहि! सुरासुरमद्दणसमत्थं तेल्लोक्कमङ्गलं तुङ्गजअलच्छीलंछणमिमं सविब्भमविलसन्तेत्तकंदडसोहा-भरंतमुहपुण्डरीअवित्थारिदहिअहसम्भारा सव्वदा अह्मपुरदो वण्णेसि ता किंत्ति विजआभिमुहे कुमारे उव्भंतासि? (स)।

सीता। सव्वक्खत्तिअसंतापआरी परसुरामो त्ति (ह)।

राम:। प्रिये! स्वस्था सती निवर्त्तस्व।

आतङ्कभ्रमसाहसव्यतिकरोत्कम्प: क्षणं सह्यताम्
अङ्गैर्मुग्धमधूकपुष्परुचिभिर्लावण्यसारैरयम्।
उन्मद्स्तनकुम्भकुड्मलगुरुश्वासावभुग्नस्य ते
मध्यस्य त्रिवलीतरङ्गकजुषो भङ्ग: प्रिये! मा च भूत्॥२१॥

---

(ष) कातरेति कातरा व्याकुला इयं सीतेत्यर्थ: मदनिष्टाशङ्कयेति भाव:। अत्र भवतीभि: मान्याभिर्भवतीभि:। पर्य्यवस्थापनीया सान्त्वनीया।

(स) सखि सखि! सुरासुरमर्दनसमर्थं त्रैलोक्यमङ्गलं तुङ्गजयलक्ष्मीलाञ्छनम् इमं सविभ्रमविलसन्नेत्रकन्दटशोभाभृतमुखपुण्डरीकविस्तारितहृदयसम्भारा सर्वदा अस्मत्पुरतो वर्णयसि, तत् किमिति विजयाभिमुखे कुमारे उद्भ्रान्तासि? सं।

सुरेति। सुराणाम् असुराणां देवदानवानाञ्च मर्दने पराजये समर्थ: शक्त: तम्। तुङ्गेति। तुङ्गा महती जयलक्ष्मी: विजयश्री: सैव लाञ्छनं चिह्नं यस्य तथाभूतं महत्या राजश्रिया अलङ्कृतमिति भाव: इमं कुमारम्। सविभ्रमेति। सविभ्रमं विलसतो: नेत्रकन्दटयो: नयनोत्पलयो: शोभया भृतं पूर्णं यत् मुखपुण्डरीकं वदनपङ्कजं तेन विस्तारित: प्रकटित: हृदयस्य पत्यनुरागस्येति यावत् सम्भार: यया तादृशी।

(ह) सर्वक्षत्रियसन्तापकारी परशुराम इति सं।

आतङ्केति। हे प्रिये! मुग्धं सुन्दरं, मुग्ध: सुन्दरमूढयोरिति कोष:। यत् मधूक-पुष्पं तस्येव रुचि: दीप्तिर्येषां तथाभूतै: लावण्यसारै: लावण्यं मुक्ताफलेषु छायायास्तरल-त्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणं सार: स्थिरांश: सारो बले स्थिरांशे चेत्यमर:। येषां तथोक्तै: अङ्गै: अयम् आतङ्केन भयेन य: भ्रम:

[ नेपथ्ये ]

भोः भोः परिष्कषाः ! (च) क रामो दाशरथिः ?

स्त्रियः। हद्धी ! हद्धी ! एणं एव्व एसो आहुएदि (क)।

रामः। तस्यायमनरालसाहसप्रचण्डकर्मणः प्रतिभिन्न-पुष्करावर्त्तकस्तनितमांसलो वाङ्निर्घोषः कर्णविवरमाप्याययति (ख)। [ इति परिक्रामति ]

सीता। का गदी ? [ धनुषि धारयन्ती ] अज्जउत्त ! ण दाव तुम्हेहिं गंतव्वं जाव तादो णागच्छदि (ग)।

सख्यः। उद्घाटिदं दाणिं पिअसहिए रसंतरेण लज्जा-लुइत्तणं (घ)।

---

तस्य साहसं प्रभावः तस्य व्यतिकरेण सम्बन्धेन उत्कम्पः क्षणम् अल्पकालं यावता परशुरामो विजीयते इति भावः सह्यतां त्यज्यतामिति भावः। उन्नद्धयोः उन्नाहेन प्रवृद्धयोः स्तनकुम्भयोः कुड्मलाभ्यां विकासोन्मुखकलिकाभ्यां गुरुणा दीर्घेण भयजनितेनेति भावः श्वासेन अवभुग्नस्य अवरुग्णस्य त्रिवली एव तरङ्गकं क्षुद्रतरङ्गराजिरित्यर्थः तज्जुषः तद्वतः ते तव मध्यस्य कटिदेशस्य भङ्गः मा भूत् च न भवतु च। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

(च) परिष्कषाः परपुष्टाः अन्तःपुरचारिरक्षकभेदाः।

(क) हा धिक् ! हा धिक् ! एनमेव एषः आह्वयति सं०।

एनं रामम्।

(ख) तस्येति। तस्य परशुरामस्य। अनरालेति। अनरालेन अकुटिलेन छल-रहितेनेत्यर्थः साहसेन प्रचण्डानि दारुणानि कर्माणि क्षत्रियाणां हत्याव्यापारा इति यावत् यस्य तथोक्तस्य। प्रतिभिन्नेति प्रतिभिन्नानां परस्परं प्रति धावितानां पुष्करावर्त्त-कानां तदाख्यमहामेघविशेषाणां स्तनितं गर्जितं तद्वत् मांसलः स्थूलः परिपुष्ट इत्यर्थः अतिगम्भीर इति भावः। वाङ्निर्घोषः वाक्यनिस्वनः। आप्याययति प्रीणयति।

(ग) का गतिः। आर्यपुत्र ! न तावत् युष्माभिर्गन्तव्यं यावत् ततो नागच्छति सं०। गतिः उपायः। तातः पिता जनक इत्यर्थः।

(घ) उद्घाटितमिदानीं प्रियसख्या रसान्तरेण लज्जालुत्वम् सं०। उद्घाटितम्

राम:। [ स्वगतम् ] जितं जितं स्नेहेन (ङ)। [ प्रकाशम् ] तर्हि मुक्ता धनुर्गच्छामि।

[ नेपथ्ये ]

भो: भो: परिष्कषा: ! [ इत्यादि पुन: पठति। ]

सीता। तदो बलादेव धारइस्सं (च)।

राम:। हन्त हन्त ?

उत्सिक्तस्य तप:पराक्रमनिधेरभ्यागमादेकत:
सत्सङ्गप्रियता च वीररभसोन्मादश्च मां कर्षत:।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्‌ध्यन्यत: ॥ २२ ॥

सख्य:। एसो दिप्पंतदिणअरालोअप्पोल्लसंतदेहप्पहापरिक्खेबभासुरं ज्जलंतं सुणिसिदं परसुं धारअंतो ख्रिमंखलुब्बेल्लइदबहसिहासहस्सासंदेहिजटाभरो सुदूरविक्खेवाविद्धवि-

---

अपनीतं विमुक्तमिति यावत्। रसान्तरेण अन्येन रसेन भयस्थायिभावेन भयानकाख्येनेति भाव:।

(ङ) स्नेहेन अनुरागेण।

(च) ततो बलादेव धारयिष्यामीति सं। धारयिष्यामि आर्य्यपुत्रमिति शेष:।

उत्सिक्तस्येति। एकत: एकस्मिन् अंशे इत्यर्थ: उत्सिक्तस्य गर्वितस्य तपश्च पराक्रमश्च तयोर्निधि: आश्रय: तस्य भार्गवस्येति शेष: अभ्यागमात् आगमनात् सत्सङ्गप्रियता साधुसङ्गानुरागश्च वीर: उत्साहस्थायिभावो रसविशेष: तेन रभसो वेगो हर्षो वा, रभसो वेगहर्षयोरित्यमर:। तेन उन्माद: उत्साहविशेषश्च मां कर्षत:, एष च मुहु: पुन: पुन: चैतन्यं ज्ञानम् आमीलयन् स्थगयन् विमोहयन्नित्यर्थ: हरिचन्दनं चन्दनविशेष: इन्दुश्चन्द्र: ताविव शिशिर: शीतल: स्निग्ध: स्नेहपूर्ण: अतएव आनन्दी आनन्दं जनयन् वैदेह्या: सीताया: परिरम्भ: आलिङ्गनम् अन्यत: अन्यस्मिन् अंशे मां रुणद्धि कर्षति। दोलाचलचित्तो जातोऽस्मीति भाव: ॥ २२ ॥

अङ्‌ोरुदण्डणिब्भराभिघादविह्वलाइदवसुंधरो परागदो जेव्व सो सअलक्खत्तिअमहारक्खसो (छ)।

रामः। अयं स भृगुनन्दनस्त्रिभुवनैकवीरो मुनि-
र्य एष निचयो महानिव दुरासदस्तेजसाम्।
प्रतापतपसोरिव व्यतिकरः स्फुरन् मूर्त्तिमान्
प्रचण्ड इव पिण्डतामुपगतश्च वीरो रसः॥ २३॥

[ सविस्मयम् ]

पुण्योऽपि भीमकर्मा निधिर्व्रतानां चकास्त्यमितशक्तिः।
मूर्त्तिमभिराममघोरां बिभ्रदिवाथर्वणो निगमः॥ २४॥

---

(छ) एषः दीप्यमानदिनकरालोकप्रोल्लसद्देहप्रभापरिक्षेपभासुरं ज्वलन्तं सुनिशितं परशुं धारयन् विशृङ्खलवेल्लद्‌हुतवहशिखासहस्रासन्देहिजटाभारः सुदूरविक्षेपाविद्धविकटोरुदण्डनिर्भराभिघातविह्वलायितवसुन्धरः परागत एव स सकलक्षत्रियमहाराक्षसः। इति सं।

दीप्यमानस्य दिनकरस्य आलोकेन प्रोल्लसन्ती उद्भासमाना या देहप्रभा तस्याः परिक्षेपेण संयोगेन भासुरं दीप्यमानम्। विशृङ्खलेति। विशृङ्खलं विपर्य्यस्तं यथा तथा वेल्लन्तीनां स्फुरन्तीनां हुतवहशिखानाम् अग्निज्वालानां सहस्रेण असन्देही असन्दिग्धः तुल्य इति यावत् जटाभारः जटासमूहः यस्य तथाभूतः। सुदूरं सुदृढं यथा तथा विक्षेपेण आविद्धस्य पातितस्य विकटस्य उत्कटस्य ऊरुदण्डस्य निर्भराभिघातेन विह्वलायिता व्याकुलायिता विकम्पितेति भावः वसुन्धरा पृथिवी येन तथाभूतः। सकलक्षत्रियमहाराक्षसः सर्वक्षत्रियसंहारक इति यावत्।

अयमिति। अयं सः त्रिभुवनेषु एकवीरोऽद्वितीयवीरो भृगुनन्दनः मुनिः, य एषः महान् दुरासदः दुर्धर्षः तेजसां निचय इव राशिरिव प्रतापस्य तेजस्य तयोः मूर्त्तिमान् देहबद्धः स्फुरन् दीप्यमानः व्यतिकर इव सम्मेलनमिव, पिण्डतां घनताम् उपगतः प्राप्तः प्रचण्डः दारुणः वीरो रसं इव च विभातीति शेषः। पृथ्वीवृत्तं, जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात्॥ २३॥

पुण्य इति। पुण्यः पवित्रः अपि भीमं दारुणं कर्म यस्य तथाभूतः व्रतानां तपसां निधिराश्रयः अमिता अपरिमिता शक्तिः सामर्थ्यं यस्य तथोक्तः अभिरामा सौम्या घोरा

अयं हि । कल्पापायप्रणयि दधतः कालरुद्रानलत्वं
संरब्धस्य त्रिपुरजयिनो देवदेवस्य तिग्मः ।
ब्रह्मच्छद्मा निखिलभुवनस्तोमनिर्मन्थयोग्यो
राशीभूतः पृथगिव समुत्थाय सामर्थ्यसारः ? ॥ २५ ॥
अहो ! स्वाच्छन्द्यवैचित्र्यमत्रभवतः (ज) ।
ज्योतिर्ज्वालाप्रचयजटिलः सन्निधत्ते कुठार-
स्तूणीरोऽंसे वपुषि च जटाचापचीराजिनानि ।
पाणौ बाणः स्फुरति वलयीभूतलीलाक्षसूत्रे
वेशः शोभां व्यतिकरवतीमुग्रशान्तस्तनोति ॥ २६ ॥

---

दारुणा च तां मूर्त्तिं बिभ्रत् आथर्वणः अथर्वसम्बन्धी निगम इव वेद इव चकास्ति राजते। अथर्ववेदेषु मध्ये कियदंशे शुभकर्मणां विधानम् अपरस्मिन्नंशे मारणादीनाम- भिचारव्यापाराणां विधानमित्यस्य मूर्त्तेरभिरामघोरत्वमिति भावः। आर्य्यावृत्तं, यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् ॥ २४ ॥

कल्पापायेति । कल्पापायस्य कल्पान्तस्य प्रलयकालस्येत्यर्थः प्रणयि प्रियं कलयति संहर- तीति कालः स चासौ रुद्रानलश्चेति कालरुद्रानलः तस्य भावः कालरुद्रानलत्वं जगत्- संहारकाग्निरूपत्वमित्यर्थः दधतः संरब्धस्य संकुपितस्य संरब्धः संभ्रमे कोपे इत्यमरः। त्रिपुरविजयिनो देवदेवस्य शङ्करस्य तिग्मः तीक्ष्णः दारुण इति यावत् निखिलानां भुवन- स्तोमानां जगत्समूहानां निर्मन्थे संहरणे योग्यः क्षमः सामर्थ्यसारः शक्तिसञ्चयः पृथक् समुत्थाय रुद्रदेहं त्यक्त्वेति भावः ब्रह्मच्छद्मा ब्राह्मणरूपः राशीभूत इव पुञ्जीभूतः किम्? अत्र प्रकृतभार्गवप्रतिषेधेन तदन्यस्थापनोत्प्रेक्षणात् सापह्नवोत्प्रेक्षालङ्कारः। उक्तञ्च दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति च। मन्दाक्रान्तावृत्तम् ॥ २५ ॥

(ज) स्वाच्छन्द्यवैचित्र्यं स्वाच्छन्द्यं स्वेच्छाचारित्वं तेन वैचित्र्यं अद्भुतता। अत्र- भवतः पूज्यस्य ।

ज्योतिरिति । ज्योतिषां तेजसां ज्वालाः शिखाः तासां प्रचयेन निवहेन जटिलः व्याप्तः कुठारः परशुः सन्निधत्ते तिष्ठति। अंसे स्कन्धदेशे तूणीरः शरस्थली, वपुषि

प्रिये ! गुरुरयं तदपसृत्य ज्ञातावगुण्ठना (भ) भव ।

सीता । हद्धी ! हद्धी ! परागदो एव्व । [ अञ्जलिं बद्ध्वा ]

अज्जउत्त ! परित्तायस्स मं पियसाहसिय ! पसीद (ञ) ।

रामः । अयि प्रिये !

मुनिरयमथ वीरस्तादृशस्तत् प्रियं मे
विरमतु परिकम्पः कातरे ! क्षत्रियाऽसि ।
जगति विततकीर्त्तेर्दर्पकण्डूलदोष्णः
परिसरणसमर्थो राघवः क्षत्रियोऽहम् ॥ २७ ॥

[ ततः प्रविशति क्रुद्धो जामदग्न्यः ]

जाम । अहो ! दुरात्मनः क्षत्रियवटोरनात्मज्ञता ? (ट) ।

---

शरीरे जटा चापं धनुः चीरं वल्कलं कौपीनं वा अजिनं कृष्णमृगचर्म तानि तिष्ठन्तीति शेषः । वलयीभूतं लोलं चञ्चलम् अक्षसूत्रं जपमाला यस्मिन् तादृशे पाणौ हस्ते बाणः शरः स्फुरति राजते । अतः उग्रश्चासौ शान्तश्चेति उग्रशान्तः तीक्ष्णसौम्य इत्यर्थः वेशः परिच्छदः एष इति शेषः व्यतिकरवतीं विमिश्रामित्यर्थः शोभां तनोति विस्तारयति । मन्दाक्रान्तावृत्तम् ॥ २६ ॥

(भ) ज्ञातावगुण्ठना अवगुण्ठनवती ।

(ञ) हा धिक् ! हा धिक् ! परागत एव । आर्य्यपुत्र ! परित्रायस्व मां प्रियसाहसिक प्रसीदेति सं ।

परागतः उपस्थितः । प्रियेति प्रियः साहसिको वीरो यस्य तथाभूतः वीरजनप्रिय इत्यर्थः तत्सम्बुद्धौ ।

मुनिरिति । अयं मुनिः अथच तादृशः असामान्य इति भावः वीरः, तत् तस्मात् मे मम प्रियम् एतदभिगमनमिति शेषः । हे कातरे ! परिकम्पः तवेति शेषः विरमतु निवर्त्तताम् । क्षत्रिया क्षत्रकुलप्रसूता क्षत्रभार्य्या चेति भावः असि भवति, क्षत्रियजातीया वीरप्रिया वीरसूश्च भवतीति भावः अहं क्षत्रियः क्षत्रवंशप्रसूतः विशेषतो राघवः रघुवंश्यः जगति वितता विस्तृता कीर्त्तिर्यस्य तादृशस्य दर्पेण अहङ्कारेण कण्डूलौ कण्डूवन्तौ दोषौ भुजौ यस्य तथाभूतस्य अस्येति शेषः परिसरणे अभिगमने समर्थः शक्तः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥ २७ ॥

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं न श्रुतः? ॥२८॥

एष मे प्रशमस्य कर्कशः परिणामः (ठ)।

यत् क्षत्रियेष्वपि पुनः स्थितमाधिपत्यं
तैरेव सम्प्रति धृतानि पुनर्धनूंषि।
उन्माद्यता भुजबलेन मयापि कष्ट-
मुच्छृङ्खलानि चरितानि पुनः श्रुतानि ॥ २९ ॥

रामः। अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति।

---

(ट) क्षत्रियबटोः क्षत्रियकुमारस्य अनात्मज्ञता आत्मज्ञानराहित्यं कोऽयं मे आत्मा कथायमसद्व्यवहार इत्येवं रूप विवेकाभाव इति यावत्।

नेति। धनुः व्यारुजता खण्डयता तेन क्षत्रियवटुना भूतेषु प्राणिषु करुणासन्तानेन कृपातिरेकेण शान्तः आत्मा यस्य तादृशात् देवात् भवानीपतेः शङ्करात् यदि नाम न त्रस्तं न भीतम् अतिदयालुर्देवदेवो न कथञ्चित् कुप्यतीति साहसादिति भावः, तु किन्तु तस्य पुत्रः मदान्धस्य मदमत्तस्य तारकस्य तदाख्यस्य असुरविशेषस्य वधात् विश्वस्य जगतः दत्तः उत्सवः आनन्दो येन तथाभूतः स्कन्दः कार्त्तिकेयः अथवा स्कन्द इव प्रियः शिष्योऽहं कथं न श्रुतः न आकर्णितः? देवदेवात् कृपावतो भयं मास्तु तत्पुत्रात् कुमारात् तच्छि-ष्याच्च मत्तः देवदेवावमाननेन सञ्जातकोपात् भयं न गणितमिति भावः। शार्दूल-विक्रीडितं वृत्तम् ॥ २८ ॥

(ठ) प्रशमस्य क्रोधत्यागेन शान्ततयावस्थानस्येति यावत् कर्कशः दारुणः परिणामः फलं मदुपशम एतत्क्षत्रियशिशोरौद्धत्यनिदानमिति भावः।

यदिति। यतः यतः क्षत्रियेषु अपि पुनः आधिपत्यम् अधिराजत्वम् स्थितं, तैरेव सम्प्रति पुनः धनूंषि धृतानि। मयापि उन्माद्यता भुजबलेन बाहुबलेन हेतुनेति शेषः उच्छृङ्खलानि उद्धतानि चरितानि पुनः श्रुतानि। वसन्ततिलकं वृत्तम् ॥ २९ ॥

अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसंग्रहणाय च ॥ ३० ॥
किन्त्वविषयस्तावदाचारस्य (ड)।
जाम। भोः भोः परिष्कृताः! क्व रामो दाशरथिः?
रामः। अयमहं भोः! इत इतो भवान्।
जाम। साधु राजपुत्र! साधु सत्यमैक्ष्वाकः खल्वसि।

अन्विष्यतः प्रमथनाय ममापि दर्पा-
दात्मानमर्पयसि जातिविशुद्धसत्त्वः।
गन्धद्विपेन्द्रकलभः करिकुम्भकूट-
कुट्टाकपाणिकुलिशस्य यथा मृगारेः ॥ ३१ ॥

स्त्रियः। संतं पावं पड़िहदममङ्गलं (ढ)।

---

अकलितेति। न कलितः न आक्रान्तः केनापीति भावः तपसः तेजसः वीर्य्यस्य च प्रथिमा विस्तारः यस्य तादृशे यशोनिधौ महाकीर्त्तौ अवितथेन सत्येन मदेन गर्वेण आध्मातः पूरितः तस्मिन् मुनौ रोषात् अभिधावति सति पाणिः ममेति शेषः अभिनवा साम्प्रतमभ्यस्तेति भावः या धनुर्विद्या तया दर्पं क्षमते सहते इति तथोक्ताय कर्मणे चरिताय वीरसमाचारायेति यावत् च पादयोश्चरणयोरुपसंग्रहणाय च अभिवन्दनाय चेत्यर्थः भरसात् वेगात् स्फुरति प्रसरति। अस्य दर्पोपशमनाय च पादाभिवन्दनाय च इच्छा मम वर्त्तते इति भावः। हरिणीवृत्तम् ॥ ३० ॥

(ड) अविषयः अस्थानम् आचारस्य पादवन्दनरूपशिष्टव्यवहारस्य। अयमिति शेषः।

अन्विष्यत इति। जात्या अन्वयेन विशुद्धं सत्त्वं बलम् उत्साहो वा यस्य तादृशः त्वं गन्धद्विपेन्द्रकलभः मदमत्तकुञ्जरेन्द्रशिशुः करिणः गजेन्द्रस्य कुम्भकूटं कुम्भशिखरं तस्य कुट्टाकं छेदकं विदारकमित्यर्थः पाणिकुलिशं करवज्रं यस्य तथाभूतस्य मृगारेः सिंहस्य यथा दर्पात् प्रमथनाय संहाराय अन्विष्यतः ममापि आत्मानम् अर्पयसि ददासि यथा दर्पात् आत्मानमर्पयसीत्यन्वयः। वसन्ततिलकं वृत्तम् ॥ ३१ ॥

(ढ) शान्तं पापं प्रतिहतममङ्गलमिति सं। पापम् अशुभं शान्तं निवृत्तम् अमङ्गलम् अकल्याणं प्रतिहतं निराकृतं भवतु रामस्येति शेषः।

जाम। [निर्वर्ण्य स्वगतम्] रमणीयः क्षत्रियकुमार आसीत्? (ख)।

चञ्चत्पञ्चशिखण्डमण्डलमसौ मुग्धप्रगल्भं शिशु-
र्गम्भीरञ्च मनोहरञ्च सहजश्रीलक्ष्म रूपं दधत्।
द्रागदृष्टोऽपि हरत्यलं मम मनः सौन्दर्य्यसारश्रिया
हन्तव्यस्तु तथापि नाम धिगहो! वीरव्रतक्रूरताम् ॥३२॥

[प्रकाशम्]

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाक्रियाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भावविद्धः क्षणात्।
सज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ ३३ ॥

---

(ख) आसीदित्यनेन निहत एवायमिति व्यज्यते।

चञ्चदिति। चञ्चत् स्फुरत् पञ्चानां शिखण्डानां शिखानां, "बालानान्तु शिखा प्रोक्ता काकपक्षः शिखण्डक" इत्यमरः। मण्डलं निचयः यस्मिन् तथोक्तं मुग्धञ्च प्रगल्भञ्च मुग्धप्रगल्भं बाल्यप्रौढभावाभ्यां समन्वितमित्यर्थः। गम्भीरं दुरवगाहञ्च मनोहरञ्च सहजं स्वाभाविकं श्रीलक्ष्म श्रीचिह्नं यस्मिन् तादृशं रूपं दधत् असौ शिशुः द्राक् झटिति सहसेत्यर्थः दृष्टोऽपि मम मनः सौन्दर्य्यसारश्रिया सौन्दर्य्योत्कर्षशोभया अलम् अत्यर्थं हरति तथापि हन्तव्यः वध्यः नाम अहो! आश्चर्य्यं वीरव्रतस्य वीराचारस्य क्रूरतां निष्ठुरतां धिक् निन्दामीति भावः "धिङ्निर्भर्त्सनिन्दयोः" इत्यमरः। शार्दूलविक्रीडितं वृत्तम्॥ ३२॥

प्रागिति। येन अनेन कुठारेण देवो हरः जगत्सु खण्डयति रिपूनिति खण्डः परशुः यस्य तथोक्तः ख्याप्यते कीर्त्यते लोकैरिति शेषः। स एषः अशिथिलः दृढः परशुः सज्वालः सार्चिः सन् प्राक् पूर्वं न प्राप्तः निशुम्भः दलनं येन तादृशं यत् शम्भोरिदं शाम्भवं धनुः तस्य द्वेधाक्रियया द्विखण्डकरणेन भञ्जनेनेत्यर्थः आविर्भवन् सञ्जायमानः यः क्रोधः तेन प्रेरितो भीमो भयङ्करः यो भार्गवः तस्य भुज एव स्तम्भः तस्मात् अपविद्धः क्षिप्तः सन् क्षणात् अल्पेनैव समयेनेत्यर्थः तव कण्ठपीठस्य अतिथिः भवतु। अविलम्बेनैव कुठारप्रहारेण ते शिरश्छेदनं करवाणीति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥३३॥

स्त्रियः। हद्धी! हद्धी! पज्जलिदो क्खु एसो (त)।

रामः। [ सधैर्य्यबहुमानकौतुकं निर्वर्ण्य ] अयं सः—, यः किल पुरा सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन सहस्रपरिवत्सरान्तेवासिने तुभ्यं प्रसादीकृतः परशुः(थ)

सख्यः। भट्टिदारिए! पेक्ख हिअअभरिअउब्भमंतबहुमाणो णिक्कंपधीरगुरुत्तणेन उवहसइ भअवदो भग्गवस्स आउधलम्भं भट्टिदारओ (द)।

सीता। [ सविस्मयास्त्रं पश्यति ]।

रामः। [ स्वगतम् ] आश्चर्य्यमाश्चर्य्यम्। अन्य एवायं-प्रकारः। किमपि चैतदसंविज्ञातपदनिबन्धनमाहात्म्यं सौजन्यञ्च। संरम्भगम्भीरधीरश्च पौरुषावष्टम्भः। [ प्रकाशम् ] राम! दाशरथे! स एवायमाचार्य्यपाणिनां प्रियः परशुः (ध)।

---

(त) हा धिक्! हा धिक्! प्रज्वलितः खलु एषः सः।

प्रज्वलितः क्रोधप्रदीप्तः।

(थ) निर्वर्ण्य दृष्ट्वा। पुरेति। सपरिवारः सगणः कार्त्तिकेयः स्कन्दः तस्य विजयेन पराभवेण आवर्जितः वशीकृतः तेन। सहस्रपरिवत्सरान्तेवासिने सहस्रं वत्सरान् अन्ते समीपे वसतीति तथोक्ताय सहस्रं वत्सरान् शिष्यत्वमुपगतायेत्यर्थः। प्रसादीकृतः प्रसाद इति दत्त इत्यर्थः पुरा स्कन्दभार्गवौ परस्परं स्पर्द्धमानौ देवदेवं स्वस्वबलपरीक्षार्थं निवेदयामासतुः। स च उभयोरपि प्रीतः समदर्शी भगवान् उभौ युद्धार्थमादिदेश। तत्र भार्गवेण स्कन्दं पराजितं दृष्ट्वा तस्य बलातिशयेन प्रीतः तस्मै स्वं परशुं प्रसादीकृतवानिति पुरातनी कथात्रानुसन्धेया।

(द) भर्तृदारिके! प्रेक्षस्व हृदयभृतोद्भ्रान्तबहुमानो निष्कम्पधीरगुरुत्वेन उपहसति भगवतो भार्गवस्य आयुधलम्भं भर्तृदारक इति सं।

हृदयेति। हृदयं भृतं येन तथोक्तः तथापि उद्भ्रान्तः उद्गीर्णः हृदये सारल्यस्यामितत्वादिति भावः बहुमानवान् मानी भार्गवं प्रति पूज्यतानुराग इति यावत् यस्य तथाभूतः।

(ध) असंविज्ञातेति। न संविज्ञातं पदं चिह्नं किमपीति भावः निबन्धनं हेतुर्यस्य तथाभूतम् अचिन्त्यहेतुकमिति यावत् माहात्म्यं महाप्राणता सौजन्यं साधुभावश्च तादृश-

सख्यः । कथं उस्स तस्स विअ आलावो (न) ।

राम । अस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतोऽपि जित एव मया कुमारः ।
एतावताऽपि परिरभ्य धृतप्रसादः
प्रादादिमं प्रियगुणो भगवान् गुरुर्मे ॥२४॥

रामः । [ स्वगतम् ] कथमेतावताऽपीत्याह ? अहो ! गर्व-गौरवस्याभोगः [ प्रकाशम् ] अतश्च भगवन् ! द्यावापृथिव्यो-र्विततस्ते वीरवादः (प) ।

येनैव खण्डपरशुर्भगवान् प्रचण्ड-
श्चण्डीपतिस्त्रिभुवनेषु गुरुः प्ररूढः ।
तेनैव तारकरिपोर्विजयार्जितेन
दीप्तिं गता परशुराम इति श्रुतिस्ते ॥ २५ ॥

---

मिति भावः । संरम्भेति । संरम्भेण सम्भ्रमेण गम्भीरः दुरवगाहः धीरः अचपलश्च । पौरुषावष्टम्भः पुरुषकारावलम्बनम् ।

(न) कथम् उच्छ्वसत इव आलाप इति सं । उच्छ्वसत इव सन्तुष्यत इव ।

अस्त्रेति । अस्त्राणां प्रयोगस्य खुरली अभ्यासः शिक्षेत्यर्थः तत्र यः कलहः विवादः अन्योन्यं प्रति स्पर्द्धेति भावः तत्र गणानां प्रमथानां सैन्यैः वृतोऽपि कुमारः कार्त्तिकेयः मया जित एव । एतावतापि पुत्रपराजयेनापीति भावः प्रिया गुणाः यस्य सः प्रियगुणः गुणपक्षपातीत्यर्थः मे गुरुः आचार्य्यः भगवान् धृतः प्रसादः अनुकम्पा येन तथाभूतः प्रसन्न इत्यर्थः परिरभ्य आलिङ्ग्य मामिति शेषः इमं परशुं प्रादात् दत्तवान् । वसन्ततिलकं वृत्तम् ॥ २४ ॥

(प) आभोगः पूर्णता । विततः विस्तृतः विख्यात इति यावत् ।

येनैवेति । येनैव वीरवादेनेति भावः प्रचण्डः उग्रः भगवान् चण्डीपतिः खण्ड-परशुः त्रिभुवनेषु गुरुः सर्ववीरप्रधानः प्ररूढः प्रसिद्धः, तारकरिपोः तारकासुरघातिनः स्कन्दस्य विजयार्जितेन पराजयलब्धेन तेनैव वीरवादेन ते तव परशुना रमते इति परशु-राम इति श्रुतिः प्रसिद्धिः दीप्तिं गता शोभितेत्यर्थः वसन्ततिलकं वृत्तम् ॥ २५ ॥

किञ्च ।

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः
वीर्य्यं यत् तु न तद्गिरां पथि नु तद् व्यक्तं हि तत्कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किंवा न लोकोत्तरम् ॥ ३६ ॥

सख्यः । जाणादि महाभाओ गुरुअरमणिज्जं मंतिदुं (फ) ।

जाम ।

राम ! राम ! नयनाभिरामतामाशयस्य सदृशीं समुद्वहन् ।
अप्रतर्क्यगुणरामणीयकः सर्वथैव हृदयङ्गमोऽसि मे ॥ ३७ ॥

अपिच । हेरम्बदन्तमुषलोल्लिखितैकभित्ति-
वक्षो विशाखविशिखव्रणलाञ्छितं मे ।

---

उत्पत्तिरिति । जमदग्नितः महर्षेरिति भावः उत्पत्तिर्जन्म, स प्रसिद्धो भगवान् पिनाकी देवः गुरुराचार्य्यः, यत् तु वीर्य्यं सामर्थ्यं तत् गिरां वाचां पथि न, अनिर्वचनीयमित्यर्थः । हि यतः तानि कर्माणि कार्त्तवीर्य्यादिनिधनादीनीति भावः तैः तत् वीर्य्यं व्यक्तं प्रकटतां गतम् । सप्तभिः समुद्रैः मुद्रितायाः वेष्टितायाः चिह्नितायाः वा मह्याः पृथिव्याः निर्व्याजम् अकपटं दानम् अवधिर्यस्य तथाभूतः त्यागः वदान्यतेति यावत् अतः सत्यस्य ब्रह्मणः वेदस्य तपसश्च निधिः आश्रयः तस्य भगवतः सर्वशक्तिमतः तवेति शेषः किं वा न लोकोत्तरम् ? अलौकिकं न ? अपितु सर्वमेव चरितं लोकोत्तरमित्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३६ ॥

(फ) जानाति महाभागो गुरुकरमणीयं मन्त्रयितुम् स ।

गुरुकरमणीयमतिरमणीयम् । मन्त्रयितुम् आलपितुम् ।

रामेति । हे राम राम ! आशयस्य सद्भावस्य सदृशीम् अनुरूपां नयनयोः अभिरामतां प्रियतां समुद्वहन् दधानः त्वम् अप्रतर्क्यैः अचिन्त्यैः गुणैः रामणीयकं रमणीयत्वं यस्य तथाभूतः सन् मे मम हृदयङ्गमः मनोहारी असि । तव मम हृदयङ्गमत्वं कैः गुणैरित्यहं तर्कयितुं न शक्नोमीति भावः । इन्द्रवज्रा वृत्तम् ॥ ३७ ॥

हेरम्बेति । हेरम्बस्य गणेशस्य दन्त एव मुषलं तेन उल्लिखिता विद्धेति यावत्

रोमाञ्चकञ्चुकितमद्भुतवीरलाभात्
सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम् ॥ ३८ ॥

सख्यः । भट्टिदारिए ! पेक्ख भट्टिणो सोहग्गं । तुमं क्खु णिच्चपरांमुही अत्ताणअं वंचसि (व) ।

सीता । [ सास्रं निःश्वसिति ]

रामः । भगवन् ! परिरम्भणमिति प्रस्तुतप्रतीपमेतत् (भ) ।

सख्यः । धीरमसिणो अत्तणो माहात्तसोहिदो से विणओ (म) ।

रामः । [ स्वगतम् ] अहो ! स्वगुणपरगुणोत्कर्षपरिणामग्राहि सौजन्यपूतमन्तःकरणमस्य राजन्यपोतस्य । पारमार्थिकविनयदुर्विभावस्त्वतिनिपुणबुद्धिग्राह्यो महानहङ्कारः (य) ।

---

एका भित्तिः अंशः यस्य तथोक्तं तथा विशाखस्य कार्त्तिकेयस्य विशिखैः शरैः यत् व्रणं जातं तेन लाञ्छितं चिह्नितं मे मम वक्षः अद्भुतस्य वीरस्य तवेति भावः लाभात् रोमाञ्चैः कञ्चुकितम् आवृतमित्यर्थः सत् त्वां परिरब्धुम् आलिङ्गितुम् इच्छतीव सत्यं ब्रवीमि । वसन्ततिलकं वृत्तम् ॥ ३८ ॥

(व) भर्तृदारिके प्रेक्षस्व भर्तुः सौभाग्यम् । त्वं खलु नित्यं पराङ्मुखी आत्मानं वञ्चयसि सं ।

सौभाग्यं वाल्लभ्यं शत्रोरपीति भावः । नित्यं सततं पराङ्मुखी विमुखी लज्जातिरेकादिति भावः । वञ्चयसि प्रतारयसि द्रष्टव्यदर्शनविरहादिति भावः ।

(भ) परिरम्भणम् आलिङ्गनम् । प्रस्तुतेति । प्रस्तुतस्य प्रकृतस्य मद्दमनरूपस्येति भावः प्रतीपं प्रतिकूलं विपरीतमित्यर्थः ।

(म) धीरमसृण आत्मनो माहात्म्यशोभितोऽस्य विनयः सं । धीरश्चासौ मसृणः स्निग्धश्चेति धीरमसृणः ।

(य) स्वगुणेति । स्वस्य गुणानां परस्य च गुणानाम् उत्कर्षस्य परिणामः फलं तद्ग्राहि बोधकं स्वगुणोत्कर्षस्य परगुणोत्कर्षस्य च प्रकटने यत् फलं तद्बोधक्षममिति यावत् सौजन्यपूतं सौजन्येन पूतं विशुद्धम् । राजन्यपोतस्य राजकुमारस्य । पारेति । पारमार्थिकेन तात्त्विकेन नतु कपटेनेति भावः विनयेन शिष्टाचारेण दुर्विभावः विभावयितु-

अप्राकृतस्य चरितातिशयस्य भावै-
रत्यद्भुतैर्मम हृतस्य तथाप्यनास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥ ३९ ॥

आश्चर्य्यम् । सम्भाव्यमिष्टभुवनाभयदानपुण्य-
सम्भारमस्य वपुरत्र हि विस्फुरन्ति ।
लक्ष्मीश्च सात्त्विकगुणोज्ज्वलितञ्च तेजो
धर्मस्य मानविजयौ च पराक्रमस्य ॥ ४० ॥

यं हि—त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।

---

...क्यः लङ्घयितुमशक्य इत्यर्थः । मतीति । अतिनिपुणा या बुद्धिः तया यद्वा अति-निपुणा बुद्धिर्येषां तैः ग्राह्यः वेद्यः ।

अप्राकृतस्येति । अप्राकृतस्य अलौकिकस्य चरितातिशयस्य अत्यद्भुतैः अत्याश्चर्य्यैः भावैः आशयैः अस्येति शेषः, भावोऽभिप्राय आशय इत्यमरः । हृतस्यापि आकृष्टस्यापि मम तथापि किमन्येषामिति भावः अनास्था अनादरः अवहेलनमिति यावत् परिरब्धुमिच्छति त्वामिति वचसीति शेषः ममैतस्मिन् वचसि सादरं ग्रहीतव्येऽपि परिरम्भणमिति प्रस्तुतप्रतीपमिति कथनमेव भूयाननादर इति महानहङ्कारः प्रकटित इति भावः । अतः वीरशिशुकाकृतिः शिशुरूपशरीरः एषः अप्रमेयं प्रमातुमशक्यम् अपरिच्छेद्यमित्यर्थः यत् माहात्म्यं महाप्राणत्वं तस्य सारसमुदायः उत्कर्षातिशयः तन्मयः कोऽपि अनिर्वचनीय इत्यर्थः पदार्थः वस्तु भवतीति शेषः । वसन्ततिलकं वृत्तम् ॥ ३९ ॥

सम्भाव्यमिति । अस्य राजन्यपोतस्य वपुः शरीरम् इष्टः अभिलषितः भुवनानां जगताम् अभयदानमेव पुण्यसम्भारः सुकृतसञ्चयः यस्य तथाविधं सम्भाव्यं सम्भावनया गम्यमित्यर्थः अयं जगतामभयदानार्थमेव समुत्पन्नः कोऽपीति मया सम्भाव्यते इति भावः हि यतः अत्र वपुषि शरीरे लक्ष्मीश्च श्रीश्च सात्त्विकैः सत्त्वोद्रेकजनितैः गुणैः उज्ज्वलितं प्रदीप्तं तेजश्च धर्मस्य मानविजयौ च मानश्च विजयश्चेत्यर्थः पराक्रमस्य एते विस्फुरन्ति विद्योतन्ते । वसन्ततिलकं वृत्तम् ॥ ४० ॥

त्रातुमिति । लोकान् जगन्ति त्रातुं रक्षितुम् अस्त्रवेदः कायवान् शरीरी परिणतः

सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥४१॥

[ प्रकाशम् ] हे भवत्यः ! प्रवेशयन्तु इमां वधूमभ्यन्तरमेव ।

राम: । [ स्वगतम् ] एवमेवम् ।

[ नेपथ्ये ]

सीरध्वजो धनुष्पाणिरित एवाभिवर्त्तते ।
गौतमस्य शतानन्दो जनकानां पुरोहितः ॥ ४२ ॥

सख्यः । भट्टिदारिए ! परागदो एव्व तादो एहि अब्भंतरं प्पविसह्म (र) ।

सीता । [ स्वगतम् ] भअवदि सङ्गामसिरि ! एसो दे अञ्जली ।

[ इति निष्क्रान्ताः स्त्रियः ]

जाम ।

स एष राजा जनको मनीषी पुरोहितेनाङ्गिरसेन गुप्तः ।
आदित्यशिष्यः किल याज्ञवल्क्यो यस्मै मुनिर्ब्रह्म परं विवव्रे ॥४३॥

---

इव, चात्रो धर्मः ब्रह्मकोषस्य ब्रह्माण्डस्य वेदरूपधनभाण्डारस्य वा गुप्तै रचणाय तनु शरीरं श्रित इव, सामर्थ्यानां शक्तीनां समुदय इव, गुणानां सञ्चयो वा समष्टिरिव, जगत्सु यानि पुण्यानि निर्माणानि सृष्टयः तेषां राशिरिव समुदाय इव आविर्भूय देह-माश्रित्येति भावः स्थितः । मन्दाक्रान्तावृत्तम् ॥ ४१ ॥

सीरध्वज इति । सीरध्वजः जनकः । अन्यत् स्पष्टम् ॥ ४२ ॥

(र) भर्तृदारिके ! परागत एव तातः एहि अभ्यन्तरं प्रविशामः स ।

परागतः प्राप्तः उपस्थित इति यावत् ।

(ल) भगवति संग्रामश्रि ! एष ते अञ्जलिः स ।

हे संग्रामलक्ष्मि ! एष ते अञ्जलिः त्वां कृताञ्जलिः प्रार्थये यथा मे आर्य्यपुत्रो विजयी स्यादिति भावः ।

स इति । मनीषी विद्वान् । आङ्गिरसेन शतानन्देन । गुप्तः रक्षितः । आदित्यस्य

सद्वृत्त एष तथापि तु क्षत्रिय इति शिरःशूलमुत्कोपयति (व)।

[ ततः प्रविशतः संभ्रान्तौ जनकशतानन्दौ ]

शता। राजन्! किमत्र युक्तम्? (श)

जन। भगवन्!

ऋषिरयमतिथिश्चेद् विष्टरः पाद्यमर्घ्यं
तदनु च मधुपर्कः कल्पतां श्रोत्रियाय।
अथ नु रिपुरकस्माद् द्वेष्टि नः पुत्रभाण्डे
तदिह नयविहीने कार्मुकस्याधिकारः॥ ४४॥

[ इति परिक्रामतः ]

रामः। तत् किमिति अतिवाष्पायितं भवता? (ष)

जाम। न किञ्चित्।

सम्भूयैव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।

---

सूर्यस्य शिष्यः छात्रः याज्ञवल्क्यः मुनिः यस्मै जनकाय परं ब्रह्म वेदं विवव्रे विवृतवान् यं वेदमध्यापयदित्यर्थः। उपजातिवृत्तम्॥ ४३॥

(व) सद्वृत्तः सदाचारः। उत्कोपयति उद्दीपयति जनयतीति यावत्।

(श) अत्र परशुरामे इति शेषः।

ऋषिरिति। अयम् ऋषिरतिथिरभ्यागतश्चेत् भवतीति शेषः तदा श्रोत्रियाय वेदविदुषे अस्मै विष्टरः आसनं पाद्यम् अर्घ्यं तदनु तदनन्तरं मधुपर्कश्च कल्पतां दीयताम्। अथ पश्चान्तरे नु भोः रिपुः शत्रुः सन् अकस्मात् नः अस्माकं पुत्रभाण्डे पुत्ररूपधने जामातरीति भावः द्वेष्टि द्वेषं करोति, तत् तदा नयविहीने दुर्नयशालिनि इह अस्मिन् परशुरामे कार्मुकस्य धनुषः अधिकारः अस्त्रधारणं युक्तमिति भावः। मालिनीवृत्तम्॥ ४४॥

(ष) अतिवाष्पायितम् अतिशयेन वाष्पं पातितमित्यर्थः।

स त्वं नूतन एव कङ्कणधरः श्रीमान् प्रियश्चेतसो
हन्तव्यः परिभूतवान् गुरुमिति प्रागेव दूयामहे ॥ ४५ ॥

राम। भार्गव! त्रायते मामनुकम्पस इति।

जाम। अरे! किमुत त्रातोऽसि? (ख)
अमृताध्मातजीमूतस्निग्धसंहननस्य ते।
कुठारः कम्बुकण्ठस्य कष्टं कण्ठे पतिष्यति ॥ ४६ ॥

रामः। सत्यमेव करुणया प्रतिक्षिप्तोऽसि (ङ)।

जाम। आः मय्येव भ्रूकुटीधरः संवृत्तः। अरे! क्षत्रिय-डिम्ब! त्वं किल शिशुर्नववधूटिकापरिग्रह इत्यपूर्वमुपतप्यते-ऽस्माभिः (च)।

---

सम्भूयेति। यत्र आलोकपथावतारिणि दृष्टिपथं गते इत्यर्थः सुखानि सम्भूयेव मिलित्वेव चेतसि परं भूमानं विस्तारम् आतन्वते लभन्ते इत्यर्थः तथा नेत्रोत्सवः नेत्रयोरानन्दः रतिं स्नेहं प्रसौति जनयति स नूतन एव कङ्कणधरः कङ्कणं कौतुकं वैवाहिकमङ्गलहस्तसूत्रमिति यावत् तस्य धरः धृतविवाहहस्तसूत्र इत्यर्थः श्रीमान् चेतसः हृदयस्य ममेति शेषः प्रियः त्वं गुरुमाचार्यं हरमित्यर्थः परिभूतवान् अवज्ञातवान् तत्कार्मुकदलनादिति भावः अतएव हन्तव्यः बध्यः मयेति शेषः इति हेतोः प्रागेव पूर्वमेव हननादिति शेषः दूयामहे दुःखिताः स्म इत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

(ख) किमुतेति किमुत किं भोः! त्रातः रक्षितः मयेति शेषः, अहं त्वां रक्षिष्यामीति मैवं मनसि कृथा इति भावः।

अमृतेति। अमृतेन जलेन आध्मातः पूरितः यः जीमूतः मेघः तद्वत् स्निग्धं संहननं शरीरं यस्य तथोक्तस्य नवघनश्याममूर्त्तेरित्यर्थः कम्बुकण्ठस्य शङ्खकण्ठस्य ते तव कण्ठे कुठारः पतिष्यति इति कष्टं दुःखम् एतावता त्वां रक्षिष्यामीति मैव मनसि कर्त्तव्यमिति भावः ॥ ४६ ॥

(ङ) करुणया कृपया मां प्रतीति शेषः। प्रतिक्षिप्तः आकृष्टः। अथच करुणा दैन्यं दुर्बलतेति यावत् तया। दुर्बलस्य तर्जन-गर्जन-मात्रसारत्वमिति व्यज्यते।

(च) क्षत्रियडिम्ब! राजन्यार्भक! नवेति। नवा वधूटिका अल्पा वधूः बालिका

सुप्रसिद्धः प्रवादोऽयमिति हेति च गीयते ।
जामदग्न्यः स्वयं रामो मातुर्मूर्द्धानमाच्छिनत् ॥ ४७ ॥

अपि च । रे मूढ़ !

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसन्तानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान् ।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमानं
क्रोधाग्निं कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ? ॥४८॥

---

वधूरित्यर्थः तां परिष्टहीतवानिति परिग्रहः तद्वोढेत्यर्थः । अपूर्वम् अभिनवम् इतः पूर्वं कदापि मया इत्थं नोपतप्तमिति भावः ।

सुप्रसिद्ध इति । जमदग्नेरपत्यं पुमान् जामदग्न्यः रामः स्वयं मातुर्जनन्याः मूर्द्धानं शिरः आच्छिनत् चकर्त्त अयं सुप्रसिद्धः सुविख्यातः प्रवादः इति ह इति च एवं सम्भाव्यते इत्येवंरूपेणेति भावः गीयते कीर्त्यते लोकैरिति शेषः एतस्मिन्नपि कर्मणि न मया उप-तप्तमिति भावः । पुरा भार्गवजननी रेणुका पत्युर्जमदग्नेः सकाशात् जलमानेतुं नर्मदा-मगमत् तत्र हैहयाधिपतिः कार्त्तवीर्य्यः बहुभिः कामिनीभिः परिवृतो जलक्रीडामकरोत् । तदवलोक्य रेणुकायास्तत्राभिलाषात् तद्दर्शने कालातिपातः संवृत्तः । अथागतां तां जमदग्निः क्रोधपरीतः हन्तुं पुत्रानादिदेश । अपरे पुत्रास्तद्वचनं न शुश्रुवुः । एक एव परशुरामः पितुराज्ञया तस्या जनन्याः शिरश्चिच्छेदेति वार्त्तात्रानुसन्धेया । अनुष्टुब्वृत्तम् ॥ ४७ ॥

उत्कृत्येति । क्षत्रसन्तानेषु क्षत्रियान्वयेषु रोषः कोपः तस्मात् गर्भानपि क्षत्रिय-नारीणां गर्भस्थितानपि जीवान् उत्कृत्य उत्कृत्य बहिष्कृत्य बहिष्कृत्य शकलयतः खण्डयतः एकविंशत्यवधि एकविंशतिवारानित्यर्थः सर्वतः समन्तात् सर्वान् वा राज-वंश्यान् क्षत्रियान्वयजान् विशसतः व्यापादयतः उद्दामस्य विकटचारिणः पित्र्यं पितृत आगतं पितृनिधनात् जातमिति भावः क्रोधाग्निं तेषां क्षत्रियाणां रक्तैः पूर्णः यो ह्रदः तत्र सवनं स्नानं पितृतर्पणसहितमिति भावः तर्पणस्य स्नानाङ्गत्वात् न तस्य पृथगुक्तिरिति बोध्यम् । तेन यो महान् आनन्दः तेन मन्दायमानम् उपशान्तप्रायमिति भावः कुर्वतः मे मम स्वभावः सर्वैः भूतैः प्राणिभिः न विदितः खलु इति न,—अपितु विदित एवेत्यर्थः । एतत् ज्ञात्वापि न मयोपतप्तमिति भावः । पुरा कार्त्तवीर्य्यः मृगयां परि-चरन् जमदग्नेराश्रममाजगाम । स च महर्षिस्तं राजानं निजहोमधेनुप्रभावात् दिव्य-

रामः। नृशंसता हि नाम तत्र पुरुषदोषः, का तत्र विकत्थना? (क)।

जाम। आः क्षत्रियवटो! अति नाम प्रगल्भसे? (ख)।

प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहं

मयि तु कृतनिघाते किं विदध्याः परेण।

धगिति विततवह्न्युद्गारभास्वत्कुठार-

प्रविघटितकठोरस्कन्धबन्धः कबन्धः? ॥ ४८ ॥

---

भोगादिभिरतिथिसत्कारैः प्रीणयामास। राजा तु होमधेनोस्तादृशं प्रभावं ज्ञात्वा प्रतिष्ठमानो मुनिमुवाच, भगवन्! देहि मे धेनुमिमां रत्नभूतां रत्नानि पृथिव्यां सर्वाणि राजगाम्याणीति शास्त्रविदः कथयन्ति। तदस्यां ममैवाधिकार इति। ऋषिस्तु तं प्रत्याचख्यौ। अथ क्रुद्धो राजा बलात् तां धेनुं गृहीत्वा स्वराजधानीं प्रतस्थे। अथागतं पुत्रं परशुरामं स मुनिर्होमधेनुहरणवृत्तान्तमाख्यत्। परशुरामस्तु तथा पितरमवमतं कार्त्तवीर्य्येण श्रुत्वा सद्य एव परशुहस्तस्तद्राजधानीमागत्य तं कार्त्तवीर्य्यं निहत्य होमधेनुं प्रत्याहरत्। अथैकदा परशुरामे स्थानान्तरं गते एकाकिनं स्थितं तत्पितरं जमदग्निं कार्त्तवीर्य्यवधजनितामर्षा हैहयाः समभ्येत्य निजघ्नुः। ततश्च परशुरामः पितरं निहतं दृष्ट्वा नितरां क्रोधज्वलितः एकविंशति वारान् क्षत्रियान्वयजान् सर्वानेव निहत्य पितरं तर्पयिष्ये इति प्रतिज्ञाय तथैव कृतवानिति पौराणिकी वार्त्तानुसन्धेया। स्रग्धरावृत्तम् ॥ ४८ ॥

(क) नृशंसता निष्ठुरता निर्दयतेत्यर्थः। तत्र सर्वक्षत्रियनिधने इति भावः पुरुषदोषः पुरुषस्य तथा निष्ठुरमाचरत इभि भावः दोषः। अपराधिनां दण्डनं न दोषमावहति निरपराधानान्तु गर्भस्थानामपि तथा दण्डनं सर्वथा दोष एवेति तत्र तस्मिन् कर्मणि विकत्थना श्लाघा का? अनुचितैव विकत्थनेति भावः।

(ख) प्रगल्भसे स्पर्द्धसे धार्ष्ट्यमाचरसि वेत्यर्थः।

प्रहरेति। प्रहर प्रहारं कुरु मयीति शेषः, चापं धनुः नमतु नतं भवतु ज्यारोपणादिति शेषः धनुषि अस्त्रं योजयित्वा मां प्रति प्रहरेति निष्कर्षः। ननु कथमहं प्रथमं प्रहरामीति चेत्तत्राह प्रागिति अहं प्राक् पूर्वं प्रहारस्य प्रवृत्तस्य प्रियः, मयि तु कृतः निघातः प्रहारो येन तादृशे सति तु प्राक् प्रहरतीत्यर्थः परेण अनन्तरं धगिति

जनक-शतानन्दौ। वत्स रामभद्र ! विस्रब्धं तावदास्स्व (ग)

राम:। कष्टमनुज्ञानापेक्ष: संवृत्तोऽस्मि (घ)।

जाम। अपि सुखमाङ्गिरसस्य ? (ङ)।

शता। विशेषतस्त्वद्दर्शनात्।

अपि च—

त्वं न: पूज्यतमोऽतिथिर्यदि तत: सज्जातिथेया वयम् (५०)अ

जाम। पुरोध: ! सुचरितवृत्त: श्रोत्रियो गृहमेधी याज्ञवल्क्यशिष्य: तत्र सर्वं युज्यते किन्तु नाहमातिथ्यकाम:।

शता।

कन्यान्त:पुरमक्रमात् प्रविशता संदूषिता न: स्थिति:। (५०आ)

जाम। अरण्यवासी ब्राह्मणोऽहमनभिज्ञ: परमेश्वरगृहाचारस्य (च)।

---

वितता विसृता वह्नेः उद्‌गारा: यस्मात् तथाभूत: य: भास्वान् दीप्यमान: कुठार: तेन प्रविघटित: निकृत्त: कठोर: कठिन: स्कन्धबन्ध: कण्ठदेश: यस्य तथाभूत: कबन्ध: निर्मस्तककलेवरमित्यर्थ: सन् किं विदध्या: ? कुर्य्या: न किमपि कर्त्तुं शक्नुया इत्यर्थ:। कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरमित्यमर:। मालिनीवृत्तम् ॥ ४९ ॥

(ग) विस्रब्धं नि:शङ्कम्। आस्स्व तिष्ठ।

(घ) अनुज्ञानापेक्ष: अनुज्ञानम् अनुमतिम् अपेक्षते इति तथोक्त:।

(ङ) आङ्गिरसस्य शतानन्दस्य।

त्वमिति। यदि त्वं न: अस्माकं पूज्यतम: अतीव पूज्य: अतिथि: भवसीति शेष: ततस्तदा वयं सज्जं प्रस्तुतम् आतिथेयम् आतिथ्योचितं द्रव्यं येषां तथाभूता:। आतिथ्यग्रहणाय भवन्तमभ्यर्थयाम इति भाव: ॥ ५०—अ ॥

तर्हीत्यध्याहार्य्यं तर्हि यदि आतिथ्यकामो नास्मि तदित्यर्थ: अतिथीनामभ्यन्तरगमने न दोष इति भाव:। अक्रमात् नैयविरोधादित्यर्थ: कन्यान्त:पुरं प्रविशता त्वया न: अस्माकं स्थिति: मर्य्यादा शिष्टाचार इति यावत् संदूषिता मलिनीकृता ॥ ५०—आ ॥

(च) परमेश्वरगृहाचारस्य राजगृहव्यवहारस्य।

रामः। [स्वगतम्] शोभत एव दत्तभुवनैकदक्षिणस्य सामन्तेषु अहङ्कारोत्प्रासः (छ)।

जन।

पापं वाञ्छसि कर्म राघवशिशावस्मत्सनाथे कथम्? (५०इ)

[प्रविश्य] कञ्चुकी।

देव्यः कङ्कणमोचणाय मिलिता राजन्! वरः प्रेष्यताम्॥ (५०ई)

जनक-शतानन्दौ। वत्स रामभद्र! श्वश्रूजनस्त्वामाह्वयति तद्गम्यताम्।

रामः। भगवन् जामदग्न्य! एवमादिशन्ति गुरवः।

जाम। को दोषः क्रियतां लोकधर्मः (ज)। पश्यन्तु च त्वां ज्ञातयः। किन्तु न चिरं जनपदेषु आरण्यकास्तिष्ठन्ति। गन्तुकामोऽस्मि। अतो न कालः परिक्षेप्तव्यः।

रामः। एवम्।

[प्रविश्य] सुमन्त्रः।

भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः।

इतरे। क्व भगवन्तौ?

---

(छ) दत्तेति दत्ता भुवनं पृथिवी एव एका मुख्या दक्षिणा कश्यपायेति भावः येन तथाभूतस्य। सामन्तेषु साधारणराजसु। अहङ्कारोत्प्रासः अहङ्कारेण गर्वेण उत्प्रासः परिहासविशेषः। उत्प्रासः समनाक् स्मितमित्यमरः।

पापमिति। अस्मत्सनाथे अस्मद्रक्षिते इति भावः राघवशिशौ रामे पापम् अनिष्टं कर्म तद् वधरूपमिति भावः कथं वाञ्छसि? अभिलषसि?॥ ५० इ॥

देव्यः राजमहिष्यः कङ्कणमोचणाय हस्तसूत्रत्यागाय मिलिताः सङ्गताः, हे राजन्! वरः जामाता रामः प्रेष्यताम्। शतानन्दवचसी द्वौ पादौ जनकस्य च एकः पादः कञ्चुकिवचस्य चतुर्थः पाद इति मिलित्वा शार्दूलविक्रीडितवृत्तमेतदिति बोध्यम्॥ ५० ई॥

(ज) लोकधर्मः लोकाचारः।

सुम । महाराजदशरथस्यान्तिके ।

रामः । गुरुवचनाद्गच्छामः ।

इतरे । तत्रैव गच्छामः ।

[ इति निष्क्रान्ताः सर्वे ]

इति परशुरामसंवादो नाम द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

[ ततः प्रविशतो वशिष्ठविश्वामित्रौ जनकशतानन्दौ च ]

वशिष्ठविश्वामित्रौ । जामदग्न्य !

इष्टापूर्त्तविधेः सपत्नशमनात् प्रेयान् मघोनः सखा
येन द्यौरिव वज्रिणा वसुमती वीरेण राजन्वती ।
यस्यैते वयमग्रतः किमपरं विश्वस्य वैवस्वतः
सोऽयं त्वां तनयप्रियः परिणतो राजाऽभयं याचते ॥१॥

---

इति बि, ए, उपाधिधारिणा श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण विरचिता महावीरचरितनाटकस्य द्वितीयाङ्कव्याख्या समाप्ता ।

---

इष्टेति । अग्निहोत्रादियज्ञरूपं कर्म्म इष्टं पूर्त्तं खातादिकर्म्म । तथाच, वापीकूप-तड़ागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते इति मनुः । तयोः समाहारः इष्टापूर्त्तं तस्य विधेः अनुष्ठानस्य सपत्नाः शत्रवः राक्षसादय इत्यर्थः तेषां शमनात् दमनात् यः मघोनः इन्द्रस्य प्रेयान् अतिप्रियः सखा, येन वीरेण वज्रिणा इन्द्रेण द्यौरिव सुरपुरीव वसुमती पृथिवी राजन्वती सुराजवती अस्तीति शेषः, सुराज्ञि देशे राजन्वानित्यमरः । एते वयम् असत्सङ्गविमुखा इति भावः यस्य अग्रतः तिष्ठाम इति शेषः अपरं किं वक्तव्यमिति शेषः सोऽयं विश्वस्य जगतः राजा तनयप्रियः पुत्र-

तद्विरम शुष्ककलहात् (क)। इदं तु अस्तु—

संज्ञप्यते वत्सतरी सर्पिष्यन्नं च पच्यते।

श्रोत्रियः श्रोत्रियगृहानागतोऽसि जुषस्व नः ॥ २ ॥

जाम। अत्र वो विज्ञापयामि किन्तु क्षमे यदि रामः प्रकृष्टवीर्य्यो न स्यात्। पश्यन्तु भवन्तः—

रामः कर्मभिरद्भुतैः शिशुरपि ख्यातस्ततो भार्गवः

कस्मात् प्राप्य तिरस्क्रियामसहनोऽप्यस्थादिति प्रस्तुते।

को विद्यात् गुरुगौरवादिति भवेज्ज्ञातापि वक्ता पुन-

र्नैवास्ति यथास्थितस्य सुलभद्वेषं हि वीरव्रतम् ॥ ३ ॥

---

वत्सलः परिणतो वृद्धो वैवस्वतः सूर्य्यवंश्यः दशरथ इति शेषः त्वाम् अभयं याचते प्रार्थयते। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(क) शुष्ककलहात् विरसविवादात् निरर्थकविरोधादिति यावत्।

संज्ञप्यते इति। वत्सतरी अप्राप्तदम्यावस्था गौः संज्ञप्यते आलभ्यते मार्य्यते इति यावत्, सर्पिषि घृते अन्नं पच्यते च, श्रोत्रियः वेदपारगस्त्वं श्रोत्रियगृहान् आगतः असि नः अस्मान् जुषस्व आनन्दय। समांसो मधुपर्क इत्याम्नायानुसारेण गृहागतश्रोत्रियातिथेः सत्कारार्थं वत्सतरीसंज्ञपनस्य शास्त्रीयत्वादिति भावः। अनुष्टुब् वृत्तम् ॥२॥

राम इति। शिशुरपि रामः अद्भुतैः लोकातीतैः कर्म्मभिः हरधनुर्भङ्गादिभिरिति भावः ख्यातः प्रसिद्धिं गतः। असहनः असहिष्णुरपि परावमानस्येति भावः भार्गवः ततः रामात् तिरस्क्रियाम् अवमाननां गुरुधनुर्भङ्गरूपाप्रियकार्य्यजनितामिति भावः प्राप्य कस्मात् अस्थात् तस्थौ सुस्थ आसीदिति भावः इति प्रस्तुते प्रसङ्गेन उपस्थिते इति यावत् गुरूणां भवतां गौरवात् वचनातिक्रमस्यायुक्तत्वादिति भावः इति कारणमिति शेषः को जनः विद्यात् जानीयात् विश्वसेदिति यावत् न कोऽपीत्यर्थः। यदि यथास्थितस्य व्यापारस्येति शेषः ज्ञातापि भवेत् पुनः किन्तु वक्ता नैवास्ति नैव विद्यते। नन्वस्तु तथा, तेन किमित्याह सुलभेति हि यतः वीरव्रतं वीराचारः सुलभः सहजः द्वेषः वैरम् अवमाननासमुत्थ इति भावः यस्मिन् तथोक्तम्। वीरा हि कथमपि अवमाननां न सहन्ते इति नियम इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

अपिच । यशसि निरवकाशं विश्वतश्चीयमाने
कथमपि वचनीयं प्राप्य यत्किञ्चिदेव ।
कृतविततिरकस्मात् प्राकृतैरुत्तमानां
विरमति न कथञ्चित् कश्मला किंवदन्ती ॥४॥

वशिष्ठः । अयि वत्स ! किमनया यावज्जीवमायुधपिशाचिकया ? श्रोत्रियोऽसि जामदग्न्य ! पूतं भजस्व पन्थानमारण्यकस्यासि । तत् प्रचिनु चित्तप्रसादनीश्चतस्रो मैत्र्यादिभावनाः प्रसीदतु हि ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः समापयतु परशुं च (ख)। तत्प्रसादजम् ऋतम्भराभिधानम् अबहिःसाधनोपाधेयसर्वार्थसामर्थ्यम् अपविद्धविप्लवोपरागम् ऊर्जस्वलम् अन्तर्ज्योतिषो दर्शनं प्रज्ञानम् अभिसम्भवति । अन्यत्र च अभिनिविष्टोऽसि (ग) । पश्य—

---

यशसीति । विश्वतः समन्तात् निरवकाशं यथा तथा ईदृक् स्थानं नास्ति यत्र यशो न विस्तृतमिति भावः चीयमाने वर्द्धमाने यशसि उत्तमानां महतां कथमपि यत्किञ्चिदेव अल्पमात्रमेवेति भावः वचनीयं निन्दावादं प्राप्य प्राकृतैः इतरजनैः अकस्मात् विना हेतुमिति यावत् कृता विततिः विस्तारः यस्याः तादृशी सती कश्मला मलिना किंवदन्ती जनश्रुतिः कथञ्चित् कथमपि न विरमति न निवर्त्तते । यत्किञ्चिदेव महतां दूषणं लोकाः विविधैरलङ्कारैः वितन्वन्तः महदिव बहिः प्रकटयन्तीति भावः । मालिनीवृत्तम् ॥ ४ ॥

(ख) आयुधपिशाचिकया अस्त्रधारणप्रवृत्त्येति भावः । चित्तप्रसादनीः हृदयसन्तोषदायिनीः । मैत्र्यादिभावनाः मैत्री करुणा मुदिता उपेक्षा चेति योगशास्त्रप्रसिद्धाः भावना भावविशेषाः ताः । सुखिषु साधु एषां सुखमिति मैत्रीं सौहार्द्दं कुर्य्यात् नत्वीर्ष्याम् । दुःखितेषु कथं नामैषां दुःखनिवृत्तिः स्यादिति करुणां कृपामेव कुर्य्यात् नौदास्यम् पुण्यकर्मिषु तदनुमोदनमेव मुदितां कुर्य्यात् नतु द्वेषम् । पापिषु उपेक्षाम् औदासीन्यमेव भावयेत् नानुमोदनमिति । विशोका सुखमयसत्त्वाभ्यासवशात् रजोगुणपरिणामरूपशोकरहिता चित्तस्य स्थैर्य्यहेतुभूता । ज्योतिष्मती सत्त्वोदयातिरेकशालिनी । समापयतु त्याजयतु ।

(ग) तत्प्रसादजमिति । तस्याश्चित्तवृत्तेः प्रसादात् इति जायते तथोक्तम् ऋतं सत्यं

परिषदियमृषीणामेष वृद्धो युधाजित्
सह नृपतिरमात्यैर्लोमपादश्च वृद्धः।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामङ्ग! भो! याचकस्ते॥ ५॥

जाम। एवमेतत्। किन्तु—

शत्रुमूलमनुत्खाय न पुनर्द्रष्टुमुत्सहे।
त्र्यम्बकं देवमाचार्य्यमाचार्य्यानीञ्च पार्वतीम्॥ ६॥

विश्वा। यदि गुरुषु अनुरुध्यसे चिन्तयस्व मामपि ततः (घ)। किञ्च।

---

बिभर्त्तीति ऋतम्भरा कदाचिदपि विपर्य्ययज्ञानेन नाच्छाद्यते इति म...पूर्णेति यावत् प्रज्ञा अभिधानं यस्य तादृशम्। अबहिरिति। अबहिःसाधनेन अभ्यन्तरसाधनेनेत्यर्थः उपाधेयं सम्पाद्यं सर्वार्थेषु सर्वविषयेषु सामर्थ्यं यस्य तथोक्तम्। अपविद्धेति। अपविद्धः विगतः विप्लवस्य विपर्य्ययस्य अनुरागः आवेशः यस्मिन् तादृशम्। ऊर्जस्वलं तेजस्वलम्। अन्तर्ज्योतिषः परमार्थरूपस्य। दृश्यते अनेनेति दर्शनं साक्षात्कारसाधनमित्यर्थः प्रज्ञानं प्रकृष्टं ज्ञानम्। अभिसम्भवति सर्वतोभावेन प्रसरति। तद्धि तदेव। आचरितव्यम् अनुष्ठातव्यम्। येन आचरणेन। अन्यत्र च अन्यस्मिन् व्यापारे च ब्राह्मणानाचरणीये इति भावः अभिनिविष्टः आविष्टः।

परिषदिति। अङ्गेत्यामन्त्रणे। भो भो जामदग्न्य! इयम् ऋषीणां परिषद् सभा, एषः वृद्धः स्थविरः युधाजित् कैकयराजपुत्रो भरतमातुलः, अमात्यैः सह नृपतिर्दशरथः, वृद्धो लोमपादश्च, अयम् अविरतयज्ञः असमाप्तक्रतुः पुराणः स्थविरः ब्रह्मवादी वेदपारगः जनकानां विदेहवंशीयानां प्रभुः सीरध्वजोऽपि ते तव याचकः अभयप्रदानार्थमिति भावः। मालिनीवृत्तम्॥ ५॥

शत्रुमूलमिति। शत्रोर्मूलं शत्रुरेव मूलं वा अनुत्खाय अनुन्मूल्य आचार्य्यं देवं त्र्यम्बकम् आचार्य्यानीम् आचार्य्यपत्नीं पार्वतीञ्च पुनः द्रष्टुं न उत्सहे न शक्नोमि। अनुष्टुब्वृत्तम्॥ ६॥

(घ) अनुरुध्यसे अनुरोधं करोषि गुर्वनुरोधात् एतस्मिन् प्रवर्त्तसे इत्यर्थः, मामपि

हिरण्यगर्भादृषयो बभूवुर्वशिष्ठभृग्वङ्गिरसप्रमुखयो ये ।
सोऽयं वशिष्ठो भृगुनन्दनस्त्वमयं हि तस्याङ्गिरसः प्रपौत्रः ॥७॥

जाम । प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
नत्वेव दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥ ८ ॥

तथाहि । यतो विमुक्तेरपि मानरक्षणं
प्रियं निसर्गेण तथाच पश्य मे ।
सनाभयो यूयमयञ्च कर्कशः
शरासनज्याकिणलाञ्छनो भुजः ॥ ९ ॥

विश्वा । [ स्वगतम् ]
सम्पूजितं हि माहात्म्यमुद्गिरन्त्यः पदे पदे ।
अपि मर्मविधो वाचः सत्यं विस्मापयन्ति माम् ॥ १० ॥

---

गुरुमिति शेषः । विश्वामित्रस्य भगिनीपुत्रपत्नी रेणुका । भार्गवस्य जननीत्यतो विश्वामित्रस्य पितृमातुलत्वात् गुरुत्वमिति भावः ।

हिरण्येति । हिरण्यगर्भात् ब्रह्मणः ये वशिष्ठभृग्वङ्गिरसः त्रयः ऋषयः बभूवुः जाताः,, अयं स वशिष्ठः, त्वन्तु भृगुनन्दनः, अयं हि तस्य अङ्गिरसः प्रपौत्रः शतानन्दः । तदेषामपि सम्बन्धात् तव गुरुत्वमिति भावः ॥ ७ ॥

प्रायश्चित्तमिति । पूज्यानां गुरूणामिति भावः वः युष्माकं व्यतिक्रमात् वचनाप्रतिपालनादिति भावः प्रायश्चित्तं पापशुद्धिजनकं कर्म्म करिष्यामि । तु किन्तु शस्त्रग्रह एव महत् व्रतं तत् नैव दूषयिष्यामि नैव त्यक्ष्यामीति यावत् । अनुष्टुब्वृत्तम् ॥ ८ ॥

यत इति । यतः हेतोः मानरक्षणं शस्त्रग्रहेणेति भावः निसर्गेण प्रकृत्या मे मम विमुक्तेरपि कैवल्यादपि प्रियं प्रीतिकरम् । तथाच तथैव मानरक्षणस्य प्रियत्वमेवेति भावः पश्य अवलोकय । यूयं सनाभयः सपिण्डाः, अयञ्च कर्कशः कठिनः शरासनस्य धनुषः ज्या मौर्वी तस्याः किण एव लाञ्छनं चिह्नं यस्य तथाभूतः भुजः बाहुः । सपिण्डा यूयं विमुक्तिप्रियाः अहं तथा न तत्र हेतुरयं मे कर्कशो भुज इति भावः ॥ ९ ॥

सम्पूजितमिति । मर्म्मविधोऽपि अरुन्तुदा अपि वाचः पदे पदे प्रतिपदं सम्पूजितं हि संगृहीतमिव माहात्म्यं महाप्राणत्वं महोत्साहरूपमिति यावत् उद्गिरन्त्यः प्रकटयन्त्य इति या ...त् मां सत्यं विस्मापयन्ति विस्मितं कुर्वन्ति । अनुष्टुब्वृत्तम् ॥ १० ॥

जाम । अपिच भगवन् कुशिकनन्दन !

ब्रह्मैकतानमनसो हि वशिष्ठमिश्रा-
स्त्वं ब्रूहि वीरचरितेषु गुरुः पुराणः ।
वंशे विशुद्धिमति येन भृगोर्जनित्वा
शस्त्रं गृहीतमथ तस्य यदत्र युक्तम् ॥ ११ ॥

वशि । [ स्वगतम् ]

कामं गुणैर्महानेष प्रकृत्या पुनरासुरः ।
उत्कर्षात् सर्वतो वृत्तेः सर्वाकारं हि दृप्यति ॥ १२ ॥

विश्वा । वत्स ! एतद् ब्रवीमि—

एकव्यक्त्यपराधकोपविकृतस्त्वं क्षत्रजातेरपि
प्रागाधाननिरन्वयप्रमथनादुच्छेदमेवाकरोः ।
त्रिःसप्तावधि विप्रशुक्रजमपि क्षत्रं तदेवोद्धरन्
वृद्धैः स्वैः श्रवणादिभिर्नियमितः क्रोधाद् व्यरंसीरिति ॥१३॥

---

ब्रह्मेति । वशिष्ठमिश्राः मान्या वशिष्ठादयः ब्रह्मणि परमात्मनि एकतानम् एकाग्रं मनो येषां तथाभूताः, तदेषामेतस्मिन् व्यापारे प्रवृत्तिर्नैव सम्भवतीति भावः । त्वन्तु वीरचरितेषु पुराणो गुरुः विशेषेण वीराचारज्ञ इति भावः येन भृगोर्विशुद्धिमति विशुद्धे वंशे जनित्वा उत्पद्य शस्त्रं गृहीतम् अथेदानीं तस्य मम अत्र विषये यत् युक्तं तत् ब्रूहि कथय । विशुद्धवंशीयानां प्रतिज्ञातं नान्यथा करणीयमिति भावः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

काममिति । एषः भार्गवः गुणैः कामम् अतिशयेन महान् प्रकृत्या स्वभावेन पुनः आसुरः प्रचण्ड इति भावः वृत्तेः चरितस्य सर्वतः सर्वैः प्रकारैः उत्कर्षात् सर्वाकारं यथा तथा सर्वप्रकारं हि दृप्यति अहङ्करोति । अनुष्टुब् वृत्तम् ॥ १२ ॥

एकेति । त्वम् एकस्या व्यक्तेः जनस्य कार्त्तवीर्य्यस्येति भावः अपराधेन पितुर्होमधेनुहरणेन तत्पुत्रैश्च पितृनिधनेनेति भावः यः कोपः तेन विकृतः विकारं गतः सन् प्राक् पूर्वं त्रिःसप्तकृत्वः एकविंशतिवारानित्यर्थः आधाने गर्भस्य उत्पादनार्थं वीर्य्यनिषेकेऽपि नास्ति अन्वयः सम्बन्धः यत्र तादृशं यत् प्रमथनं विध्वंसनम् आबालवृद्धहननमिति

जाम। व्यंसिश्नैव पितृवधप्रयुक्तात् चत्रवधमहाधिकारात् किमत्र निह्नवः (ङ)

परशुरयनिखण्डः चत्रघातं विहाय
प्रियमपि समिदिध्मवश्चनः किं न जातः ? ।
निभृतविशिखदंष्ट्रश्चापदण्डोऽपि धत्ते
विगलितविषवक्रैः साम्यमाशीविषस्य ॥ १४ ॥

एवं मया नियमितश्च्यवनादिवाक्यैः
कोपानलस्य परशुश्च पुनर्यया तैः ।

---

भावः। तस्मात् चत्रजातेरपि उच्छेदमेव अभावमेव अकरोः कृतवानसि। ततः विप्राणां ब्राह्मणानां शुक्रजं शुक्रोत्पन्नमपि चत्रजमपीति भावः तदेव चत्रं पुनः उद्धरन् उच्छिन्दन् स्वैः आत्मीयैः वृद्धैः पूर्वपुरुषैरित्यर्थः च्यवनादिभिः नियमितः उपशमितः सन् क्रोधात् व्यरंसीः विरतः असि इति ब्रवीमीति पूर्वेणान्वयः। तदेव विरतावपि पुनः कथं तत्र प्रवर्त्तसे इति भावः। तथाच महाभारतम्। एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना। त्रिःसप्तकृत्वः पृथिवी कृता निःचत्रिया पुरा। एवं निःचत्रिये लोके कृते तेन महर्षिणा। उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः। पाणिग्राहस्य तनय इति वेदेषु निश्चितम्। धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः। लोकेऽप्याचरितो दृष्टः चत्रियाणां पुनर्भवः। ततः पुनः समुदितं चत्रं समभवत्तदेति। शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

(ङ) चत्रेति। चत्राणां वध एव महाधिकारः महान् व्यापारः तस्मात्। निह्नवः गोपनम्।

परशुरिति। अयश्खण्डः वज्रशकलरूप इत्यर्थः परशुः चत्राणां घातम् उच्छेदं प्रियमपि प्रीतिकरमपि विहाय परित्यज्य समिधाम् उदुम्बराणां इध्मानां काष्ठानां व्रश्चनः छेदनः किं न जातः? अपितु जात एवेत्यर्थः। निभृता निर्व्यापारेति यावत् विशिखः शर एव दंष्ट्रा यस्य तादृशः चापदण्डः धनुर्यष्टिरपि विगलितः विषमेव वक्रिर्यस्मात् तथाविधस्य निर्विषस्येति यावत् आशीविषस्य भुजङ्गस्य साम्यं सादृश्यं धत्ते दधाति। मालिनीवृत्तम् ॥ १४ ॥

कालेन पार्थिवकुलैः ककुभो महद्भि-
र्दग्धोत्थितैरिव वनैर्गहना: क्रियन्ते ॥ १५ ॥

निमित्तान्तरात् तु शीर्षच्छेद्यो राम इति । अथेदानीम्

एतस्य राघवशिशोः कृतचापलस्य
लूत्वा शिरो मयि वनाय पुनः प्रयाते ।
स्वस्थाश्चिराय रघवो जनकाश्च सन्तु
मा भूत् पुनर्वत कथञ्चिदतिप्रसङ्गः ॥ १६ ॥

शता । शक्तिरस्ति कस्यचिद्विदेहराजस्य राजर्षेर्याज्यस्य मे प्रेयसश्छायामपि अवस्कन्दितुं ? किमङ्ग ! जामातरम् (च) ।

वयमिह यथा गृह्यो वह्निस्तथैव चिरं स्थिताः
सुरचितगुरुस्तम्भाधारे गृहे गृहमेधिनः ।
यदि परिभवस्तत्रान्यस्मादुपैति धिगस्तु नः
प्रियमपि ततो धिग् ब्राह्मण्यं धिगङ्गिरसः कुलम् ॥ १७ ॥

---

एवमिति । च्यवनादीनां वाक्यैः मया कोपानलश्च परशुश्च एवम् इत्थं नियमितः उपशमितः यथा यतः मदुपशमनादित्यर्थः पुनः तैः पार्थिवकुलैः क्षत्रकुलैः कालेन महद्भिः विस्तारं गतैरिति यावत् दग्धोत्थितैः वनैरिव ककुभः दिशः गहनाः निविड़ाः पूर्णा इति भावः क्रियन्ते । वसन्ततिलकं वृत्तम् ॥ १५ ॥

निमित्तान्तरात् कारणान्तरात् गुर्ववमाननेन मदप्रियकरणादिति भावः ।

एतस्येति । कृतं चापलं धाष्ट्र्यं येन तथाविधस्य एतस्य राघवशिशोः रामस्य शिरः लूत्वा छित्त्वा मयि पुनः वनाय प्रयाते प्रस्थिते सति रघवः रघुवंश्याः जनकाश्च विदेह-कुलजाश्च चिराय स्वस्थाः सन्तु भवन्तु, पुनः कथञ्चित् अतिप्रसङ्गः अत्याचारः एषामिति शेषः मा भूत् न भवतु वत खेदे । ईदृगतिप्रसङ्गे मम महान् खेदः स्यादिति भावः । वसन्ततिलकं वृत्तम् ॥ १६ ॥

(च) याज्यस्य याजनीयस्य । प्रेयसः अतिप्रियस्य । अवस्कन्दितुम् आक्रमितुम् ।

वयमिति । सुरचिताः गुरवः महान्तः स्तम्भा आधारा आश्रयाः यस्य तादृशे इह अस्मिन् गृहमेधिनः गृहपतेः जनकस्य गृहे वयं गृह्यः आवसथ्यः वह्निर्यथा अग्निरिव

विश्वा। साधु वत्स गौतम! साधु कृतकृत्य एव राजा सीरध्वजस्त्वया पुरोहितेन।

न तस्य राज्यं व्यथते न भ्रश्यति न जीर्य्यति।

त्वं विद्वान् ब्राह्मणो यस्य राष्ट्रगोपः पुरोहितः॥ १८॥

जाम। गौतम! त्वयेव बहुभिः क्षत्रियपुरोहितैः ब्रह्मतेजसा प्रस्फुरितमासीत्। किन्तु प्राकृतानि तेजांसि अप्राकृते ज्योतिषि प्रशाम्यन्ति (छ)।

शता। [सक्रोधम्] अरे अनड्वन्! निरपराधराजकुलकदन! महापातकिन्! अशिष्टविकृतचेष्ट! बीभत्सकर्मन्! अपूर्वपाषण्ड! काण्डीर! काण्डपृष्ठ! कथमस्यामपि दिशि प्रगल्भसे? ननु च रे! त्वमसि किंब्राह्मण एव (ज)।

अहो! महान् ब्राह्मणस्याचारः।

---

तथैव चिरं स्थिताः। यदि तव गृहे अन्यस्मात् परिभवः उपैति भवतीति भावः ततः तदा नः अस्मान् अग्निरूपान् धिक् प्रियमपि ब्राह्मण्यं ब्रह्मवर्चसं धिक् अङ्गिरसः कुलञ्च धिक् अस्तु। हरिणीवृत्तम्॥ १७॥

विद्वान् ब्राह्मणस्त्वं पुरोहितः सन् यस्य राष्ट्रगोपः राज्यरक्षकः, तस्य राज्यं न व्यथते न क्लिश्नाति न भ्रश्यति न च्यवते न जीर्य्यति न क्षयं गच्छतीत्यर्थः। अनुष्टुब्वृत्तम्॥१८॥

(छ) त्वयेव त्वया यथा तथा बहुभिरनेकैः क्षत्रियाणां पुरोहितैः तेषां रक्षणाय प्रदीपितेनेति शेषः ब्रह्मतेजसा कर्त्रा प्रस्फुरितं प्रसृतम् आसीत् तदानीमिति शेषः। प्राकृतानि सामान्यानि। अप्राकृते असामान्ये। प्रशाम्यन्ति शान्तिं गच्छन्ति न स्फुरन्तीति भावः। मम अलौकिकं तेजस्तव लौकिकेन तेजसा नोपशाम्यति इति भावः।

(ज) अनड्वन्! वृष! काण्डीर! काण्डो बाणोऽस्यास्तीति काण्डीरः शस्त्रव्यवसायीत्यर्थः तत्सम्बुद्धौ ब्राह्मणस्य शस्त्रग्रहणं महान् दोष इति भावः। काण्डपृष्ठ! शस्त्राजीव! स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्। तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृत इत्युक्तलक्षण! स्वधर्मत्यागिन् इत्यर्थः। दिशि आचारे इति यावत् प्रगल्भसे धृष्यसि। किंब्राह्मणः ब्राह्मणापसदः।

मातुरेव शिरश्छेदो गर्भाणां चापकर्त्तनम् ।
राज्ञां च सवनस्थानां ब्रह्महत्यासमो बधः ॥ १९ ॥

जाम । आः स्वस्तिवाचनिक ! दुष्ट ! दुष्ट ! सामन्तपुरोहित ! अपिच रे ! अहल्यायाः पुत्र ! अहं तव काण्डपृष्ठः ? (झ) ।

शता । आः दुष्ट दुर्मुख भृगुप्रसवपांशन ! (ञ) ।

राजानो गुरवश्चैते महिम्नैव महाक्षमाः ।
क्षमन्तां नाम न त्वेवं शतानन्दः क्षमिष्यते ॥ २० ॥

[ इति कमण्डलूदकेनोपस्पृशति (ट) । ]

वशि । कः कोऽत्र ? भोः ! प्रसाद्यतां प्रसाद्यताम् । अयं धवित्रनिर्धूत इवाग्निः प्रणीतपृषदाज्याभिवारघोरस्तनूनपात्समिध्यमानदारुणब्रह्मवर्चसज्योतिराङ्गिरसः (ठ) ।

---

मातुरिति । मातुर्जनन्याः शिरश्छेदः गर्भाणां कुक्षिजन्तूनाम् अपकर्त्तनं हिंसनं सवनस्थानां यज्ञनिरतानां राज्ञाञ्च बधः ब्रह्महत्यायाः समः तुल्यः । एतेन ब्रह्मघाती त्वमिति भावः । अनुष्टुब् वृत्तम् ॥ १९ ॥

(झ) स्वस्तीति । स्वस्तीति वचनं प्रयुङ्क्ते इति स्वस्तिवाचनिकः प्रतिग्रहकाले स्वस्तीति वचनं प्रयुज्यते इति नियमेन सर्वदा प्रतिग्रहकाले स्वस्तीति वचनशील इत्यर्थः तत्सम्बुद्धौ । राजप्रतिग्रहोपजीविन्नित्यर्थः । सामन्तपुरोहित ! क्षुद्रराजपुरोधः ! अहल्यायाः पुत्र ! एतेन मातुर्व्यभिचारित्वं भङ्ग्या ध्वन्यते ।

(ञ) भृगुप्रसवपांशन ! भृगुवंशदूषण ! ।

राजान इति । राजानः दशरथादयः एते गुरवश्च वशिष्ठविश्वामित्रादय इति भावः महाक्षमाः अतीव क्षमाशीलाः अतएव महिम्नैव माहात्म्येनैव स्वस्वक्षमाशीलत्वरूपमाहात्म्यरक्षणार्थमेवेति भावः क्षमन्तां सहन्तां नाम, शतानन्दस्तु एवम् एते इवेत्यर्थः न क्षमिष्यते न सहिष्यते । अनुष्टुब् वृत्तम् ॥ २० ॥

(ट) उपस्पृशति आचमति शापप्रदानार्थमिति भावः ।

(ठ) धवित्रेति । धूयते अनेनेति धवित्रं व्यजनं तेन निर्धूत इव प्रज्वलित इव । प्रणीतेति । प्रणीतेन मन्त्रपूतेन पृषदाज्येन दधिसिक्तघृतेन अभिघारः आभिमुख्येन हवनं

शता। [ससंरम्भं शापोदकं गृहीत्वा] भो भोः! सभासदः! पश्यन्तु भवन्तः।

सक्रोधः प्रसभमहं पराभिघाता-
दुद्धूतं द्रुततरमाततायिनं वः।
उत्पातक्षुभितमरुद्विघट्टमानो
वज्राग्निर्द्रुममिव भस्मसात् करोमि॥ २१॥

प्रसीद भगवन्! गृहानुपगते प्रशाम्यतु दुरासदं तपस्तेजः (ड)।

श्लाघ्यो गुणैर्द्विजवरस्य निजश्च बन्धु-
स्तस्मिन् गृहानुपगते सदृशं किमेतत्?।
विद्वानपि प्रचलितस्तु यदेष मार्गात्
चत्रं हि तव विजयाय शमं भज त्वम्॥ २२॥

---

तेन घोरः भृशं प्रदीप्तं इति भावः। तनूनपात् अग्निः तद्वत् समिध्यमानं प्रज्वाल्यमानं दारुणं भयङ्करं ब्रह्मवर्चसज्योतिः ब्राह्मं तेजः यस्य तथाभूतः।

सक्रोध इति। सक्रोधः अतएव उत्पाते प्रलयकाले क्षुभितः प्रवृद्धः मरुदिव वायुरिव विघट्टमानः विक्षोभमापादयमानः अहं प्रसभं बलात् परेषां क्षत्रियाणामिति भावः अभिघातात् प्रमर्दनात् उद्धूतम् उद्धतं प्रचण्डमिति यावत् वः युष्माकम् आततायिनं वधोद्यतं, आततायी वधोद्यत इत्यमरः। भार्गवमिति शेषः द्रुततरम् अतिशीघ्रं वज्राग्निः द्रुममिव वृक्षमिव भस्मसात् करोमि। प्रहर्षणीवृत्तं, त्र्याशाभिर्मनजरगाः प्रहर्षणीयमिति तल्लक्षणात्॥ २१॥

(ड) गृहान् उपगते आगते अतिथाविति भावः।

श्लाघ्य इति। गुणैः तपोब्रह्मविद्यादिभिरिति भावः श्लाघ्यः प्रशंसनीयः द्विजवरः ब्राह्मणश्रेष्ठस्य निजो बन्धुश्च सापिण्ड्यसम्बन्धादिति भावः अयमिति शेषः। तस्मिन् भार्गवे इति शेषः गृहान् उपगते एतत् शापप्रदानमिति भावः सदृशं? युक्तं किम्? नैवेत्यर्थः। यत्तु एषः विद्वानपि मार्गात् शिष्टाचाररूपादिति भावः प्रचलितः भ्रष्टः, तत्र चत्रं हि क्षत्रमेव विजयाय प्रभवतीति शेषः त्वं शमं शान्तिं भज प्राप्नुहि। वसन्ततिलकं वृत्तम्॥२२

वशि। [शापोदकमपहरन्] वत्स शतानन्द! ययाह सम्बन्धी (ढ) महाराजदशरथः। अन्यच्च—

यत् कल्याणं किमपि मनसा तद् वयं वर्त्तयामः
त्वं जावालिप्रभृतिसहितः शान्तिमध्यग्नि कुर्य्याः।
जैतुं जैत्रानथ खलु जपन् सूक्तसामानुवाकान्
अस्मच्छिष्यैः सह स भगवान् वामदेवो गृणातु॥ २३॥

[परिष्वज्य निष्क्रामयति]

जाम। पश्यत वटोः क्षत्रियावष्टम्भस्य गर्जितानि, तत् किमनेन? भो भोः! कोसलेश्वरविदेहप्रसादोपजीविनो ब्राह्मणाः! (ण) सप्तकुलपर्वतद्वीपगोचराश्च सर्वक्षत्रियाः! वदामः—

तपो वा शस्त्रं वा व्यपदिशति यः कश्चिदिह वः
स दर्पादुद्दामद्विषमसहमानः कलयतु।
अरामां निःसीरध्वजदशरथीकृत्य जगतीम्
अतृप्तस्तत्कुल्यानपि परशुरामः शमयति॥ २४॥

---

(ढ) सम्बन्धी वैवाहिकः युष्माकमिति शेषः।

यदिति। यत् कल्याणं मङ्गलं किमपि अस्मिन् व्यापारे इति भावः वयं तत् वर्त्तयामः कुर्मः यथा अमङ्गलं न भवेत् तथा विदध्म इत्यर्थः त्वं जावालिप्रभृतिभिर्मुनिभिः सहितः सन् अध्यग्नि अग्निमधिकृत्य अग्निसन्निधावित्यर्थः शान्तिं कुर्य्याः। अथानन्तरं स भगवान् वामदेवः अस्माकं शिष्यैः सह जेतुं अमङ्गलं शमयितुमित्यर्थः जपन् इष्टमन्त्रमिति शेषः जैत्रान् जयानुकूलान् सूक्तानि वेदविभागविशेषाः सामानि गानाश्रिता वेदभागाः अनुवाका अपरे ऋग्भागाः तान् गृणातु पठतु। मन्दाक्रान्तावृत्तम्॥ २३॥

(ण) वटोः क्षुद्रब्राह्मणस्य। क्षत्रियावष्टम्भस्य क्षत्रियाश्रितस्य। कोसलेश्वरेति कोसलेश्वरस्य दशरथस्य विदेहस्य जनकस्य च प्रसादेन अनुग्रहेण उपजीवन्तीति तथोक्ताः।

तपो वेति। इह भूतले वः युष्माकं मध्ये यः कश्चित् तपो वा शस्त्रं वा व्यपदिशति

[ नेपथ्ये ]

भार्गव ! भार्गव ! अति हि नामावलिप्यसे ? (त) ।

जाम । असूयति नामायमस्मदवलेपाय जनकः संरब्ध (थ) ।

[ प्रविश्य ] जनकः ।

शत्रुध्वंसात् परिणतिवशाद् गृह्यतन्त्रप्रधाने
नैरन्तर्यादथ च परमब्रह्मतत्त्वोपलम्भात् ।
क्षात्रं तेजो विजयि सहजं यद् व्यरंसीदिदं तत्
प्रत्युद्भूय त्वरयति पुनः कर्मणे कार्मुकं नः ॥ २५ ॥

जाम । भो जनक !

---

आश्रित्य अभिमन्यते इत्यर्थः स दर्पात् तपसः शस्त्रस्य वा अहङ्कारादित्यर्थः उद्दामदिर्प प्रचण्डशत्रुं अपरमिति शेषः नतु मामिति भावः असहमानः अक्षममाणः सन् कलयतु गर्जतु । परशुरामः अरामां रामशून्यां अग्रे निहतरामामित्यर्थः जगतीं निःसीरध्वजदशरथीकृत्य सीरध्वजो जनकः दशरथश्च नास्ति यस्यां तथाभूता न तथाभूतां कृत्वा जनकदशरथशून्यीकृत्येत्यर्थः अतृप्तः तथापि तृप्तिमलभमानः सन् तत्कुल्यानपि तयोर्वंश्यानपि शमयति नाशयति । अग्रे रामं ततो जनकं दशरथञ्च ततः तयोर्वंश्यानपि संहरामीति निष्कर्षः । शिखरिणीवृत्तम् ॥ २४ ॥

(त) अवलिप्यसे ? दृप्यसि ?

(थ) असूयति दूषयति विद्वेष्टीत्यर्थः । अस्मदवलेपाय अस्माकं अवलेपाय समुद्धत्यै । संरब्धः क्रुद्धः ।

शत्रुध्वंसादिति । शत्रूणां ध्वंसात् अभावादित्यर्थः परिणतिवशात् वार्द्धकवशात् गृह्यतन्त्रप्रधाने गार्हस्थ्योचितप्रधानकर्मणि यागादिरूपे इति भावः नैरन्तर्यात् सातत्यात् निरन्तरतत्तद्गृहाश्रमविहितकार्य्यकलापेषु व्यापृतत्वादिति यावत् परमं ब्रह्म, तस्य तत्त्वं स्वरूपं तस्य उपलम्भात् अवबोधाच्च सहजं स्वाभाविकं विजयि जैत्रं यत् क्षात्रं तेजः ममेति शेषः व्यरंसीत् उपशान्तमित्यर्थः तदिदं पुनः प्रत्युद्भूय प्रदीप्य नः अस्माकं कार्मुकं धनुः कर्मणे शत्रुजयरूपायेति भावः त्वरयति नियोजयतीति यावत् । मन्दाक्रान्तावृत्तम् ॥ २५ ॥

त्वं ब्रह्मण्यः किल परिणतश्चासि धर्मेण युक्त-
स्त्वां वेदान्तेष्वचरम ऋषिः सूर्यशिष्यः शशास ।
इत्याचारादपि यदि मया प्रश्रयेणोपजुष्ट-
स्तत् किं रोषादविदितभयं कर्कशानि ब्रवीषि ? ॥ २६ ॥

जन । अन्त्रभेदनं क्रियते प्रश्रयस्येति । शृण्वन्तु भोः सभासदः ! (द) ।

भृगोर्वंशे जातस्तपसि च किलायं स्थित इति
द्विषत्यप्यस्माभिश्चिरमिह तितिक्षैव हि कृता ।
यदा भूयोभूयस्तृणवदवधूनोत्यनिभृत-
स्तदा विप्रेऽप्यस्मिन् नमतु धनुरन्यास्ति न गतिः ॥ २७ ॥

जाम । [सरोषहासाक्षेपम्] (ध) किमात्थ भोः ! किमात्थ ? धनुरिति आश्चर्य्यम् !

---

त्वमिति । त्वं ब्रह्मण्यः ब्रह्मनिष्ठः किलेति प्रसिद्धौ परिणतः वृद्धः धर्मेण युक्तः धार्मिकश्च असि अचरमः नास्ति चरमो यस्मात् स पुराण इत्यर्थः ऋषिः सूर्यशिष्यः याज्ञवल्क्यः वेदान्तेषु उपनिषत्सु त्वां शशास शिक्षितवानित्यर्थः । इतीत्थं आचारात् सद्व्यवहारात् यदि मया प्रश्रयेण विनयेन उपजुष्टः सेवितः असि तत् तदा रोषात् क्रोधात् अविदितभयं अज्ञातमभयमित्यर्थः यथा तथा किं कथं कर्कशानि कटूनि ब्रवीषि ? कथयसि ? मन्दाक्रान्तावृत्तम् ॥ २६ ॥

(द) अन्त्रभेदनं अन्त्राणां हृदयान्तर्गतधमनीविशेषाणां भेदनं विदारणं क्रियते असह्यवचसेति भावः । प्रश्रयः विनयः ।

भृगोरिति । अयं भृगोः महर्षेरिति भावः वंशे जातः तपसि च स्थितः निरतः किलेति प्रसिद्धौ इति हेतोः द्विषत्यपि विद्वेषं कुर्वत्यपि इह भार्गवे अस्माभिः चिरं तितिक्षैव क्षमैव हि निश्चयेन कृता । यदा अनिभृतः चपलः अयं भूयोभूयः पुनःपुनः तृणवत् अवधूनोति अवमन्यते अस्मानिति शेषः तदा विप्रेऽपि अस्मिन् धनुः नमतु, यतः अन्या गतिः उपायः न अस्ति । शिखरिणीवृत्तम् ॥ २७ ॥

(ध) सरोषहासाक्षेपं सक्रोधहास्यावलेपम् ।

क्षत्रालोकक्षुभितहुतभुक्प्रस्फुलिङ्गाट्टहासं
ह्यायं पश्यन्नपि रिपुशिर:शाणशातं कुठारम् ।
दत्तोत्सेक: प्रलपति मया याज्ञवल्क्यानुरोधा-
न्मिथ्याध्मात: किमपि जरसा जर्जर: क्षत्रबन्धु: ॥ २८ ॥

जन । [सावेगम्] किमत्र बहुना——

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्रम्
उद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ २९ ॥

[ इति धनुरारोपयति ]

[ नेपथ्ये ]

विरम नरपते ! कथं द्विजेऽस्मिन्
अविरतयज्ञवितीर्णगोसहस्र: ।

---

क्षत्रेति । याज्ञवल्क्यानुरोधात् याज्ञवल्क्यस्य शिष्योऽयमिति गौरवादिति भाव: मया दत्त: उत्सेक: गर्वो यस्मै तथाभूत: संभ्रमेण मानित इति यावत् मिथ्याध्मात: वृथा गर्वित: जरसा वार्द्धकेन जर्जर: हतबुद्धिरिति भाव: अयं क्षत्रबन्धु: क्षत्रिय: हा इति खेदे क्षत्राणां आलोकेन दर्शनमात्रेणेत्यर्थ: क्षुभिता प्रस्फुरिता: हुतभुज: अग्ने: प्रस्फुलिङ्गा: कणा: अट्टहासा: उच्चैर्हासा इव यस्य तादृशं रिपूणां शत्रूणां शिरांस्येव शाणा: शाण-यन्त्राणि तेषु शातं शाणितं अनवरतशत्रुशिरश्छेदनेन तीक्ष्णीकृतमिति भाव: कुठारं पश्यन्नपि किमपि प्रलपति अनर्थकं मृत्युलक्षणमिति भाव: वक्तीत्यर्थ: । मन्दाक्रान्ता-वृत्तम् ॥ २८ ॥

ज्याजिह्वयेति । एतत् चापं धनु: ज्या जिह्वेव तया वलयिते वेष्टिते उत्कटे कोटी दंष्ट्रे इव यस्य तथोक्तं उद्गारिण: उच्चैर्गर्जत: घोरस्य भीषणस्य घनस्येव मेघस्येव घर्घर: दारुण: घोष: निस्वन: यस्य तथाभूतं अतएव ग्रासे जगत्कवलने प्रसक्तस्य प्रवृत्तस्य हसत: अन्तकस्य यमस्य वक्त्रं वदनमेव यन्त्रं तस्य जृम्भा व्यादानं तद्विडम्बि तदनुकारि विकटं उदरं यस्य तथाविधं अस्तु भवतु । वसन्ततिलकं वृत्तम् ॥ २९ ॥

तव पलितनिरन्तरः पृषत्कं
स्पृशति पुराणधनुर्धरस्य पाणिः ? ॥ २० ॥

जन। सखे महाराज दशरथ !

अस्मानधिक्षिपतु नाम न किञ्चिदेतत्
कस्य द्विजे परुषवादिनि चित्तभेदः ? ।
वत्सस्य मङ्गलविरुद्धमयं तु पापः
कर्णे रटन् कटु कथं नु वटुर्विषह्यः ? ॥ २१ ॥

जाम। आः दुरात्मन् क्षत्रियापसद ! (न) वटुरित्यधिक्षिपसि ?

उत्तिष्ठोत्तिष्ठ यावद्विशकलितयकृत्क्लोमवक्षोरुहान्त्र-
स्नायुग्रन्थ्यस्थिशृङ्गव्यतिकरितजरत्कन्धरादन्तकण्ठः ।
मूर्द्धच्छेदादुदञ्चद्गलधमनिशिरारक्तहिण्डीरपिण्डः
प्रायः प्राग्भारघोरः पशुमिव परशुः पर्वशस्त्वां शृणातु ॥ २२॥

---

विरमेति। हे नरपते ! विरम निवर्त्तस्व, अविरतेषु अविश्रान्तेषु यज्ञेषु वितीर्णं दत्तं गवां सहस्रं येन तादृशः पुराणधनुर्धरस्य तव पलितेन जराजनितेन मांससंकोचादिना निरन्तरः निरवकाशः अक्षम इति भावः पाणिः कथं अस्मिन् द्विजे निमित्तार्थे सप्तमी अस्य द्विजस्य निमित्तमित्यर्थः पृषत्कं शरं स्पृशति ? अयुक्तमेतदिति भावः। पुष्पिताग्रावृत्तं, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥२०॥

अस्मानिति। अस्मान् अधिक्षिपतु तिरस्करोतु नाम अयमिति शेषः, एतत् अस्मदधिक्षेपणं न किञ्चित् व्यथाकरमिति भावः, द्विजे ब्राह्मणे परुषवादिनि कटुभाषिणि सति कस्य जनस्य चित्तभेदः ? मनोभङ्गः स्यादिति शेषः न कस्यापीत्यर्थः। अयन्तु पापः पापात्मा वटुः ब्राह्मणाधमः वत्सस्य रामस्य मङ्गलविरुद्धममङ्गलं कर्णे रटन् जल्पन् नु भोः ! कथं विषह्यः क्षन्तव्यः ? वसन्ततिलकं वृत्तम् ॥ २१ ॥

(न) क्षत्रियापसद ! क्षत्रियाधम !

उत्तिष्ठेति। उत्तिष्ठ उत्तिष्ठ यकृत्कुक्षेर्दक्षिणभागस्थं मांसपिण्डं क्लोम अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहि शिरामूलं तृष्णास्थानं मतं बुधैरित्युक्त-

[ प्रविश्यान्तरे ] दशरथः । भो भार्गव ! भो भार्गव !

एष वै नरपतिर्यथा स्थितो नः शरीरमपि न स्थितं तथा ।
तत्र वाक्परिभवैः क्षतैर्वयं सर्वथैव ननु दुःखमास्महे ॥ ३३ ॥

जाम । ततः किम् ? (प)

दश । ततश्च न क्षम्यते ।

जाम । त्वमप्यपरः प्रभविष्णुरिव मामवस्कन्दयसि । चेतयस्व नित्यनिरवग्रहः प्रकृत्यैव रामोऽस्मि जामदग्न्यः । क्षत्रियश्च भवान् (फ) ।

---

लक्षणं स्थानविशेषः वक्षोरुही स्तनौ अन्त्रम् अन्त्यते बध्यते देहोऽनेनेति अन्त्रम् अति-बन्धने ष्ट्रन् प्रत्ययः । देहबन्धनसाधननाडीभेदः । उक्तञ्च वैद्यके । उक्ताः सार्द्धा-स्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः । अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्दिशेदिति । स्नायुः शरीरस्थो वायुवाहिनाडीभेदः ग्रन्थिः प्रसिद्धः अस्थीनि कङ्कालानि शुक्रं रेतः एतैः व्यतिकरिता संवलिताः जरती जीर्णा कन्धरा ग्रीवा दन्ताः कण्ठस्य एते विशकलिताः खण्डिता येन तथाभूतः मूर्ध्नः शिरसः छिद्रात् उदञ्चन्ति उत्क्रान्ति गलस्य धमनिशिराभ्यः धमन्याख्यनाडीभ्यः रक्तान्येव क्षिरडीरपिण्डानि फेननिचयाः यस्मात् तथाविधः प्राग्भारे अग्रभागे घोरः तीक्ष्ण इति यावत् परशुः कुठारः पशुमिव त्वां प्रायः बाहुल्येन पर्वशः पर्वणि पर्वणि खण्डश इति भावः प्रणातु क्रन्ततु । स्रग्धरावृत्तम् ॥ ३२ ॥

एष इति । एषः वै नरपतिः जनकः यथा स्थितः यादृशो भवतीत्यर्थः नः अस्माकं शरीरमपि न तथा स्थितं तथा न भवतीत्यर्थः । स्वशरीरादपि अयं राजा अस्माकं प्रिय-तर इति भावः । तत्र नरपतौ क्षतैः वाचा परिभवैः कटुवाक्यप्रयोगैरिति यावत् वयं सर्वथैव सर्वैः प्रकारैरेव दुःखम् आस्महे ननु दुःखिता भवाम एवेत्यर्थः । रथोद्धतावृत्तं, रात् परैर्नरलगैरथोद्धतेति तल्लक्षणात् ॥ ३३ ॥

(प) ततः किम् ? ततः युष्माकं दुःखावस्थानात् किं भवतीति शेषः ।

(फ) प्रभविष्णुरिव प्रभुरिव । अवस्कन्दयसि भीषयसि । चेतयस्व चेतनां लभस्व बुध्यस्वेति भावः । नित्यनिरवग्रहः निरन्तरनिरङ्कुश इति यावत् । क्षत्रियश्च भवान् वध्य एव भवानिति भावः ।

दश। अतः खलु नोपेक्ष्यसे (ब)।

दुर्दान्तानां दमनविधयः क्षत्रियेष्वायतन्ते
दुर्दान्तस्त्वं वयमपि च ते क्षत्रियाः शासितारः।
सद्यः शान्तो भव किमपरं दम्यसे सोऽधुनैव
क्व ब्राह्मणाः प्रशमनपराः? क्षत्रधार्य्यं क्व चास्त्रम्? ॥२४॥

जाम। [विहस्य] चिरस्य खलु कालस्य जामदग्न्यः सनाथो वर्त्तते यस्य यूयं क्षत्रिया राजानो विनेतारः (भ)।

दश। अरे! किमत्र काचिद् भ्रान्तिः?

अज्ञो वा यदि वा विपर्य्ययगतो ज्ञानेऽथ सन्देहभृद्
दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः।
निःसन्देहविपर्य्यये सति पुनर्ज्ञाने विरुद्धक्रियं
राजा चेत् पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥२५॥

---

(ब) अतः खलु अस्मादेव कारणादित्यर्थः नित्यनिरवग्रहत्वादिति यावत्। न उपेक्ष्यसे न क्षम्यसे। न त्वां प्रति क्षमा उचितेति भावः।

दुर्दान्तानामिति। क्षत्रियेषु दुर्दान्तानां दुर्वृत्तानां दमनविधयः शासनविधानानि आयतन्ते आयत्तास्तिष्ठन्तीत्यर्थः, त्वं दुर्दान्तः दुर्वृत्तः। वयमपि ते प्रसिद्धाः तव च शासितारः दण्डयितारः। अतः सद्यः साम्प्रतं शान्तो भव, अपरं किं वक्तव्यमिति शेषः। स त्वं दुराचार इति भावः अधुनैव सद्य एवेत्यर्थः दम्यसे दण्ड्यसे, प्रशमनं परं प्रधानं येषां ते शान्तस्वभावा इत्यर्थः ब्राह्मणाः विप्राः क्व? क्षत्रैः धार्य्यं ग्राह्यम् अस्त्रञ्च क्व? ब्राह्मणानामस्त्रग्रहणं नैव क्वचिद् दृश्यते, तदस्त्रं त्यजेति भावः। मन्दाक्रान्तावृत्तम् ॥ २४ ॥

(भ) सनाथः सस्वामिकः शासितृप्रभुपरतन्त्र इति यावत्। विनेतारः शासितारः।

अज्ञो वेति। अज्ञो ज्ञानजड़ो विपर्य्ययं वैपरीत्यं गतः प्राप्तः कुपथप्रवृत्त इति भावः अथवा ज्ञाने सन्देहभृत् इदं युक्तमिदं वा अयुक्तमिति विवेकरहित इत्यर्थः जनः यदि दृष्टादृष्टविरोधि दृष्टं लौकिकम् अदृष्टं पारत्रिकं तयोर्विरुद्धं कर्म कुरुते आचरति तस्य

विश्वा। युक्तमाह भोः! महाराजः।

अनुत्पन्नं ज्ञानं यदि च सन्देहविधुरं
विपर्य्यस्तं वा स्यात् परिचर वशिष्ठस्य चरणौ।
ध्रुवं ज्ञाने दोषः कथमपरथा दुर्व्यवहृति-
र्विशुद्धौ चेत् पापं चरसि न सहन्ते नृपतयः॥ ३६॥

जाम। धर्मे ब्रह्मणि कार्मुके च भगवानीशो हि मे शासिता
सर्वक्षत्रनिवर्हणस्य विनयं कुर्य्युः कथं क्षत्रियाः ?।
सम्बन्धस्तु वशिष्ठमिश्रविषये मान्यो जरायां न तु
स्पर्द्धायामधिकः समश्च तपसा ज्ञानेन चान्योऽस्ति मे॥३७॥

---

तस्य यः गुरुः उपदेष्टा सत्पथप्रदर्शक इति भावः स एव गोप्ता रक्षिता विनेता प्रभुरिति भावः निःसन्देहः निश्चितः विपर्य्ययः अन्यथाचरणं तस्मिन् पुनः किन्तु ज्ञाने सति विरुद्धा क्रिया यस्य तादृशम् अपथचारिणमित्यर्थः सज्ञानकृतपापमिति भावः पुरुषं राजा चेत् यदि न शास्ति न दण्डयति तत् तदा अयं प्रजानां विप्लवः विशृङ्खलत्वं प्राप्तः उपस्थितः स्यादिति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ ३५॥

अनुत्पन्नमिति। यदि ज्ञानम् अनुत्पन्नं न जातमित्यर्थः सन्देहविधुरञ्च किं कर्त्तव्यं किमकर्त्तव्यमित्येवं सन्देहाकुलञ्च, वा विपर्य्यस्तं विरुद्धतया परिणतं स्यात् तदा वशिष्ठस्य चरणौ परिचर सेवस्व येन ते परमार्थज्ञानं भवेदिति भावः। ध्रुवं मन्ये ज्ञाने विषये दोषः त्रुटिः तवेति शेषः, अपरथा अन्यथा कथं दुर्व्यवहृतिः दूषितो व्यवहारः तवेति शेषः चेत् यदि विशुद्धौ सत्यां ज्ञानस्येति शेषः पापं चरसि करोषि, तदा नृपतयः न सहन्ते ज्ञानकृतपापकर्माणं त्वामिति शेषः। शिखरिणीवृत्तम्॥ ३६॥

धर्मे इति। भगवान् शिवः धर्मे ब्रह्मणि वेदे कार्मुके धनुर्वेदे च मे मम शासिता हि विनेता एव। क्षत्रियाः सर्वेषां क्षत्राणां निवर्हणस्य संहारकस्य मे इति शेषः कथं विनयं दण्डं कुर्य्युः? न कथमपीत्यर्थः। वशिष्ठमिश्रविषये वशिष्ठरूपश्रेष्ठव्यक्तौ सम्बन्धस्तु जरायां वार्द्धके सति मान्यः वृद्धोऽयं वशिष्ठ इति मया मान्यते इति भावः। तपसा ज्ञानेन च स्पर्द्धायाम् अधिकः महान् समश्च तुल्यश्च मे मम मत्त इत्यर्थः सम्बन्धविवक्षया षष्ठी। अन्यः अपरः न तु अस्ति नैव विद्यते। शार्दूलविक्रीडितं वृत्तम्॥३७॥

वशि । भृगुप्रसवात् पराजय इति प्रियं नः । किन्तु खलु (म) ।

अस्माभिरेव पात्यस्य प्रशस्तत्वात् प्रियस्य नः ।
अस्मद्गृहे पुराणस्य पश्याचारस्य विप्लवम् ॥३८॥

जनकदशरथविश्वामित्राः । अनार्य्य ! निर्मर्य्याद (य) !

जगत् सनातनगुरौ वशिष्ठेऽपि निरङ्कुशः ।
व्यालद्विप इवास्माभिरतिक्रम्यैव दम्यसे ॥३९॥

जाम । एवमवधूतोऽस्मि (र) ।

अन्तर्धैर्य्यभरेण वृद्धवचनात् सम्पिण्ड्य पिण्डीकृतो
हृन्मर्माश्रितशल्यवत् परिदहन् मन्युश्चिरं यः स्थितः ।
स्फूर्जत्येव स एष सम्प्रति मम न्यक्कारभिन्नक्षितेः
कल्पापायमरुत्प्रकीर्णपयसः सिन्धोरिवौर्वानलः ॥ ४० ॥

---

(म) भृगुप्रसवात् भृगुसन्तानात् भृगोरात्मनश्च ब्रह्मपुत्रत्वात् अन्योन्यभ्रातृभावः, तस्य भृगोः सन्तानस्य स्वसन्तानतुल्यत्वात् स्वसन्तानेन च पराजयस्य सर्वैरेवेष्टत्वाच्च । तथाचोक्तं, सर्वतो जयमन्विच्छेत् पुत्रादेक' पराजयमिति भावः ।

अस्माभिरिति । अस्माभिरेव पात्यस्य रक्षणीयस्य प्रशस्तत्वात् शुभत्वात् नः अस्माकं प्रियस्य पुराणस्य चिरन्तनस्य आचारस्य शिष्टव्यवहारस्य अस्माक' गृहे एव विप्लव' विपर्य्यासं पश्य अवलोकय । अनुष्टुब्वृत्तम् ॥ ३८ ॥

(य) निर्मर्य्याद ! अशिष्टाचारिन् ! इत्यर्थः ।

जगदिति । जगतां सनातनगुरुः चिरन्तनगुरुः तस्मिन् वशिष्ठेऽपि निरङ्कुशः अविनीत इति भावः अङ्कुशो हस्तिशासनार्थं वक्रायास्त्रभेदः नास्ति अङ्कुशो यस्य तथोक्तः अङ्कुशप्रहारेणापि दुर्दमश्चेत्यर्थः व्यालद्विप इव दुष्टकरीव अस्माभिः अतिक्रम्यैव ब्राह्मणोऽवध्य इति क्रममविगणय्यैवेत्यर्थः दम्यसे दण्ड्यसे । अनुष्टुब्वृत्तम् ॥ ३९ ॥

(र) अवधूतः तिरस्कृतः ।

अन्तरिति । धैर्य्यस्य धीरभावस्य भरेण अतिरेकेण वृद्धानां पूर्वपुरुषाणां च्यवनादीनां वचनात् सम्पिण्ड्य सङ्कोच्य पिण्डीकृतः घनीकृतः हृन्मर्म हृदयरूपं मर्मस्थानम् आश्रितं प्रविष्ट' शल्यम् अस्त्रभेदः तद्वत् अन्तः परिदहन् दग्धीकुर्वन् यो मन्युः कोपः चिरियेश्विति

दिष्ट्या । विकारः प्राप्तोऽयं ज्वलति परशुर्मन्युरिव मे
पृथिव्यां राजानो दशरथबले सन्त्युपहिताः ।
पुनर्द्वाविंशोऽपि प्रकुपितकृतान्तोत्सवकर-
श्चिरात् क्षत्रस्यास्तु प्रलय इव घोरः परिसरः ॥ ४१ ॥

वशि । कष्टं, भोः कष्टम् !—
कामं हि नः स्वजन एष तथापि दर्पाद्
घोरं व्यवस्यति कथं नु भवेदवध्यः ? ।
सन्दूषितेन च मया मुहुरीक्षितश्चेद्
वत्सस्य भार्गवशिशोर्दुरितं हि तत् स्यात् ॥ ४२ ॥

---

भावः चिरं स्थितः, स एषः न्यक्कारेण अधिक्षेपेण भिन्ना स्थितिः मर्यादा यस्य तथाभूतस्य मम कल्पापाये युगान्ते मरुता वायुना प्रकीर्णानि विक्षिप्तानि पयांसि जलानि यस्य तादृशस्य सिन्धोः समुद्रस्य और्वानल इव वाड़वाग्निरिव सम्प्रति स्फूर्जति विस्फुरति एव । उपमालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४० ॥

विकार इति । दिष्ट्या भाग्येन । अयं विकारः मन्युप्रकाशावसर इति भावः प्राप्तः उपस्थितः, मे मम मन्युरिव क्रोध इव परशुः ज्वलति दीप्यते । पृथिव्यां राजानः पृथिवीस्थिताः सर्वे नृपतय इति यावत् दशरथस्य बले सैन्ये उपहिता उपनीताः सन्ति, अतः पुनः प्रकुपितस्य कृतान्तस्य यमस्य उत्सवकरः आनन्दवर्द्धनः प्रलय इव चिरात् दीर्घकालात् परमिति यावत् क्षत्रस्य क्षत्रियजातेः द्वाविंशः द्वाविंशतिपूरणः घोरः दारुणः परिसरः विध्वंसः अस्तु भवतु । शिखरिणीवृत्तम् ॥ ४१ ॥

काममिति । एषः भार्गवः नः अस्माकं कामम् अतिशयेन स्वजनः हि सपिण्ड एव, तथापि दर्पात् अहङ्कारात् घोरं दारुणं व्यवस्यति आचरति, कथं केन प्रकारेण अवध्यः भवेन्नु ? वध्य एव भवेदित्यर्थः अस्य अवध्यत्वे हेतुर्न दृश्यते इति भावः । मया मुहुः पुनःपुनः सन्दूषितेन कोपितेनेति यावत् ईक्षितं दृष्टं चेत् मम कोपदृष्टिरक्षिप्तम् यदि स्यादित्यर्थः तत् तदा वत्सस्य भार्गवशिशोरस्येति शेषः दुरितं हि दुरितमेव अमङ्गलमेवेत्यर्थः स्यात् भवेत् । वसन्ततिलकं वृत्तम् ॥ ४२ ॥

विश्वा। अब्रह्मवर्चसमिव अम्भसि अशस्त्रसामर्थ्यम् अरे जामदग्न्य! मन्यसे? (ल)।

ब्रह्मक्षत्रसमाजमाक्षिपसि मद्वत्से च घोराशयः
तेनातिक्रमणेन दुःखयसि नः पाल्योऽसि सम्बन्धतः।
अन्तस्त्वां प्रति कोपनस्य तरलः शापोदकं दक्षिणः
प्राक्संस्कारवशेन चापमितरः पाणिर्ममान्विष्यति॥४२॥

जाम। ननु भोः कौशिक!

त्वं ब्रह्मवर्चसधरो यदि वर्त्तमानो
यद्वा स्वजातिसमयेन धनुर्धरः स्याः।
उग्रेण भोस्तव तपस्तपसा दहामि
पक्षान्तरे तु सदृशः परशुः करोतु॥ ४४॥

---

(ल) अब्रह्मवर्चसमिवेति। अम्भसि जले अशस्त्रसामर्थ्यं शस्त्राणामसामर्थ्यम् अप्रभावम् अब्रह्मवर्चसमिव ब्रह्मतेजोराहित्यमिव मन्यसे बुध्यसे। अयं भावः वशिष्ठादीनां ब्रह्मवर्चसं मत्तोऽधिकं नास्ति, क्षत्रियाणाञ्च जलरूपे मयि अस्त्राणां प्रयोगो निष्फल इति मत्वा दृप्यसीति भावः।

ब्रह्मेति। ब्रह्मणां क्षत्राणाञ्च समाजम् आक्षिपसि तिरस्करोषि, मम वत्से रामे च घोरः दारुणः आशयः यस्य तथाभूतश्च असीति शेषः। तेन अतिक्रमणेन अत्याचारेण नः अस्मान् दुःखयसि, किन्तु सम्बन्धतः भागिनेयपुत्रत्वरूपादिति भावः पाल्यः रक्षणीयः असि ममेति शेषः। अतः त्वां प्रति अन्तः कोपनस्य मम दक्षिणः पाणिः तरलः सत्वरः सन् शापोदकम् अभिसम्पातवारि इतरः वामः पाणिः प्राक्संस्कारवशेन पूर्वाभ्यासगुणेन चापं धनुः अन्विष्यति अनुसन्दधाति। शार्दूलविक्रीडितं वृत्तम्॥ ४३॥

त्वमिति। यदि त्वं ब्रह्मवर्चसधरः वर्त्तमानः असि ब्रह्मण्यं प्राप्तोऽसीत्यर्थः यद्वा स्वजातिसमयेन क्षत्रियनियमेनेत्यर्थः धनुर्धरः स्याः भवेः, तदा भोः कौशिक! उग्रेण कठोरेण तपसा तव तपः दहामि भस्मसात् करोमि ब्राह्मण्यं ध्वंसयामीति भावः। पक्षान्तरे तु स्वजातिधर्मग्रहणे तु सति परशुः ममेति शेषः सदृशं युक्तं तव दण्डमिति भावः करोतु। परशुप्रहारेण ते शिरः कृन्तामीति भावः। वसन्ततिलकं वृत्तम्॥ ४४॥

[ नेपथ्ये ]

अयमहं भोः कौशिकान्तेवासी रामः प्रणम्य विज्ञापयामि ।

पौलस्त्यविजयोद्दामकार्त्तवीर्य्यार्जुनद्विषम् ।
जेतारं कार्त्तिकेयस्य विजयेयं नमोऽस्तु वः ॥४५॥

दश । प्राप्तो रामभद्रः । कथं नु नामैतत् ? (व) ।

जन । हन्त ! भोः ! प्रशस्तमभ्यनुजानीत (श) विजयतां रामभद्रः ।

अयं विनेता दृप्तानामेष वीरो जगत्पतिः ।
वयं वशिष्ठधौरेयाः सर्वे प्रतिभुवोऽत्र वः ॥ ४६ ॥

दश । नन्वद्यैव प्रथितयशसामूढ़रचाव्रतानां
याज्यानां नो गुणवति गृहे रामभद्रस्तु जातः ।
ज्ञानज्योतिःपरिगतभवद्भूतभव्याः प्रभावं
यद् ब्रह्माणः कमपि शिशुकेऽप्यत्र संवेदयन्ते ॥४७॥

---

पौलस्त्ये ति। पौलस्त्यस्य रावणस्य विजयेन उद्दामः समुन्नतः यः कार्त्तवीर्य्यार्जुनः तस्य द्विषं हन्तारं कार्त्तिकेयस्य जेतारं भार्गवमिति शेषः विजयेयं वः युष्मभ्यं नमः अस्तु । अनुष्टुब्वृत्तम् ॥ ४५ ॥

(व) कथं नु नामैतत् ? एतत् रामस्य भार्गवं प्रति समुत्थानमिति भावः कथं नाम सम्भावनायां भवेत् ? असम्भवमेतदिति भावः ।

(श) प्रशस्तं सुमङ्गलम् ।

अयमिति । अयं रामः दृप्तानां दुर्वृत्तानां विनेता दण्डयिता एषः वीरो रामः जगतां पतिः । वशिष्ठः धौरेयः धुरन्धरः अग्रणीर्येषां तथाविधाः सर्वे वयम् अत्र विषये वः युष्माकं प्रतिभुवः प्रत्ययस्थानानि तिष्ठाम इति शेषः ॥ ४६ ॥

नन्विति । यत् यतः ज्ञानज्योतिषा परिगतानि ज्ञातानि भवद्भूतभव्यानि वर्त्तमानातीतभविष्यद्रूपाणि कालत्रितयानि यैः तथाभूताः ब्रह्माणः अत्र शिशुकेऽपि रामे प्रभावं महिमानं संवेदयन्ते सम्यक् विज्ञापयन्ति अतः प्रथितं यशो येषां तथाभूतानाम् ऊढं

जाम। एहि मन्ये राजपुत्र! जामदग्न्यं विजेष्यसे। [सस्मितम्] न हि विजेष्यसे। दुर्दमो हि रेणुकानन्दनस्त्वदन्तकः। (घ) तथाहि सम्प्रति—

कृत्तक्षत्रियकण्ठकन्दरसरत्कीलालनिर्वापितो-
द्दीप्तीभूतशिखाकरालहुतभुग्झाङ्कारिभिर्मार्गणैः।
एतद्घस्मरकालरुद्रकवलव्यापारमभ्यस्यतु
ब्रह्मस्तम्बनिकुञ्जपुञ्जितघनज्याघोषघोरं धनुः॥ ४८॥

[इति निष्क्रान्ताः सर्वे।]

इति संसृष्टो नाम तृतीयोऽङ्कः।

---

गृहीतं रक्षाव्रतं प्रजापालनधर्मः यैः तथोक्तानां याज्यानां याजनीयानां नः अस्माकं गुणवति विशुद्धे गृहे अद्यैव रामभद्रः जातो ननु उत्पन्न एव। भवतामाशिषा रामः अद्यैव पुनर्जन्म लब्धवानिति भावः। मन्दाक्रान्तावृत्तम्॥ ४७॥

(घ) त्वदन्तकः त्वत्संहारकः।

कृत्तेति। ब्रह्मस्तम्ब ब्रह्माण्डम् एव निकुञ्जः वनं तस्मिन् पुञ्जितेन घनीभूतेन अनेन अविरतेन ज्याघोषेण धनुष्टङ्कारेण घोरं भीषणं एतद् मे धनुः कृत्ताः छिन्नाः क्षत्रियकण्ठा एव कन्दराः गुहाः ताभ्यः सरद्भिः गलद्भिः कीलालैः रुधिरैः निर्वापितः सन् उद्दीप्ती-भूताभिः प्रज्वलिताभिः शिखाभिः ज्वालाभिः करालः व्याप्तः यो हुतभुक् अग्निः तस्य झाङ्कारो विद्यते येषु तैः मार्गणैः शरैः घस्मरस्य जगद्भक्षकस्य कालरुद्रस्य संहारिरुद्रस्य कवलव्यापारं ग्रासव्यापारम् अभ्यस्यतु। शार्दूलविक्रीडितं वृत्तम्॥ ४८॥

इति वि, ए, उपाधिधारिणा श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण विरचिता महावीरचरितनाटकस्य तृतीयाङ्कव्याख्या समाप्ता।

# अथ चतुर्थोऽङ्कः ।

[ नेपथ्ये ]

भो भो वैमानिकाः ! प्रवर्त्त्यन्तां प्रवर्त्त्यन्तां मङ्गलानि (क) ।

कृशाश्वान्तेवासी जयति भगवान् कौशिकमुनिः
सहस्रांशोर्वंशे जगति जयति क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधरः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥ १ ॥

[ततः प्रविशतः संभ्रान्तौ विमानेन शूर्पणखामाल्यवन्तौ ]

माल्य । वत्से ! दृष्टस्त्वया दिवौकसामेकायनीभावः यदिन्द्रादयः स्वतो वन्दित्वमुपगताः (ख) ।

---

(क) वैमानिकाः विमानेन देवयानेन चरन्तीति वैमानिकाः खेचराः इत्यर्थः तत्सम्बुद्धौ । प्रवर्त्त्यन्तां प्रस्तूयन्ताम् ।

कृशाश्वेति । कृशाश्वस्य महामुनिविशेषस्य अन्तेवासी शिष्यः भगवान् कौशिकमुनिः विश्वामित्रः जयति सर्वोत्कर्षेण वर्त्तते । अधुना सहस्रांशोः सूर्य्यस्य वंशे क्षत्रं क्षत्रियसन्ततिरित्यर्थः जयति । क्षत्राणां क्षत्रियजातीनाम् अरिः शत्रुः भार्गवः तस्य विनेता विजेता जगतामभयदानमेव व्रतं तस्य धरः लोकानां शरण्यः रक्षिता आश्रयो वा दिनकरकुलस्य सूर्य्यवंशस्य इन्दुश्चन्द्रः रामचन्द्रः विजयते विशेषेण जयं प्राप्नोति । शिखरिणीवृत्तम् ॥ १ ॥

(ख) दिवौकसां द्यौरोको येषां ते तेषां देवानामित्यर्थः एकायनीभावः ऐकमत्यावलम्बनम् । यत् यतः इन्द्रादयः स्वतः आत्मनैवेत्यर्थः न तु रामानुरोधेनेति भावः वन्दित्वं रामस्य स्तुतिपाठकत्वमिति भावः उपगताः प्राप्ताः । विमानचारिणां रामाभ्युदयदर्शनेन मङ्गलप्रवर्त्तनादिति भावः ।

शूर्प। णहि तुह्मेहिं णिरूविदं बिसंबदइ। संपदं च उक्कम्पिदह्मि। ता किं एत्थ करणिज्जं (ग)।

माल्य। यासौ राज्ञा दशरथेन प्राक्प्रतिश्रुतवरद्वया राज्ञी भरतमाता कैकेयी तस्या मन्थरा नाम परिचारिका दशरथस्य वार्त्ताहारिणी मिथिलामयोध्यायाः संप्रेषिता मिथिलोपकण्ठे वर्त्तते इति संप्रत्येव मे निवेदितं चारकैः। तस्यास्त्वया शरीरमाविश्य एवमेवं च कर्त्तव्यम् (घ)।

[ इति कर्णे कथयति ]

शूर्प। किमधण्णो करिस्सदि एव्वं णामे त्ति ? (ङ)।

माल्य। भिद्येत नो सद्वृत्तमिक्ष्वाकुगृहेषु विशेषतस्तादृशस्य विजिगीषोः (च)।

शूर्प। तदो किं ? (छ)

माल्य। ततोऽनेन योगाचारन्यायेन सुदूरमाकृष्य रक्षसाम् अन्तिकमुपनीतस्य विन्ध्यकान्तारेषु अदेशज्ञस्य विचरतः सुकराणि अवस्कन्दनानि स्युः। विराधदनुकबन्धप्रभृतयो हि दण्ड-

(ग) न हि युष्माभिर्निरूपितं विसंवदति। साम्प्रतञ्च उत्कम्पितास्मि। तत् किमत्र करणीयमिति सं।

निरूपितं लक्षितं विवेकदृष्ट्येति भावः दैवानां रामजयाभिलाषित्वमिति भावः विसंवदति अन्यथा भवतीत्यर्थः।

(घ) प्रागिति प्राक् पूर्वं प्रतिश्रुतम् अङ्गीकृतं वरद्वयं यस्यै तथोक्ता। चारकैः गुप्तचरैः।

(ङ) किमधन्यः करिष्यति एवं नामेति ? सं।

अधन्यः रामहतक इति भावः। एवं करिष्यति। पितुरादेशात् वनं गमिष्यतीति भावः।

(च) भिद्येत कर्म्मकर्त्तरि प्रयोगः विचलेत्। सद्वृत्तं सुचरितम्।

(छ) ततः किम् ?

कारण्यसत्रिषु तीक्ष्णाश्चरिष्यन्ति। शक्या हि लुप्तप्रभुशक्तेरुत्साहशक्तिश्छद्मनाभिसन्धातुम्। अनिवर्त्तनीयश्च रावणस्य सीतास्वीकारग्रहः। स चैवमीषत्करः सप्रयोजनश्चेति (ज)।

शूर्प। अह लक्खणसहाअत्तणे किं पि पओअणं ? (ज*)।

माल्य। वीरोऽस्त्रपारगश्चिन्त्यो यथा रामस्तथैव सः।
छद्मदण्डप्रयोगस्तु यथैकस्मिंस्तथा द्वयोः॥ २॥

शूर्प। मह दुदअं एव्व एदं ण जुत्तं पडिभादि। जं च दुरट्ठिदस्स दासरहिणो सण्णिधाणकरणं जं च अणावड्ढवेरस्स अप्पडिसमाधेअं इत्थिआवेरं त्ति (झ)।

---

(ज) योगाचारन्यायेन योगं समाधिम् आचरतीति योगाचारः सन्न्यासिविशेषः बौद्धविशेषो वा तस्य न्यायः नयः रीतिरित्यर्थः जनसन्निकर्षपरिहारार्थं महावनेषु अधिष्ठानरूप इति भावः तेन विन्ध्यकान्तारेषु विन्ध्याद्रेर्दुर्गमकाननेषु। अदेशज्ञस्य स्थानानभिज्ञस्येत्यर्थः। अवस्कन्दनानि धर्षणानि। दण्डकारण्यसत्रिषु दण्डकारण्ये षु ये सत्रिणः याज्ञिकाः मुनय इत्यर्थः तेषु। तीक्ष्णाः हिंसकाः। लुप्तेति। लुप्ता अपनीता प्रभुशक्तिः राजसामर्थ्यं महाबलसमृद्धिरिति यावत् यस्य तथाभूतस्य रामस्येति भावः। उत्साहशक्तिः शत्रून् प्रति अभ्युत्थानसामर्थ्यमिति यावत् छद्मना छलेन। अभिसन्धातुं प्रतारयितुम्। अनिवर्त्तनीयः अत्याजनीयः। सीतेति। सीतायाः स्वीकारे आत्मसात्करणे ग्रहः निर्बन्धः। स च निर्बन्धः एवम् इत्थम्भूते सतीत्यर्थः ईषत्करः सुसम्पाद्य इत्यर्थः। सप्रयोजनः प्रयोजनम् इष्टं रत्नभूतस्त्रीलाभ इति भावः तेन सह वर्त्तमानः। शत्रुनिपातः तदानुषङ्गिकः स्त्रीरत्नलाभश्चेति भावः।

(ज*) अथ लक्ष्मणसहायत्वे किमपि प्रयोजनम् ? सं।

प्रयोजनं किमपि अस्ति ?.

वीर इति। अस्त्रपारगः वीरो रामः यथा चिन्त्यः, स लक्ष्मणः तथैव चिन्त्य इति शेषः तस्यापि अस्त्रपारगवीरत्वादिति भावः। छद्मना कपटेन दण्डप्रयोगः एकस्मिन् यथा तथा द्वयोरपि। तदेकेनैव उद्यमेन द्वयोरपि महाशत्र्वोः शान्तिरिति भावः। अनुष्टुब्वृत्तम्॥ २॥

(झ) मम द्वितयमेव एतत् न युक्तं प्रतिभाति। यच्च दूरस्थितस्य दाशरथेः सन्निधानकरणं यच्च अनावद्धवैरस्य अप्रतिसमाधेयं स्त्रीवैरमिति सं।

माल्य । तावत् भूम्यानन्तर्य्येत: प्रत्यासन्न एव सानुचर-सुन्दोपसुन्दपुत्रोपमर्दकस्ताड़कारि: कथमनाबद्धवैर: ? अप्रतिविधेयश्च रामरावणयोरितरथापि वैरम् (ञ) । पश्य ।

पाल्यं तस्य जगद् वयन्तु जगतो नित्यं हठादेशिन:
सामैवं सति कीदृगप्रियकृता शश्वद्विरुद्धात्मना ।
कानर्थान् रघुनन्दनो मृगयते ? दैवै: पतिर्यो हृत:
तस्माद्दानमपीह नास्ति न भिदा तस्येषव: साधनम् ॥ ३ ॥

न दण्डोऽप्यधिके शत्रौ सप्रकाश: प्रकाशते ।
तूष्णीं दण्डस्तु कर्त्तव्यस्तस्य चायमुपक्रम: ॥ ४ ॥

---

अनाबद्धेति । न आबद्धं न घटितं वैरं येन तथोक्तस्य । अप्रतिसमाधेयं प्रतिसमाधातुमशक्यम् अन्यमस्बद्धं वैरं सन्ध्यादिना प्रतिसमाधातुं शक्यते इदन्तु न तथा । प्रत्यर्पणेऽप्यस्यां विशृङ्खलेऽविश्वासादिति भाव: ।

(ञ) भूम्यानन्तर्य्येत इति भूमेगनन्तर्य्यात् अव्यवधानादित्यर्थ: । प्रत्यासन्न एव सन्निहित एव । सानुचरेति । अनुचरन्तीति अनुचरा: बलानि तै: सह वर्त्तमानौ सानुचरौ सुन्दोपसुन्दपुत्रौ मारीचसुबाहू तयोरुपमर्द्दक: विजेता ताड़कारि: ताड़कानिधनकारी राम इत्यर्थ: । कथम् अनाबद्धवैर: ? आबद्धवैर एवेत्यर्थ: मारीचादीनामुपमर्द्दात् वैरस्य आबद्धत्वादिति भाव: । इतरथापि अन्यथापि स्त्रीहरणं विनापीति भाव: ।

पाल्यमिति । तस्य रामस्य जगत् पाल्यं रक्षणीयम् । वयन्तु नित्यं सततं हठादेशिन: बलात् पीड़नकारिण: जगत इति शेष: । एवं सति अप्रियकृता शश्वत् सततं विरुद्धात्मना प्रतिकूलवर्त्तिना सह साम सन्धि: कीदृक् ? कथं भविष्यतीति भाव: । य: दैवै: पति: हृत: स रघुनन्दन: कान् अर्थान् धनानि मृगयते प्रार्थयते ? न कानपीत्यर्थ: । दैवानामानुकूल्येन तस्यार्थानामभावस्य विगतत्वादिति भाव: । तस्मात् इह रामे दानमपि नास्ति । भिदा भेदश्च न अस्तीति शेष:, इषव: शरा: अस्त्राणीत्यर्थ: दण्ड इति भाव: तस्य रामस्य साधनम् उपशमनोपाय इत्यर्थ: । सामदानभेददण्डात्मकवैरोपशमसाधनचतुष्टयेषु सामादयस्त्रिन् निष्फला: केवलं दण्ड एव साधनमस्तीति निष्कर्ष: । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३ ॥

नेति । अधिके प्रबले शत्रौ दण्डोऽपि सप्रकाश: न प्रकाशते न शुभाय कल्पते इति

तथा सति सीतापहारत: किमपरं कुर्य्यात्? (ट) किञ्च।

हृतजानिररातिभि: सलज्जो
यदि मृत्यो: शरणं गतोऽन्यथापि।
मृदितो मृत एव निष्प्रतापः
परितप्याप्यथवा घटेत सन्धौ ॥ ५ ॥

उत्तिष्ठेत बधाय न: परिभवप्रौढ़ेन चेन्मन्युना
नेष्टे तत्प्रसरं निरोद्धुमुदधिस्तिग्मांशुवीर्य्यो हि स:।
किन्तु प्राक्प्रतिपन्नरावणसुहृद्भावेन भीमौजसा
शत्रुर्वज्रधरात्मजेन हरिणा घोरेण घानिष्यते ॥ ६ ॥

अनेन च प्रसङ्गेन (ठ) बहु अनुसन्धातव्यम्।

---

भाव: तूष्णीं दण्डस्तु कपटदण्ड एवेत्यर्थ: कर्त्तव्य:। तस्य च दण्डस्य अयम् उपक्रम: अवसर:। अनुष्टुब्वृत्तम् ॥ ४ ॥

(ट) तथेति। तथा तस्मिन् प्रकारे कपटदण्डविधाविति भाव: सति कर्त्तव्ये इति शेष: सीताया अपहारत: अपहरणात् अपरम् अन्यत् किं कुर्य्यात्? रावण इति शेष:।

हृतेति। अरातिभि: शत्रुभि: हृता जाया यस्य तथोक्त: अतएव सलज्ज: जायापहरणात् साधुसमाजेषु मुखं दर्शयितुमशक्त इति भाव: यदि मृत्यो: शरणं गत: स्यादिति शेष:। अन्यथापि स्वयं मृत्यो: शरणानाश्रयेऽपीत्यर्थ: मृदित: आधिभिर्निपीड़ित इति यावत् अतएव निष्प्रताप: निर्लज्ज: सन् मृत एव भविष्यतीति शेष: अथवा परितप्य कथमेवं राक्षसैर्वैरं कृतमित्यनुतप्येत्यर्थ: सन्धौ घटेतापि सन्धिं कुर्य्यादपीत्यर्थ: ॥ ५ ॥

उत्तिष्ठेति। परिभवेण अवमानेन भार्य्याहरणजेनेति भाव: प्रौढ़: प्रदीप्त: तेन मन्युना क्रोधेन न: अस्माकं बधाय उत्तिष्ठेत उत्थानं करोति चेत् यदि, तदा उदधि: समुद्र: तस्य प्रसरं वेगं निरोद्धुं न ईष्टे न प्रभवति। हि यत: राम: तिग्मांशुवीर्य्य: सूर्य्यतेजा:। किन्तु प्रतिपन्न: गृहीत: रावणेन सुहृद्भावो येन तथोक्तेन भीमं भीषणम् ओजो बलं यस्य तेन घोरेण वज्रधरात्मजेन इन्द्रपुत्रेण हरिणा वानरेण बालिनेत्यर्थ: शत्रु: राम: घानिष्यते विनाशयिष्यते। शार्दूलविक्रीड़ितं वृत्तम् ॥ ६ ॥

(ठ) प्रसङ्गेन व्यापारेण।

शूर्प। किं विश्र ? (ठ)

माल्य। रावणप्रियासि वत्से ! कार्य्यज्ञा च अतो निःशङ्कम् आवेद्यते हृदयखेदः।

क्षितेरानन्तर्य्यादपकृदपकृत्यश्च सततं
द्विधा रामः शत्रुः प्रकृतिनियतः क्षत्रिय इति।
तृतीयो मे नप्ता रजनिचरनाथस्य सहजो
रिपुः प्रत्यासत्तेरहिरिव भयं नो जनयति॥ ७॥

कुम्भकर्णस्तु सन्नपि असत्समः स्वापव्यसनादविनयाच्च (ड)। विभीषणस्त्वागमिकात्मगुणसम्पन्न इत्यनुरक्ताः प्रकृतयः (ढ)। खरदूषणत्रिशिरसस्तु कुलसदृशवृत्तयो राजानमुपतिष्ठन्ते। यतस्ते वत्सेनेव धेनुं राजानमर्थान् दुहन्ति (ण) उपजापिताश्च

(ठ) किमिव सं।

क्षितेरिति। क्षितेः पृथिव्या आनन्तर्य्यात् अव्यवधानात् सततम् अपकृत् अपकारकः अस्माकमिति शेषः अपकृत्यश्च अपकार्य्यश्च अस्माभिरिति शेषः एकद्रव्याभिलाषिणामिव एकपृथिवीभोगिनां राज्ञां परस्परविरोधः सततं सम्भवत्येवेति भावः। क्षत्रिय इति प्रकृतिनियतः प्राकृतिकश्च इति रामः द्विधा द्विप्रकारेण शत्रुः कृत्रिमः प्राकृतश्चेति भावः। मे मम तृतीयो नप्ता दौहित्रः विभीषण इत्यर्थः रजनिचरनाथस्य रावणस्य सहजो रिपुः शत्रुः प्रत्यासत्तेः सन्निकर्षात् रामसाहाय्यप्राप्तेरिति भावः अहिरिव भुजङ्ग इव नः अस्माकं भयं जनयति। शिखरिणीवृत्तम्॥ ७॥

(ड) सन्नपि विद्यमानोऽपि असत्समः अविद्यमानतुल्यः। स्वापव्यसनात् निद्रासक्तेः अविनयाच्च उद्धतत्वाच्च विवेकराहित्याच्चेति भावः।

(ढ) आगमिकाः आगमः शास्त्रं तत्सम्बन्धिनः आगमिकाः नीतिसम्मता इति यावत् ये आत्मनो गुणाः विनयादयः तैः सम्पन्नः युक्तः। प्रकृतयः प्रजाः।

(ण) धेनुं दुग्धमिति द्वितीयं कर्मोह्यम्। दुहन्ति अर्थान् धनानि राज्ञः सकाशात् गृह्णन्तीत्यर्थः।

प्रतिजपन्ति (त) प्रकृतयः। तदिदमन्तर्भेदजर्जरं (थ) राजकुलम् अभियुक्तमात्रं (द) रामेण भिद्यते। यथोक्तं—"लघु अपि व्यसनपदम् अभियुक्तस्य (ध) कृच्छ्रसाध्यं भवति"—इति। तत्र च विभीषणावग्रहतः प्रतिविधानम्। स तु प्रकाशदण्डस्तूष्णीं दण्डः संरोधनमपसारणं वा स्यात्। तत्र प्रकाशदण्डमभिन्नसम्बन्धाः कथं राक्षसास्तितिक्षेरन्? तूष्णीं दण्डोऽपि प्राज्ञैरनुमीयमानः (न) प्रकृतिकोपके रामेऽभियोक्तरि दुरन्तः स्यात् (प)।

संरोधने त्वभिभवाद् विहिते तदेक-
मैत्र्या खरप्रभृतयश्च तदा विकुर्य्युः।
निर्वास्यमानमपि तं परिवारयेयु-
स्तस्मात् खरप्रभृतयः पुरतो विचिन्त्याः॥८॥

(त) उपजापिताः भेदं नीताः प्रतिजपन्ति प्रतीपं वर्त्तन्ते इति भावः।

(थ) अन्तर्भेदेति अन्तर्भेदेन जर्जरं विपर्य्यस्तमिति भावः।

(द) अभियुक्तमात्रम् आक्रमणानन्तरमात्रमिति भावः।

(ध) व्यसनपदं व्यसनं भेदः तस्य पदम् आस्पदं स्थानमिति यावत्। अभियुक्तस्य आक्रान्तस्य परैः रुद्धस्य इति यावत्। कृच्छ्रसाध्यं कष्टेन उत्तरणीयं भवति।

(न) विभीषणावग्रहतः विभीषण एव अवग्रहः प्रतिबन्धः सहजशत्रुरित्यर्थः तस्मात्। प्रतिविधानं प्रतीकारः। स तु प्रतिविधानविषय इत्यर्थः। संरोधनं कारावन्धनसहितम् अपसारणं देशात् निर्वासनं देशान्निर्वास्य क्वचित् कारागृहे स्थापनमित्यर्थः। अभिन्नसम्बन्धाः समसम्पर्का रावणेन राक्षसानां यादृशः सम्बन्धः, विभीषणेनापि तादृश एवेति भावः। तितिक्षेरन् क्षमेरन्।

(प) प्रकृतिकोपके प्रकृतीः कोपयतीति प्रकृतिकोपकः तस्मिन्। विभीषणं प्रति कपटदण्डे प्रयुक्ते रामः प्रकृतीर्भृशं भेदयितेति स दुरन्तः दुरवसान इति भावः।

संरोधने इति। अभिभवात् बलादिति भावः संरोधने विभीषणस्य कारावरोधे इत्यर्थः विहिते कृते तु खरप्रभृतयः खरदूषणादयः रावणस्य वैमात्रेयभ्रातरः तदेकमैत्र्या

तत्र रामस्योपयोग इति (फ)।

शूर्प। अहो! अणुजीवित्तणस्स अगरुअदा। जं रावणस्स खरप्पमुहाणं च तुल्ले वि कुलसंबंधे एव्वं मादामहो चिंतेदि (ब)।

माल्य। ईदृशः कुलपुत्रकाचारः (भ)।

शूर्प। विणा खरप्पमुहेहिं विभीषणस्स का पड़िवत्ती? (म)

माल्य। प्राज्ञः खल्वसौ उत्प्रेक्षितविकारः स्वयमेवापसर्पेत, उपेक्षणीयश्चास्माभिर्न च। एतत् मन्तव्यमौरसं भयमिति (य)।

---

तेन विभीषणेन सह एका मुख्या आत्यन्तिकीत्यर्थः मैत्री सौहृदं तया हेतुना तदा तस्मिन् काले विकुर्य्युश्च विकृता भवेयुश्च। ततश्च निर्वास्यमानमपि तं विभीषणं परिवारयेयुः अनुगच्छेयुरिति यावत्। तस्मात् खरप्रभृतयः पुरतः अग्रतः विचिन्त्याः आयत्तीकरणे इति भावः। वसन्ततिलकं वृत्तम् ॥ ८ ॥

(फ) तत्र तेषां विभीषणानुगमने सतीत्यर्थः। उपयोगः उपकारः।

(ब) अहो अनुजीवित्वस्य अगुरुकता। यत् रावणस्य खरप्रमुखानाञ्च तुल्येऽपि कुलसम्बन्धे एवं मातामहश्चिन्तयति सं।

अनुजीवित्वस्य वृत्तिभोगित्वस्य अगुरुकता अगौरवम्। अनुजीविनां सर्वथा प्रभोरेव हितचिन्तकत्वात् सम्बन्धविचारो नास्तीति भावः। कुलसम्बन्धे वंशसम्बन्धे। सुकेशस्य माल्यवान् सुमाली मालिश्च त्रयः पुत्रा आसन्। तत्र सुमालिनः राका, पुष्पोत्कटा, कैकसीति तिस्रः कन्या आसन्। पुलस्त्यतनयात् विश्रवसः कैकस्याः गर्भे रावणकुम्भकर्णविभीषणाश्च त्रयः पुत्रा आसन् शूर्पणखानाम्नी च कन्या जाता। खरदूषणत्रिशिरसश्च राकाया गर्भे रावणस्य वैमात्रेयभ्रातरः आसन्।

(भ) कुलपुत्रकाचारः कुलपुत्रकस्य सत्कुलप्रसूतस्य। सत्कुलजा हि कृतज्ञा भवन्तीति भावः।

(म) विना खरप्रमुखैर्विभीषणस्य का प्रतिपत्तिः? सं।

प्रतिपत्तिः सम्भावना विभीषणः किं करिष्यति? इति यावत्।

(य) प्राज्ञः प्रज्ञा अस्यास्तीति प्राज्ञः बुद्धिमान्। उत्प्रेक्षितविकारः सम्भावितविकृतिः। अपसर्पेत अपसरेत्। एतत् विभीषणापसर्पणम् औरसं वक्षःस्थलीयम् आन्तरमित्यर्थः बाह्यप्रकृतिकोपादान्तरप्रकृतिकोपस्यातीव भयानकत्वादिति भावः।

यतः। बाल्यात् प्रभृत्येव विरूढसख्यः
सुग्रीवमेष ध्रुवमाश्रयेत।
बालिप्रसादीकृतभूमिभागे
कुमारभागे स्थितमृष्यमूके ॥८॥

ततश्च बालिना यतिष्यते न रामोपश्लेषेण। रामोपश्लेषणेन वा न अपेक्ष्येत बाली (र)।

शूर्प। अध रामो परसुरामविजइ जणिदविरोधं बालिणं बावादेदि तदो बिभीषणरामसंजोओ अणत्थो त्ति संभावेमि (ल)।

माल्य। ननु वत्से!

चेत् बालिनं हन्ति हता वयं स्म-
स्तेन ध्रुवं तत्र तु सर्वनाशे।
एकः स जीव्यात् कुलतन्तुरस्मै
रामः श्रियं धर्ममयो ददातु ॥१०॥

बाल्यादिति। बाल्यात् शैशवात् प्रभृतेश्च विरूढं जातं सख्यं यस्य तथाभूतः एषः विभीषणः। बालिना प्रसादीकृतः प्रसन्नतया दत्तः भूमिभागो यत्र तादृशे ऋष्यमूके तदाख्यपर्वते कुमारभागे कुमारः अत्र राजानुजः तस्य यो भागः अंशः तस्मिन् स्थितं ज्येष्ठे बालिनि वशंवदतया ऋष्यमूके अधिष्ठितमिति यावत् सुग्रीवं बाल्यबन्धुमिति भावः ध्रुवं निश्चयेन आश्रयेत। कुमारभुक्तौ इति च पाठान्तरम्। उपजातिवृत्तम् ॥ ९ ॥

(र) ततश्च सुग्रीवानुगत्यादिति भावः। बालिना यतिष्यते अभ्युत्थानाय विभीषण इति शेषः। वा पक्षान्तरे रामोपश्लेषणेन यदि रामाश्रयः प्राप्यते तदेति भावः बाली न अपेक्ष्येत न गण्येत।

(ल) अथ रामः परशुरामविजयी जनितविरोधं बालिनं व्यापादयति ततो विभीषणरामसंयोगोऽनर्थ इति सम्भावयामि सं। स्पष्टं।

चेत् इति। चेत् यदि बालिनं हन्ति, स राम इति शेषः तेन वयं ध्रुवं निश्चितं हताः स्मः, तत्र तस्मिन् सर्वनाशे तु स एकः कुलतन्तुः वंशमूलभूतो विभीषणः जीव्यात्

शूर्प। [सास्रम्] एव्वं वि दाव होदु ? (व)

माल्य। गम्यतामिदानीं वत्से! यत्र प्रेषितासि। सुकरं चैतत् प्रयोजनं यदि जनकवशिष्ठविश्वामित्राः दशरथान्तिके न स्युः। अहमपि लङ्कामेव गच्छामि।

शूर्प। हा अम्ब! तुए वि दुक्खं पेक्खिदव्वं (श)।

माल्य।

हा वत्साः! खरदूषणप्रभृतयो वध्याः स्थ पापस्य मे
हा हा वत्स विभीषण! त्वमपि मे कार्येण हेयः स्थितः।
हा मद्वत्सल वत्स रावण! महत् पश्यामि ते सङ्कटं
वत्से कैकसि! हा हतासि न चिरात्त्रीन् पुत्रकान् द्रक्ष्यसि ॥११॥

[इति निष्क्रान्तौ]

[इति विष्कम्भकः]

[ततः प्रविशतो वशिष्ठविश्वामित्राभ्यां सह जनकदशरथौ]

[राजानौ अन्योन्यं परिष्वज्य]

जन। राजन्! दिष्ट्या वर्द्धसे यदोदृशस्ते वत्सो रामभद्रः।

अप्राकृतानि च गुणैश्च निरन्तराणि
लोकोत्तराणि च फलैश्च महोदयानि।

जीवत्वित्यर्थः। धर्ममयो रामः अस्मै विभीषणाय श्रियं राक्षसैश्वर्यं ददातु। चैत्र बालिनम् इत्यत्र यो बालिनम् इति पाठान्तरम्। इन्द्रवज्रावृत्तम ॥ १० ॥

(व) एवमपि तावत् भवतु ? सं।

(श) हा अम्ब! त्वयापि दुःखं प्रेक्षितव्यम् ? सं।

अम्ब! कैकसि! दुःखं वंशनाशजनितमिति भावः।

हेयः परित्याज्यः। कैकसि! रावणादीनां जननि! त्रीन् पुत्रकान् रावणकुम्भकर्णविभीषणादीन् इति भावः न चिरात् द्रक्ष्यसि चिरकालं द्रष्टुं न पारयिष्यसि, अविलम्बेनैव ते निहता भविष्यन्तीति भावः। शार्दूलविक्रीडितं वृत्तम। अन्यत स्पष्टम् ॥ ११ ॥

वीरस्य यस्य महतश्चरिताद्भुतानि
नास्माकमेव जगतामपि मङ्गलानि ॥१२॥

वशिष्ठः। [विश्वामित्रं परिष्वज्य] सखे कुशिकनन्दन !

अस्माभिरप्यनाशास्यो रामस्य महिमान्वयः।
यत् कृतस्तेन कृतिनो वयञ्च भुवनानि च ॥ १३ ॥

विश्वा। प्रकृष्टपुण्यपरिपाकोपादान एष महिमा। के वयमेतावतः प्रहर्षस्य ? (ष)।

दश। भगवन् कुशिकनन्दन ! मा मैवम्।

आदित्याः कुलदेवतामिव नृपाः पूर्वे दिलीपादय-
स्तेजोराशिमरुन्धतीपतिमृषिं भक्त्या यमाशिश्रियन्।
पाकश्लाघ्यतराश्च भूरितपसां सत्याशिषामाशिष-
स्तासामप्ययमेव मङ्गलविधिर्यन्नः प्रसन्नो भवान् ॥१४॥

अप्राकृतानीति। यस्य महतो वीरस्य चरिताद्भुतानि अद्भुतानि चरितानि अप्राकृतानि असामान्यानि च गुणैः विनयादिभिः निरन्तराणि च घनानि च लोकोत्तराणि च फलैः कार्य्यैः विजयादिरूपैः महोदयानि समधिकसमृद्धीनि च अतएव अस्माकमेव न, जगतामपि मङ्गलानि मङ्गलसाधनानीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ १२ ॥

अस्माभिरिति। अस्माभिरपि अनाशास्यः न आशंसनीयः न सम्भावनीय इति भावः रामस्य महिमान्वयः माहात्म्ययोगः कृतः भवतीति शेषः इति यत् तेन वयञ्च भुवनानि च कृतिनः कृतार्थाः जाता इति शेषः। अनुष्टुव्वृत्तम् ॥ १३ ॥

(ष) प्रकृष्टेति प्रकृष्टानां पुण्यानां परिपाकः फलमुपादानं कारणं यस्य तथाभूतः। एतावतः प्रहर्षस्य प्रकर्षस्य।

आदित्या इति। पूर्वे दिलीपादयः आदित्याः सूर्य्यवंशीया नृपाः तेजोराशिम् अरुन्धतीपतिं कुलदेवतामिव भक्त्या यम् ऋषिं वशिष्ठमित्यर्थः आशिश्रियन् आश्रिताः तस्य सत्याशिषाम् अमोघाशीर्वादानां भूरितपसां महतां तपस्विनाञ्च पाकेन श्लाघ्यतराः अतीव श्लाघनीयाः या आशिषः शुभाशंसनानि तासामपि अयमेव मङ्गलविधिः मङ्गलरूपं फलमित्यर्थः यत् भवान् नः अस्माकं प्रसन्नः। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

वशि । सत्यमीदृशो विश्वामित्रः ।

यद्वाचां विषयमतीत्य चेतसां वा
पर्य्यायात् परमतिशायनस्य वा यत् ।
ब्रह्मर्षौ तदिह दुरासदे समिद्धं
तेजोभिर्ज्वलति महत्तपोऽप्रमेयम् ॥ १५ ॥

विश्वा । भगवन् मैत्रावरुण !

सनत्कुमाराङ्गिरसौ गुरुविद्यातपोमयौ ।
स्तौषि चेत् सत्य एवासि सत्यसन्धा हि ते गिरः ॥१६॥

रामभद्रे तु नाश्चर्य्यमेतत् । महाराजदशरथो हि तस्य प्रसविता (स) ।

साक्षात्पुण्यसमुच्चया इव मनोर्वैवस्वतस्यान्वये
राजानस्त्वनपेक्षितेन विधिना गोपायितारः प्रजाः ।
ये भूताः प्रथमे पवित्रचरितास्तेषामयं धूर्धरो
वीरः क्षत्रियपुङ्गवो गुणनिधिः श्लाघ्यो धरित्र्याः पतिः ॥१७॥

यदिति । यत् वाचां चेतसां वा विषयम् अतीत्य वा यत् अतिशायनस्य अतिमात्रशायाः परं पर्य्यायात् परिगतम् अवाङ्मनसगोचरं निरतिशयत्वेनेति भावः इह अस्मिन् दुरासदे दुर्धर्षे ब्रह्मर्षौ विश्वामित्रे तत् अप्रमेयं प्रमातुमशक्यं महत् तपः तेजोभिः समिद्धं समुज्ज्वलितं ज्वलति दीप्यते । प्रहर्षणीवृत्तम् ॥ १५ ॥

सनदिति । सनत्कुमारो ब्रह्मपुत्रविशेषः आङ्गिरसश्च शतानन्दः तौ गुरुविद्यातपोमयौ महाविद्यातपोमयौ स्तौषि प्रशंससि चेत् सत्य एव सत्यवागेव असि भवसि । हि यतः ते तव गिरः वाचः सत्यं सन्दधतीति सत्यसन्धाः सत्यसन्धानपरा इत्यर्थः, नाहं सवाहं इति भावः ॥ १६ ॥

(स) तस्य रामस्य प्रसविता जनकः ।

साक्षादिति । वैवस्वतस्य सूर्य्यतनयस्य मनोः अन्वये वंशे अनपेक्षितेन अनादिष्टेन विधिना उपदेशेन प्रजाः गोपायितारः रक्षणशीलाः शीलार्थतृण्योगे कर्मणि न षष्ठी । साक्षात् मूर्त्तिमन्तः पुण्यसमुच्चया इव पुण्यराशय इव ये प्रथमे आद्याः पवित्रं चरितं

अपिच। अरिष्टस्त्वाष्ट्रस्य प्रशमनविधौ जम्भदमनः
स विश्वेषामीशः पतिरपि निकायस्य मरुताम्।
विजेतारं सेनाः सततमपहन्तारमसुरान्
अमुं वीरं वव्रे बहुषु समनीकेषु मघवा॥ १८॥
सोऽयमीदृशः कथमनीदृशं प्रसूते? कथमत्राश्चर्यं नाम? (छ)
महत्वन्तं देवं य इह भगवन्तं विजयते
विजिग्ये तं राजा युधि दशमुखं हैहयपतिः।
निहन्तारं तस्य प्रथितमहिमानं त्रिभुवने
महावीरं जित्वा किमिव हि न वत्सेन विजितम्?॥ १९॥

---

येषां तथोक्ता राजानस्तु भूताः आसन् तेषां धूर्धरः धुरन्धरः वीरः क्षत्रियपुङ्गवः क्षत्रियश्रेष्ठः गुणनिधिः गुणाकरः श्लाघ्यः प्रशस्यः धरित्र्याः पृथिव्याः पतिः अयं दशरथ इत्यर्थः। राजानस्त्वनपेक्षितेन इत्यत्र राजानस्त्वदपेक्षितेन इति प्रामादिकः पाठः। शार्दूलविक्रीडितं वृत्तम्॥ १७॥

अरिष्ट इति। त्वष्टा विश्वकर्मा तस्य अपत्यं त्वाष्ट्रः वृत्रासुरः तस्य। अग्ने त्वष्टुर्दक्षिणाग्नौ दानवौं योनिमाश्रितः। वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुत इति भागवते ६ स्कन्धः। प्रशमनविधौ दमनव्यापारे अरिष्टः शुभङ्करः निपुणः इति यावत् वृत्रहन्तेति भावः जम्भदमनः जम्भासुरनिसूदन इत्यर्थः विश्वेषां जगतामीशः मरुतां देवानां, मरुतौ पवनामरावित्यमरः! निकायस्य समूहस्य अथवा निवासस्य स्वर्गस्येत्यर्थः पतिः सः प्रसिद्धो मघवा इन्द्रः बहुषु समनीकेषु संग्रामेषु सेनाः आसुरीरिति शेषः विजेतारं विजयशीलं असुरान् अपहन्तारं विनाशयितारं विनाशनशीलमित्यर्थः। सेना इति असुरानिति च शीलार्थतृन्प्रयोगात् न षष्ठी। अमुं वीरं दशरथं सततं वव्रे प्रार्थयाञ्चक्रे। शिखरिणीवृत्तम्॥ १८॥

(छ) सः अयं दशरथः ईदृशः इत्थम्भूतवीर इत्यर्थः, अनीदृशं स्वस्य अननुरूपम्।

महत्वन्तमिति। इह जगति यः भगवन्तं महत्वन्तम् इन्द्रं देवम्, इन्द्रो मरुत्वानित्यमरः। विजयते, राजा हैहयानां तदाख्यक्षत्रियाणां पतिः युधि युद्धे तम् इन्द्रजयिनमित्यर्थः दशमुखं विजिग्ये विजितवान्, वत्सेन रामेण तस्य हैहयपतेः कार्तवीर्यस्येत्यर्थः निहन्तारं त्रिभुवने प्रथितः विख्यातः महिमा यस्य तथोक्तं महावीरं भार्गव-

दश । तत् किमिति अयं द्विधा भिद्यते लोकः ? (च) ।

विश्वा । एष वत्सो रामभद्रः सजामदग्न्य इत एव अभिवर्त्तते । य एषः—

वीरश्रिया च विजयेन च रोचमानो
मान्ये मुनाववनतश्च गुणोन्नतश्च ।
लज्जां वहन् भृगुपतौ हृतवीर्य्यदर्पे
शिष्यो गुराविव कृतप्रथमापचारः ॥ २० ॥

[ ततः प्रविशतो रामजामदग्न्यौ ]

रामः । यद् ब्रह्मवादिभिरुपासितवन्द्यपादे
विद्यातपोव्रतनिधौ तपतां वरिष्ठे ।
दैवात् कृतस्त्वयि मया विनयापराध-
स्तत्त्वं प्रसीद भगवन् ! अयमञ्जलिस्ते ॥ २१ ॥

मित्यर्थः जित्वा किमिव हि न विजितम् ? अपितु सर्वमेतत् जगत् विजितमित्यर्थः । शिखरिणीवृत्तम् ॥ १९ ॥

(च) द्विधा भिद्यते भागद्वयेन विभेदं प्राप्नोति । उभयोः पार्श्वयोः अवस्थानादिति भावः ।

वीरेति । वीरश्रिया वीरशोभया च विजयेन च रोचमानः दीप्यमानः, मान्ये माननार्हे मुनौ भार्गवे अवनतः प्रणतश्च गुणैः शौर्य्यादिभिः उन्नतश्च हृतः अपनीतः वीर्य्यदर्पः यस्य तथाभूते भृगुपतौ कृतः प्रथमः आद्यः अपचारः अपकर्म येन तथाभूतः शिष्यः गुराविव लज्जां वहन् दधानः अभिवर्त्तते इति पूर्वेणान्वयः ॥ २० ॥

यदिति । हे भगवन् ! ब्रह्मवादिभिः उपासितौ वन्द्यौ पादौ यस्य तथाभूते विद्यातपोव्रतनिधौ विद्याव्रतयोस्तपोव्रतयोश्चाश्रये तपतां तपस्विनां वरिष्ठे श्रेष्ठे त्वयि मया दैवात् सहसा यत् यस्मात् हेतोः विनयापराधः अविनय इति यावत् कृतः आचरितः, तत् तस्मात् हेतोः त्वं प्रसीद क्षमस्व, अयं ते अञ्जलिः, अहं कृताञ्जलिः प्रार्थये इति भावः । वसन्ततिलकं वृत्तम् ॥ २१ ॥

जाम। अपराद्धं वत्स ! त्वया आमदग्न्यस्य न, उपकृतम् (क)।

पुण्या ब्राह्मणजातिरन्वयगुणाः शास्त्रं चरित्रं च वै
येनैकेन हृतानि मे हि हरता चैतन्यमात्रामपि।
एकः सन्नपि भूरिदोषगहनः सोऽयं त्वया प्रेयसा
वत्स ! ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः॥ २२॥

रामः। कथं नापराद्धं मया यदायुधपरिग्रहं यावदारूढो दुर्योगः ? (ख)

जाम। एष वो न्यायः (ग)।

असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणाम्।
यथा वैद्यस्तथा राजा शस्त्रपाणिर्विधीयते॥ २३॥

---

(क) अपराद्धं न, उपकृतमिति दूरान्वयः। यद्वा अपराद्धम् ? न उपकृतम् ? अपितु नापराधः कृतः प्रत्युत उपकार एव कृत इत्यर्थः। काकुरत्र योजनीयः।

पुण्येति। हे वत्स ! चैतन्यमात्रामपि चेतनासम्बयमपि ज्ञानराशिमपीति यावत् हरता येन एकेन दर्पामयेन अहङ्काररूपव्याधिना पुण्या ब्राह्मणजातिः ब्रह्मत्वम् अन्वयगुणाः वंशमर्य्यादा शास्त्रं चरित्रञ्च मे मम हृतानि ध्वंसितानि, वै हि निश्चये एकः अद्वितीयः केवल इत्यर्थः सन्नपि भूत्वापि भूरिभिः बहुभिः दोषैः गहनः दुष्प्रवेशः निर्णेतुमशक्यः बहुदोषाकर इति भावः सोऽयं दर्पामयः अहङ्कारव्याधिः ब्राह्मणवत्सलेन प्रेयसा अतिप्रियेण त्वया वैद्येनेति शेषः क्षेमाय मङ्गलाय ममेति शेषः शमितः शान्तिं नीतः। हृतानि मे हि इत्यत्र हृतान्यमूनि इति पाठान्तरम्। दर्पो ममेति पाठे समित्यध्याहारदोषविरह इति विभाव्यम्। शार्दूलविक्रीडितं वृत्तम्॥ २२॥

(ख) आयुधेति। आयुधानाम् अस्त्राणां परिग्रहं ग्रहणं यावत् अस्त्रशिक्षामारभ्येत्यर्थः दुर्योगः दुष्टैरकल्याणकरैरिति भावः योगः सङ्गः ताड़कानिधनादिभवदवमाननपर्य्यन्तसङ्घटनमिति भावः।

(ग) न्यायः रीतिः आचार इति भावः।

असाध्यमिति। शस्त्रपाणिः अस्त्रधरः राजा वैद्यो यथा भिषग् यथा, तथा शरीरिणाम् असाध्यं दोषं दुर्णयं वायुपित्तकफविकृतञ्च अन्यथा वैपरीत्येन परिच्छिद्य निश्चित्य

रामः। कोऽहमुक्तिप्रत्युक्तिकायां (घ) भगवतः? । तस्मादित इतो भगवन्!

जाम। क्व पुत्रवत्स! मया गन्तव्यम्?

रामः। यत्र तातस्य तातजनकस्य। अथवा शान्तम् (ङ)। उत यत्र भगवन्तौ मैत्रावरुणकौशिकौ।

जाम। इदमिदानीमशक्यम्। अनतिक्रमणीयश्च राजनिर्देशः (च)। [ परिक्रम्य ] हे भगवन्तौ!

स एष रामः सौम्यत्वादचण्डश्चण्डविक्रमः।
यस्य प्रतिष्ठितं जैत्रं जामदग्न्येऽपि शासनम्॥ २४॥

राजानौ। अतिगम्भीरः सौजन्योद्गारः (छ)।

रामः। एष वो रामशिरसा प्रणामपर्य्यायः (ज)।

सर्वे। एह्येहि वत्स! [ इति परिष्वजन्ते ]

जाम। भगवन्! मैत्रावरुण! एष जमदग्निपुत्रः प्रणम्य कौशिकेन सार्द्धमत्रभवतो विज्ञापयामि।

विषायते विषवदाचरति अथवा रोगशान्त्यै विषं प्रयुङ्क्ते इत्यर्थः। विषायते इत्यत्र विषस्यति इति प्रामादिकः पाठः। अनुष्टुब् वृत्तम्॥ २३॥

(घ) उक्तिप्रत्युक्तिकायां वचनप्रतिवचने इत्यर्थः।

(ङ) शान्तं तातः तातजनकः इति यदुक्तं तत् तिष्ठतु तयोश्चिरबद्धजातिवैरयोः सन्निधानगमने अतीव लज्जा स्यादेतदवस्थायामिति भावः।

(च) इदं मैत्रावरुणकौशिकयोः समीपगमनमिति भावः। राजनिर्देशः राज्ञः रामस्येति भावः निर्देशः आदेशवचनम्।

स इति। सौम्यत्वात् सुकुमारत्वात् अचण्डः अनुग्रः किन्तु चण्डविक्रमः प्रचण्डपराक्रमः स एषः रामः दाशरथिः, यस्य जैत्रं जयशीलं शासनं सामर्थ्यमिति भावः जामदग्न्येऽपि अन्येषु किं वक्तव्यमित्यर्थापत्तिरलङ्कारः। प्रतिष्ठितं विरूढम् अप्रतिहततया निष्पन्नमित्यर्थः। अहं रामेण जित इति भावः। अनुष्टुब् वृत्तम्॥ २४॥

(छ) सौजन्योद्गारः सुशीलताविष्करणम्।

(ज) प्रणामपर्य्यायः प्रणतिपरम्परा।

वृद्धातिक्रमसंभृतस्य महतो निर्विक्षये पाप्मनः
प्रायश्चेतनमादिशन्तु गुरवो रामेण दान्तस्य मे।
प्राग्धर्मस्य भवन्त एव परमं द्रष्टार आसन् गुरो-
र्लब्ध्वा ज्ञानमनेकधा प्रवचनैर्मन्वादयः प्राथयन् ॥ २५ ॥

वशि। अनघः श्रोत्रियाणां गृहे जातोऽसि (झ)।

दुर्विनीते त्वयि वयं दुःखिताः सुखिनोऽन्यथा।
निसर्गो ह्येष वृद्धानां यत् तु श्रेयस्तथैव तत् ॥ २६ ॥

तत् परिपूत एवासि।

विश्वा। अपहतं ते विघ्नः पाप्मानं रामभद्रेण। यतः प्रायश्चित्तमिव राजदण्डमप्येनसो निष्क्रयमामनन्ति धर्माचार्य्याः। किं पुनरत्र भगवान् वशिष्ठः प्रजापालसन्निधौ प्रशास्ति (ञ)।

वृद्धेति। मन्वादयः मनुप्रभृतयः गुरवः भवन्त एव प्राक् पूर्वं धर्मस्य परमं तत्त्वमित्यर्थः द्रष्टारः दर्शनशीलाः, परममिति शीलार्थतृण्योगात् न षष्ठी। आसन् गुरोः ब्रह्मण इति भावः अनेकधा बहुधा ज्ञानं लब्ध्वा प्रवचनैः संहिताभिः प्राथयन् प्रणीतवन्तश्च धर्मशास्त्रं निबद्धवन्तश्चेत्यर्थः अतः रामेण दान्तस्य शमितस्य मे मम वृद्धानां भवतामिति भावः अतिक्रमेण अवमाननेन सम्भृतः सञ्चितः जनित इत्यर्थः तस्य महतः पाप्मनः पापस्य निर्विक्षये उपशमनाय प्रायश्चेतनं प्रायश्चित्तं पापशुद्धिजनककर्मेति यावत् आदिशन्तु आज्ञापयन्तु। शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

(झ) अनघः अपापः। श्रोत्रियाणां वेदविदुषाम्।

दुर्विनीते इति। त्वयि दुर्विनीते दुराचारिणि सति वयं दुःखिताः, अन्यथा सदाचारिणीति भावः सुखिनः भवाम इति शेषः। हि यतः वृद्धानां यत् तु श्रेयः, तत् तथैव श्रेय एव तिष्ठत्विति शेषः एष निसर्गः स्वभावः स्वाभाविकी चेति यावत् ॥ २६ ॥

(ञ) एनसः पापस्य निष्क्रयं शुद्धिम्। आमनन्ति कथयन्ति। प्रजापालसन्निधौ राजसमीपे प्रशास्ति आदिशति।

राम:। एतानि तानि साक्षात्कृतधर्मणामृषीणां प्रसन्नगम्भीरपावनानि वचनानि (ट)।

दश। भगवन् जामदग्न्य!

निसर्गत: पवित्रस्य किमन्यत् पावनं तव?।
तीर्थोदकञ्च वह्निश्च नान्यत: शुद्धिमर्हत:॥ २७॥

जाम। भगवति वसुन्धरे! प्रसीद रन्ध्रदानेन (ठ)।

जन। भगवन्! यदि प्रसन्नोऽसि तद्विस्रब्धोपवेशनात् परिपुनीहि गृहान्, एतत् पूतमासनं भगवत: (ड)।

जाम। यदभिरुचितं सूर्य्यशिष्यान्तेवासिने राजन्यश्रोत्रियाय (ढ)।

[ सर्वे उपविशन्ति ]

दश। जनपदवहिर्निष्ठा यूयं गृहस्य परिग्रहाद्
वयमपि निजैर्व्यग्रा: कार्य्यैस्ततो न बभूव य:।
स इह भवतामद्यास्माभिर्मनोरथवाञ्छित:
सुचरितपरीपाकात् प्राप्तश्चिरस्य समागम:॥ २८॥

---

(ट) साक्षादिति साक्षात्कृत: प्रत्यक्षीकृत: धर्मो यै: तथोक्तानां धर्मदर्शिनामित्यर्थ:।

निसर्गत इति। निसर्गत: स्वभावत: पवित्रस्य विशुद्धस्य तव अन्यत् अपरं पावनं प्रायश्चित्तमिति यावत् किम्? न किमपीत्यर्थ:। तीर्थोदकञ्च पुण्यक्षेत्रवारि च वह्निश्च अन्यत: अपरस्मात् न शुद्धिम् अर्हत: लभेतामित्यर्थ:। अनुष्टुब्वृत्तम्॥ २७॥

(ठ) रन्ध्रदानेन विवरदानेन।

(ड) विस्रब्धोपवेशनात् विस्रब्धं विश्वस्तं प्रशान्तमिति भाव: उपवेशनं तस्मात्। पूतं पवित्रम्।

(ढ) सूर्य्येति सूर्य्यशिष्य: याज्ञवल्क्य: तस्य अन्तेवासी शिष्य: तस्मै। राजन्यश्रोत्रियाय राजर्षये जनकाय इत्यर्थ:।

जनपदेति। जनपदात् लोकालयात् वहि: निष्ठा स्थिति: येषां तथाभूता: वनचारिण इत्यर्थ: यूयं, वयमपि गृहस्य गृहस्थोचितधर्मस्येति भाव: परिग्रहात् आश्रयणात्

अत्र च। का ते स्तुतिः स्तुतिपथादतिवृत्तधाम्नः ?
किं दीयतामविकलक्षितिदायिने च ? ।
शान्तस्य किं परिजनेन ? मुने ! तथापि
पुत्रैः समं दशरथोऽद्य वशंवदस्ते ॥ २९ ॥
जाम। यूयमीदृशा इति किमत्राश्चर्य्यम् ?
प्रोच्चैर्धाम यदामनन्ति सुधियः सोऽयं निधिर्ज्योतिषां
देवो वः सविता कुलस्य किमतो भूत्यै प्रशंसापदम् ? ।
यज्वानः परमार्थराजऋषयस्ते यूयमिक्ष्वाकवो
येषां वेद इवाप्रमेयमहिमा धर्मे वशिष्ठो गुरुः ॥ ३० ॥

निजैः कार्य्यैः व्यग्राः व्यापृताः, ततः कारणात् यः समागमः न बभूव, स चिरस्य मनोरथवाञ्छितः भवतां समागमः सम्मेलनम् अद्य अस्माभिः सुचरितानां सुकृतानां परीपाकात् परिणामात् इह अस्मिन् स्थाने प्राप्तः। हरिणीवृत्तम् ॥ २८ ॥

केति। हे मुने ! स्तुतिपथात् स्तवपद्धतेः अतिवृत्तम् अतीतं धाम तेजः यस्य तथोक्तस्य ते तव स्तुतिः मया क्रियमाणेति भावः का ? न कापीत्यर्थः न गणनीयेति भावः ! अविकलक्षितिदायिने समस्तपृथिवीदानकारिणे च तुभ्यमिति शेषः किं दीयतां किञ्चिदपि त्वदर्हं दानद्रव्यं नास्ति येन ते पूजां करवाणीति भावः। ननु भृत्यादेः प्रयोजनश्चेत् तदपि नास्तीत्याह शान्तस्येति, शान्तस्य सर्वत्यागिनो निःस्पृहस्येत्यर्थः परिजनेन दासादिना किम् ? न किमपि प्रयोजनमित्यर्थः। तथापि एवं प्रयोजनाभावेऽपीत्यर्थः पुत्रैः समं सह दशरथः अद्य ते तव वशंवदः वचनकारकः भृत्यः संवृत्त इति शेषः। वसन्ततिलकं वृत्तम् ॥ २९ ॥

प्रोच्चैरिति। सुधियः पण्डिताः यत् प्रोच्चैः प्रकर्षेण ऊर्द्धम् उन्नतं धाम तेजः आमनन्ति कथयन्ति, सोऽयं ज्योतिषां निधिः देवः वः युष्माकं कुलस्य सविता प्रभवः, अतोऽस्मात् परमिति शेषः भूत्यै अभ्युन्नतये प्रशंसापदं श्लाघास्थानं किम् ? न किमपीत्यर्थः। ते प्रसिद्धाः यज्वानः यज्ञशीलाः परमार्थेन राजन्ते इति परमार्थराजाः ते च ऋषयश्चेति तथोक्ताः इक्ष्वाकवः यूयम्। वेद इव अप्रमेयः अपरिच्छेद्यः महिमा यस्य तथाभूतो वशिष्ठः येषां युष्माकं धर्मे धर्मोपदेशे धर्मकार्य्ये वा गुरुः आचार्य्यः। शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

अपिच। संग्रामेष्टिसमाप्तिदं दिविषदां भर्त्तुर्धनुःसाधनं
सप्तद्वीपनिविष्टयूपनिलयश्रेण्यङ्किता भूर्गृहाः।
शश्वत्कीर्त्तिनिबन्धनं भगवती भागीरथी सागरः
प्रख्यातानि च तानि तानि भवतां भूमानमातन्वते ॥३१॥
वशिष्ठविश्वामित्रौ [ अपवार्य्य ] एतदपि शिक्षितं वत्सेन (घ)।
जाम। रामभद्र! मामनुमोदस्व अरण्यगमनाय।
विश्वा। मामपि अथ भवन्तोऽनुजानन्तु।
रघुजनकगृहेषु गर्भरूपव्यतिकरमङ्गलवृद्धयोऽनुभूताः।
भृगुपतिदमन [ इत्यर्द्धोक्ते विरम्य ]
भृगुपतिविदितोन्नतिं च वत्सं प्रियमभिनन्द्य सुखी गृहानुपेयाम्
॥ ३२ ॥
दश। वत्स रामभद्र! प्रस्थितस्ते भगवान् कौशिकः।

---

संग्रामेति। धनुःसाधनं धनुर्वेदशिक्षा दिविषदां देवानां भर्त्तुः इन्द्रस्य संग्रामे या इष्टिः इच्छा तस्याः समाप्तिं ददातीति तथोक्तम् असुराणां विजयेन इन्द्रस्य संग्रामावतरणस्य निष्प्रयोजनत्वात् तत्सन्तोषकरमिति भावः, सप्तसु द्वीपेषु निविष्टाभिः कल्पिताभिः यूपनिलयानां यज्ञीयपशुबन्धनशालानां श्रेणीभिः अङ्किता चिह्निता भूः पृथिवी गृहाः निवासाः, भगवती भागीरथी गङ्गा सागरश्च शश्वत् सततं चिरन्तनमित्यर्थः कीर्त्तिनिबन्धनं यशोहेतुः तानि तानि प्रख्यातानि भवतां कर्माणीति शेषः भूमानं गौरवम् आतन्वते विस्तारयन्ति। भगीरथकृतखातादवच्छिन्नजलप्रवाहरूपा गङ्गा सञ्जाता। तथा च षष्टिसहस्रसंख्यकसगरपुत्रैः खानितत्वात् समुद्रस्य सागराभिधानत्वम्। शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

(घ) एतदपि लोकसन्तोषकरं स्तुतिवचनमपीति भावः। वत्सेन परशुरामेण।

गर्भेति। गर्भरूपाणां पुत्रकन्यानामित्यर्थः व्यतिकराः सम्बन्धाः विवाहा इति यावत् एव मङ्गलानि तान्येव वृद्धयः अभ्युदयाः तैः वृद्धयो वा। अनुभूताः दृष्टा इति यावत्। भृगुपतिना परशुरामेण विदिता ज्ञाता अनुभूतेति यावत् उन्नतिः अभ्युदयः यस्य तथोक्तं प्रियं रामम् अभिनन्द्य सुखी सन् गृहान् स्वनिलयान् सिद्धाश्रमानिति भावः उपयाम् उपगच्छेयम् ॥ ३२ ॥

विश्वा । [ सास्रं राममालिङ्ग्य ] अहमेव सौम्य ! त्वां मोक्तुमुत्सहे ।

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ३३ ॥

वसि । ब्रह्मन् ! स्वयमेव गन्तुमागन्तुं च कामचार: (त) ।

विश्वा । भगवन् ! यद्यनुज्ञायते तदेहि सिद्धाश्रमपदमुभौ गच्छाव: । त्वां पुरस्कृत्य गच्छन् मधुच्छन्दसो मातु: सत्कार्यो भविष्यामि (थ) ।

वसि । किमेतावत्यपि भवानस्मासु न प्रभवति ?

राजानौ । रमणीय: पावनो ब्रह्मर्षिसङ्गम: ।

अन्योन्यमाहात्म्यविदोरन्यैरविदितात्मनो: ।
विराजते विरोधोऽपि नाम स्नेहे तु का कथा ? ॥ ३४ ॥

---

किमिति । किन्तु अनुष्ठानस्य सायं प्रात:करणीयस्य अग्निहोत्रसम्पादनस्येति भाव: नित्यत्वम् अवश्यकर्त्तव्यत्वम् अकरणे प्रत्यवायजनकत्वञ्चेत्यर्थ: स्वातन्त्र्यं स्वाधीनतां स्वेच्छया यत्र कुत्रचिदवस्थानमिति यावत् अपकर्षति निषेधति, हि यत: आहिताग्नीनां नित्याग्निहोत्रिणां गृहस्थता गृहेषु अवस्थानं प्रत्यवायै: विघ्नै: सङ्कटा आकुला, सतत गार्हस्थ्यकार्य्येषु व्यापृततया अग्निहोत्रव्याघात: पदे पदे स्यादिति भाव: । अनुष्टुब्-वृत्तम् ॥ ३३ ॥

(त) कामचार: स्वेच्छाचारित्वम् ।

(थ) मधुच्छन्दस: तदाख्यस्य विश्वामित्रपुत्रस्य । सत्कार्य्य: आदरणीय: ।

अन्योन्येति । अन्योन्यस्य परस्परस्य माहात्म्यं वित्त इति तयो: अन्यै: जनै: अविदित: अज्ञात: आत्मा स्वरूपं ययो: तथाभूतयो: वसिष्ठविश्वामित्रयोरिति शेष: विरोधोऽपि नाम विराजते शोभते, स्नेहे प्रणये तु का कथा ? प्रणय: कीदृक् शोभते इति किं वक्तव्यमित्यर्थ: । कामधेनुं वसिष्ठोऽसौ न तत्याज यदा मुनि: । ततोऽस्य शबलां राजा विश्वामित्रस्तदाहरत् । * * * * दृष्ट्वा निसूदितं सैन्यं वसिष्ठेन महात्मना । विश्वामित्रसुतानान्तु शतं नानाविधायुधम् । अभ्यधावत् सुसंक्रुद्धं वसिष्ठं जपतां वरम् । हुङ्कारेणैव तान् सर्वान् निर्ददाह महामुनिरिति रामायणमत्रानुसन्धेयम् ॥ ३४ ॥

[ नेपथ्ये ]

एषा रामवधूर्गुरून् वन्दते।

ऋषयः। वत्से जानकि!

वीरेण ते विनयमाङ्गलिकेन पत्या
वृत्रद्रुहः प्रशमितेषु महाभयेषु।
ऋतप्रकाण्डगृहिणीबहुमानपूजाम्
अर्जस्वलामपि शची मनसा करोतु॥ २५॥

रामः। [ स्वगतम् ] अचिरात् समूलकाषं कषितेषु राक्षसेषु एवं स्यात् (द)।

ऋषयः। स्वस्ति एवमेव आसतां (ध) भवन्तः [ उत्तिष्ठन्ति ]

इतरे। [ उत्थाय ] नमो नमो वः।

रामः। भगवन्तौ! जामदग्न्योऽभिवादयते।

वशिष्ठविश्वामित्रौ।

स्थिरस्ते प्रशमो भूयात् प्रत्यग्ज्योतिः प्रकाशताम्।
अच्छिन्नशिवसङ्कल्पमन्तःकरणमस्तु ते॥ २६॥

---

वीरेणेति। वीरेण विनयमाङ्गलिकेन विनयमङ्गलशोभिनेत्यर्थः। ते तव पत्या रामेण, वृत्रद्रुहः इन्द्रस्य महाभयेषु असुरजनितेष्विति भावः प्रशमितेषु तच्छत्रूणां वधादिति भावः। सतु शची इन्द्रगृहिणी ऋतप्रकाण्डस्य क्षत्रियप्रधानस्य रामस्येत्यर्थः गृहिणी त्वं तस्याः तवेति भावः बहुमानपूजां बहुगौरवशालिनीं सपर्य्याम् अर्जस्वलामपि आत्यन्तिकीमपि न तु सामान्यामित्यपिशब्दार्थः मनसा करोतु अभिध्यायत्वित्यर्थः। वसन्ततिलकं वृत्तम्॥ २५॥

(द) समूलकाषं मूलस्य काषः उत्पादनं तेन सह वर्त्तमानं यथा तथा कषितेषु उत्पादितेषु।

(ध) आसताम् अवतिष्ठन्ताम्।

स्थिर इति। ते तव स्थिरः निश्चलः प्रशमः शान्तता भूयात्, प्रत्यग्ज्योतिः पर

[ इति निष्क्रान्तौ ]

जाम। [ किञ्चित् परिक्रम्य, स्थित्वा च ] वत्स रामभद्र! इतस्तावत्।

रामः। [ उपसृत्य ] आज्ञापय।

जाम। यन्मया क्षत्रियोच्छेदविश्रान्तेनावधारितम्।
तदेतदधुना धत्ते धनुः कारणशून्यताम्॥ ३७॥
इध्मादिव्रश्चनप्रयोजनमस्तु परशुः (न)।
पुण्यानामृषयस्तटेषु सरितां ये दण्डकायां वने
भूयांसो निवसन्ति तेषु सततं लङ्कासदो राक्षसाः।
विध्वंसाय चरन्ति तत्प्रमथने यस्योपयोगो भवेत्
सम्प्रत्येव सतामुनैव धनुषा वत्सेऽधिकारः स्थितः॥ ३८॥

[ इति धनुः अर्पयति ]

रामः। [ प्रणम्य ] प्रतिगृह्णीतेयमाज्ञा।

तत्त्वं प्रकाशताम् आविर्भवतु। ते तव अन्तःकरणम् अच्छिन्नः अविगलितः शिवः शुभः सङ्कल्पः वासना यस्य तथोक्तम् अस्तु॥ ३६॥

यदिति। मया क्षत्रियाणाम् उच्छेदेन विश्रान्तः तेन सता यत् अवधारितं रचितमिति शेषः यदि कदापि पुनः क्षत्रियाणामुत्थानं भवेत्तदर्थमिति भावः। तदेतत् धनुः अधुना इदानीं कारणशून्यताम् अकारणतां धत्ते निरर्थकमेतद्धनुर्धारणमित्यर्थः। अनुष्टुब्वृत्तम्॥ ३७॥

(न) इध्मादीति इध्मादीनां काष्ठादीनां व्रश्चनं छेदनमेव प्रयोजनम् अस्तीति शेषः अतः परशुः कुठारः अस्तु तिष्ठतु मत्समीपे इति शेषः।

पुण्यानामिति! पुण्यानां सरितां नदीनां गोदावरीप्रभृतीनां तटेषु दण्डकायां दण्डकाख्ये इत्यर्थः वने ये भूयांसः बहवः ऋषयः निवसन्ति, लङ्कासदः लङ्कावासिनः राक्षसाः तेषु ऋषिषु सततं विध्वंसाय चरन्ति, अमुनैव सता उत्कृष्टेन धनुषा तत्प्रमथने राक्षसानां प्रमथने विध्वंसने यस्य अधिकारस्य उपयोगः प्रयोजनं भवेत् सम्प्रत्येव सः अधिकारः एतत्स्वामित्वमिति भावः वत्से त्वयीति भावः स्थितः। धनुरिदं त्वं रक्षेति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ३८॥

जाम। [ सास्रं परिक्रम्य ] आयुष्मन्! प्रतिनिवर्त्तस्व।

[ इति निष्क्रान्तः ]

रामः। [ सबाष्पम् ] गतो भगवान् भार्गवः [ विचिन्त्य ] यदपि नामाऽन्येन केनचिदुपायेन दण्डकारण्यं प्रतिष्ठेयम्? कथं च रामप्रियाद् गुरुजनादेवं स्यात्? (प)।

न्यस्तशस्त्रे भृगुपतौ परतन्त्रे तथा मयि।
कष्टमुत्सादिताः क्रूरैर्यातुधानैस्तपोधनाः॥ ३९॥

[ नेपथ्ये ]

आर्य्य! आर्य्य!

मध्यमायाः प्रियसखी मातुर्वो मन्थरेति या।
सा प्राप्तेयमयोध्यायास्तव राम! दिदृक्षया॥ ४०॥

रामः। साधु यदिदमस्यां शिशुजनप्रवासवैमनस्यं विच्छिद्येत। तद्वत्स लक्ष्मण! उपसर्पय (फ)।

---

(प) नाम सम्भावनायाम्। कथञ्चिद्दण्डकारण्येषु मम प्रस्थानं सम्भाव्यते किम्? इति निष्कर्षः। रामप्रियात् रामः प्रियो यस्य तथाभूतात् रामं प्रति नितरां स्नेहवत इत्यर्थः गुरुजनात् पित्रादेरिति यावत्। एवं मम दण्डकारण्यप्रस्थानाभ्यनुज्ञानमिति भावः।

न्यस्तेति! भृगुपतौ परशुरामे न्यस्तानि त्यक्तानि शस्त्राणि येन तथाभूते तथा मयि परतन्त्रे पराधीने गुरुजनानुवर्त्तिनीतिभावः सति क्रूरैः निर्दयैः यातुधानैः राक्षसैः तपोधनाः ऋषयः उत्सादिताः भंशिताः नाशिता वा कष्टम् अतीव दुःखमिदमिति भावः। अनुष्टुब्वृत्तम्॥ ३९॥

मध्यमाया इति। हे राम! वः युष्माकं, न इति पाठे नः अस्माकं मध्यमाया मातुः कैकेय्याः मन्थरेति या प्रियसखी अस्तीति शेषः सा इयं तव दिदृक्षया द्रष्टुमिच्छया अयोध्यायाः प्राप्ता उपस्थिता। अनुष्टुब्वृत्तम्॥ ४०॥

(फ) अस्यां मन्थरायाम्। शिशुजनेति शिशुजनानाम् अस्माकमिति भावः प्रवासेन वैमनस्यं विमनायमानत्वं विच्छिद्येत विच्छिन्नं भवेदित्यर्थः। उपसर्पय समीपमानय।

[ ततः प्रविशति लक्ष्मणः मन्थरावेशा शूर्पणखा च ]

शूर्प । आवेसिअमंथरासरीरा सुप्पणहा अहं । वसिष्ठ-विस्सामित्तगमणेण सुसमाहिदं अम्हाकं । एसो परसुरामविजई खत्तिअकुमारओ रामो [ निर्वर्ण्य ] अहो ! समग्गसोहग्गलच्छीपरिग्गहेण लोअणरसाअणसोम्मं से सरीरणिम्माणं भोदाणिं चिरआलवेहव्वदुक्खप्पवभंसिदसंसारसोक्खस्स वि जणस्स चारित्तधीरसपुरिदं पुणोवि हिअअं परिप्फुरावेदि (व) ।

रामः । [ प्रणिपत्य ] अपि मन्थरे ! कुशलमम्बायाः ?

शूर्प । सुहं कुसलं च । वच्छलदाप्पणुदत्थणी मज्झमा दे मादा परिसज्जिअ आसवेदि । पुत्तअ ! पुरा पडिस्सादे दुवे वरे महाराएण, जाणावेमि, एत्थ मे विस्सत्तिहारओ होइ एसो तादस्स कज्जलेहो (भ) ।

लक्ष्म । [ गृहीत्वा वाचयति ]

(व) आवेशितमन्थराशरीरा शूर्पणखा अहम् । वशिष्ठविश्वामित्रगमनेन सुसमाहितम् अस्माकम् । एष परशुरामविजयी क्षत्रियकुमारो रामः । अहो ! समग्रसौभाग्यलक्ष्मीपरिग्रहेण लोचनरसायनसौम्यमस्य शरीरनिर्माणं भो इदानीं चिरकालवैधव्यदुःखप्रभंशितसंसारसौख्यस्यापि जनस्य चारित्रधीरसपूरितं पुनरपि हृदयं परिस्फारयति सं ।

वशिष्ठविश्वामित्रगमनेन कर्त्रा अस्माकं सुसमाहितम् उपक्रान्तमित्यर्थः । समग्रेति समग्रं सम्पूर्णं यत् सौभाग्यं सर्वजनवाञ्छनीयमिति यावत् तस्य लक्ष्मीः श्रीः तस्याः परिग्रहेण समाश्रयेण । लोचनेति । लोचनयोः रसायनम् औषधविशेषदानेन प्रीणनं सौम्यं स्निग्धम् । चारित्रेति चारित्रे सुचरितलक्षणे इति भावः या धीः बुद्धिः तस्याः रसेन स्वादेन यद्वा धीरेव रसः अलं तेन पूरितम् । परिस्फारयति परिस्फुरितं करोति सम्भोगाभिलाषाय प्रेरयतीति भावः । शरीरनिर्माणं कर्तृपदम् ।

(भ) सुखं कुशलञ्च । वत्सलताप्रस्नुतस्तनी मध्यमा ते माता परिष्वज्य आशापयति पुत्रक ! पुरा प्रतिश्रातौ द्वौ वरौ महाराजेन, आशापयामि—, अत्र मे विश्वस्तिहारकौ भवति एष तातस्य कार्य्यलेखः सं ।

अस्त्वेकेन वरेण वत्सभरतो भोक्ताधिराज्यश्रियः

[स्वगतम्] कथमेतदार्य्ये तिष्ठति कनिष्ठस्यार्य्यस्य भरतस्य राज्यप्रार्थनम् ? [प्रकाशम्]

यात्वन्येन विहाय कालहरणं रामो वनं दण्डकम्। (४१अ)

[स्वगतम्] हा! अम्ब! किं कृतं त्वयार्य्यगमनवरणेन? (म) [प्रकाशम्]

तस्मिंश्चीरधरश्चतुर्दशसमास्तिष्ठत्वसौ तं पुनः

सीतालक्ष्मणमात्रकात् परिजनादन्यो न चानुव्रजेत् ॥ ४१ ॥(आ)

[स्वगतम्] हा पापे रण्डे मातृबन्धो! (म)।

सदा भरतशत्रुघ्नलक्ष्मणार्य्यमुखैः कृताम्।

अम्बेति व्याहृतिं हित्वा किं कृतं पापया त्वया ॥ ४२ ॥

रामः। अहो! प्रसादप्रकर्षः। (य)।

---

तातस्य तव पितुरित्यर्थः। कार्य्यलेखः कार्य्यार्थलिपिः। विज्ञप्तिहारकः विज्ञापक इत्यर्थः।

अस्त्विति। वत्सभरतः एकेन वरेण अधिराज्यश्रियः अधिराजलक्ष्म्याः भोक्ता अस्तु। रामः अन्येन वरेण हेतुना कालहरणं विलम्बमित्यर्थः विहाय दण्डकं वनं यातु गच्छतु ॥ ४१—अ ॥

(म) आर्य्यगमनवरणेन आर्य्यस्य रामस्य गमनं दण्डकारण्ये इति शेषः तस्य वरणं प्रार्थनं राजसमीपे इति भावः।

तस्मिन् इति। तस्मिन् दण्डकारण्ये असौ रामः चीरधरः वल्कलधरः सन् चतुर्दश समाः वत्सरान् तिष्ठतु सीतालक्ष्मणमात्रकात् परिजनात् अन्यः कोऽपीति शेषः तं रामं पुनः किन्तु न अनुव्रजेत् अनुगच्छतु च। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१—आ ॥

(म) रण्डे धूर्त्ते! मातृबन्धो! निकृष्टमातः!।

सदेति। भरतः शत्रुघ्नः लक्ष्मणः आर्य्यः रामः एतेषां मुखैः कृताम् उच्चरिताम् अम्बेति मातेति व्याहृतिम् उक्तिं हित्वा परित्यज्य पापया त्वया किं कृतम्? नैतदुचितं तवेति भावः ॥ ४२ ॥

(य) प्रसादप्रकर्षः प्रसादस्य अनुग्रहस्य प्रकर्षः अतिशयः।

तत्रैव गमनादेशो यत्र पर्य्युत्सुकं मन:
न चैष विरहो जात: स च वत्सो ममानुग: ॥ ४३ ॥

लक्ष्म। दिष्ट्यानुमोदितोऽहमार्य्येण (र)।

राम:। आर्य्ये मन्थरे! एष प्रस्थितोऽस्मि।

शूर्प। णमो दाणिं भअवदो संसारस्स जत्थ ईरिसा वि कप्पद्दुमा प्परोहंति (ल)।

[ इति निष्क्रान्ता ]

लक्ष्म। अये! मातुलो युधाजिदार्य्यभरतसहचरस्तातमुपसर्पति।

राम:। दिष्ट्या कष्टञ्च।

अपरिष्वज्य भरतं नास्ति मे गच्छतो धृति:।
अस्मत्प्रवासदु:खार्त्तं न त्वेनं द्रष्टुमुत्सहे ॥ ४४ ॥

[ प्रविश्य युधाजिद्भरतौ दशरथमुपसृत्य ]

देव! श्रूयतां यदेकायनीभूय प्रकृतयस्त्वां विज्ञापयन्ति (व)।

त्वय्यास्थाता यस्तवायं तनूज-
स्तेनाद्यैव स्वामिनस्ते प्रसादात्।

---

तत्रैवेति। यत्र मन: पर्य्युत्सुकम् उत्कण्ठितं गमनार्थमितिभाव: तत्रैव गमने आदेश: अनुमति:। एष च विरह:*लक्ष्मणेनेति शेष: न जात:, यत: स वत्सश्च मम अनुगच्छतीति अनुग:। अनुष्टुब्वृत्तम् ॥ ४३ ॥

(र) अनुमोदित: अनुमत: अनुगमने इति शेष:।

(ल) नम इदानीं भगवत: संसारस्य यत्र ईदृशा अपि कल्पद्रुमा: प्ररोहन्ति सं। ईदृशा: रामसदृशा: कल्पद्रुमा: वाञ्छितार्थफलप्रदवृक्षविशेषा:। प्ररोहन्ति जायन्ते।

अपरिष्वज्येति। भरतम् अपरिष्वज्य अनालिङ्ग्य असम्भाष्येति भाव: गच्छत: वनमिति शेष: धृति: सन्तोष: नास्ति न भवति। तु किन्तु अस्माकं प्रवासेन दु:खार्त्तम् एनं भरतं द्रष्टुं साक्षात् कर्त्तुं न उत्सहे न पारयामि। अनुष्टुब्वृत्तम् ॥ ४४ ॥

(व) एकायनीभूय ऐकमत्यमास्थायेत्यर्थ:। प्रकृतय: प्रधानपुरुषा:।

राजन्वत्यो रामभद्रेण राज्ञा
लब्धक्षेमाः पूर्णकामाश्चराम: ॥ ४५ ॥

दश । सखे जनक !

प्रिये कल्याणकामाभिः प्रजाभिर्नोदिता वयम् ।
किन्तु रामप्रियौ नेह मैत्रावरुणकौशिकौ ॥ ४६ ॥

जन । परोक्षे सुकृतं कर्म तयोः प्रीतिं करिष्यति ।
मन्त्रज्ञो वामदेवस्तु भगवानास्त एवं हि ॥ ४७ ॥

दश । यद्येवं तदयमेव जामदग्न्यविजयमहोत्सवः प्रसज्यतामभिषेकमहोत्सवेन ।

रामः । इदमिदानीं कथम् ?

दश । सुमन्त्र ! सन्निधाप्यन्तामाभिषेचनिकाः सम्भाराः । यस्य येनार्थी स तेन पर्य्याप्तकामः कर्त्तव्यः (ग्र) ।

---

वयमा इति । तव अयं यस्तनूजः पुत्रः राम इत्यर्थः अय्याः वेदत्रयस्य वाता रक्षिता, अद्येव स्वामिनः ते तव प्रसादात् तेन राज्ञा रामभद्रेण राजन्वत्यः सुराजवत्यः अतएव लब्धक्षेमाः प्राप्तमङ्गलाः पूर्णकामाश्च चरामः विचरामः वयमिति शेषः । शालिनीवृत्तम्, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ ४५ ॥

प्रिये इति । कल्याणकामाभिः मङ्गलार्थिनीभिः प्रजाभिः वयं प्रिये रामराज्याभिषेकरूपे नोदिताः प्रेरिता प्रार्थिता इति यावत् किन्तु रामस्य प्रियौ मैत्रावरुणकौशिकौ वशिष्ठविश्वामित्रौ इह अस्मिन् स्थाने इति शेषः न विद्येते इति शेषः तयोरुपस्थितौ रामाभिषेकविधिरुचित इति भावः । अनुष्टुब्वृत्तम् ॥ ४६ ॥

परोक्षे इति । परोक्षे असाक्षात् तयोरिति शेषः सुकृतं सुष्ठु कृतं कर्म रामाभिषेचनमिति भावः तयोर्वशिष्ठविश्वामित्रयोः प्रीतिं जनयिष्यति । मन्त्रज्ञः अभिषेचनमन्त्रविज्ञः भगवान् वामदेवस्तु आस्ते तिष्ठत्येव हि निश्चितम् । भगवता वामदेवेनापि रामाभिषेचनस्य सम्भव इति भावः । अनुष्टुब्वृत्तम् ॥ ४७ ॥

(ग्र) सन्निधाप्यन्ताम् आक्रियन्ताम् । सम्भाराः द्रव्याणि । अर्थी याचकः येन धनेन पर्य्याप्तकामः सफलमनोरथः ।

रामः। [ उपसृत्य, प्रणम्य च ] अहं तावदर्थी।

दश। वत्स ! केन ?

रामः। योऽसौ वरद्वयन्यासस्त्वां माताद्य मध्यमा।
यथेष्टं नाथते तात ! तत् प्रसादार्थिनो वयम् ॥ ४८ ॥

दश। सत्यसन्धा हि राघवः किं वत्स ! विचिकित्ससे ? ।
त्वयि दूतेऽपि कस्तस्याः प्राणानपि धनायते ॥ ४९ ॥

रामः। वत्स ! वाच्यताम्।

लक्ष्म। अस्त्वेकेन वरेण [ इत्यादिकं वाचयति।]

इतरे। कथमन्यदेव किमपि। हा हा ! हताः स्मः।

राजा। [ मूर्च्छति ]

रामलक्ष्मणौ। तात ! समाश्वसिहि समाश्वसिहि।

जन। इक्ष्वाकुवंशतिलकस्य नृपस्य पत्नी
तस्मिन् विशुद्धिमति राजकुले प्रसूता।
अत्याहितं किमपि राक्षसकर्म कुर्य्यात्
आर्य्या सती कथमहो ! ? महदद्भुतं नः ॥ ५० ॥

---

य इति। हे तात ! यः असौ वरद्वयन्यासः वरयोर्द्वयोः प्रतिश्रुतिः भवत्कृत इति शेषः, अद्य मध्यमा माता कैकयी त्वां तं वरद्वयन्यासं नाथते प्रार्थयते, तत् तस्मात् वयं प्रसादार्थिनः अनुग्रहप्रार्थिनः ॥ ४८ ॥

सत्येति। हि यतः राघवः रघुवंश्याः सत्यसन्धाः सत्यप्रतिज्ञाः, सत्यं नान्यथा कुर्वन्तीति भावः। हे वत्स ! किं कथं विचिकित्ससे ? संशेषे ? विचिकित्सा तु संशय इत्यमरः। तस्याः कैकेय्याः दूतेऽपि सन्देशहारिणि अपि त्वयि को जनः प्राणानपि धनायते आत्मनो धनमिच्छति यदि प्राणदानेनापि सत्या प्रतिज्ञा पूर्य्यते तदपि करोमीति भावः। अनुष्टुब् वृत्तम् ॥ ४९ ॥

इक्ष्वाक्विति। इक्ष्वाकुवंशतिलकस्य नृपस्य दशरथस्य पत्नी तस्मिन् प्रसिद्धे विशुद्धिमति निष्कलङ्के राजकुले कैकयवंशे प्रसूता जाता अतएव आर्य्या साध्वी सती कथमीदृशं

राम:। तात! तात!

सत्यसन्धाः स्थ यदि वा रामो यदि च वः प्रियः।
तत् प्रसीदतु तातो नः पूर्णकामास्तु मध्यमा ॥ ५१ ॥

दश। एवमस्तु का गतिः।

जन। हा वत्स रामभद्र! हा वत्स लक्ष्मण!

पुत्रसंक्रान्तलक्ष्मीकैर्यद् वृद्धेक्ष्वाकुभिर्धृतम्।
त्वया तत् चीरकण्ठेन प्राप्तमारण्यकं व्रतम् ॥ ५२ ॥

वत्से जानकि!

धन्यासि यस्यास्ते हि गुरुनियोगादेव भर्त्तुरनुगतिः।

दश। हा वत्से जानकि!

कङ्कणधरैव च रक्षसा मुपनीतास्युपहारताम् ॥ ५३ ॥

[ इत्युभौ मूर्च्छतः ]

राम:। अत्यापन्नो (ष) गुरुजनः कथं नामैतत्?

लक्ष्म। आर्य्य!

दृष्टशोऽयमायातः करुणस्नेहसंवेगः किमत्र च।

किमपि अनिर्वचनीयम् अत्याहितम् अत्यशुभं राक्षसकर्म दारुणं कर्मेति यावत् कुर्य्यात्। अहो नः अस्माकं महत् अद्‌भुतम् आश्चर्य्यं प्रतिभातीति शेषः। वसन्ततिलकं वृत्तम्॥५०॥

सत्यसन्धा इति। यदि वा सत्यसन्धाः सत्यप्रतिज्ञाः स्थ भवथ, यदि च रामः वः युष्माकं प्रियः, तत् तदा तातः प्रसीदतु प्रसन्नो भवतु, नः अस्माकं मध्यमा मातेति शेषः पूर्णकामा सफलमनोरथा अस्तु। अनुष्टुब् वृत्तम् ॥ ५१ ॥

पुत्रेति। पुत्रेषु संक्रान्ता आहिता लक्ष्मीः राजश्रीर्यैः तथोक्तैः वृद्धैरिक्ष्वाकुभिः यत् धृतम् अवलम्बितं चीरकण्ठेन दुग्धपोष्येणेति भावः त्वया तत् आरण्यकं व्रतं वानप्रस्थधर्मः प्राप्तं गृहीतम् ॥ ५२ ॥

कङ्कणधरा वैवाहिकमङ्गलहस्तसूत्रधारिणी। उपहारताम् उपढौकनताम्। आर्य्यावृत्तम् ॥ ५३ ॥

क्रियते प्रतिषिद्धन्तु हि कालहरणं भरतजनन्या ॥ ५४ ॥

तदलमतिस्नेहकातर्य्येण ।

रामः । साधु आचारनिष्ठुर ! साधु ! अमनुष्यसदृशस्ते चित्तसारः (स) । तद् वत्स ! वैदेहीमानय ।

[ लक्ष्मणो निष्क्रान्तः ]

भरतः । मातुल ! मातुल ! युक्तमेतद्वो गृहस्य ? (ह) ।

युधाजित् । वत्स ! उद्भ्रान्तः संवृत्तोऽस्मि ।

पतिर्मृत्योर्वक्त्रे व्रजति वनमेतत् सुतयुगं
वधूटी रक्षोभ्यो बलिरिव वराकी प्रणिहिता ।
निरालम्बो लोकः कुलमयशसा तच्च निहतं
स्वसुर्मे दौरात्म्यं जगदविकलं विक्लवयति ॥ ५५ ॥

[ ततः प्रविशति लक्ष्मणः सीता च ]

लक्ष्म । आर्य्य ! इयमार्य्या ।

(ष) अत्यापन्नः अतिशयेन व्याकुलित इत्यर्थः ।

आयातः उपस्थितः । आर्य्यावृत्तम् ॥ ५४ ॥

(स) आचारनिष्ठुर आचारेण व्यवहारेण निष्ठुरः निर्दयः तत्सम्बुद्धौ । अमनुष्यसदृशः अलोकसामान्यः । चित्तसारः चित्तस्थैर्य्यम् ।

(ह) गृहस्य कैकयगृहस्येत्यर्थः ।

(च) उद्भ्रान्तः विमूढः ।

पतिरिति । पतिर्दशरथः मृत्योः कृतान्तस्य वक्त्रे वदने तथा एतत् सुतयोर्गं पुत्रद्वयं रामलक्ष्मणावित्यर्थः वनं व्रजति गच्छति, वराकी तपस्विनी अनुकम्प्येति भावः वधूटी क्षुद्रा वधूः जानकीत्यर्थः बलिरिव उपहार इव रक्षोभ्यः प्रणिहिता अर्पिता । लोकः भुवनः निरालम्बः निराश्रयः, तच्च प्रसिद्धं कुलं कैकयकुलम् अयशसा अकीर्त्या निहतं नाशितम् । अतः मे मम स्वसुः भगिन्याः दौरात्म्यं दुराचारः जगत् अविकलं सम्यक् यथा तथा विक्लवयति विधुरयति । शिखरिणीवृत्तम् ॥ ५५ ॥

रामः। इत इतः। [ सीतालक्ष्मणाभ्यां सह गुरुजनं प्रदक्षिणीकृत्य ] मातुल!

एष तातस्य तातस्य प्रियापत्याश्च मातरः।
आश्वासनीयाः शोकेऽस्मिन् भवतैव गता वयम् ॥ ५६ ॥

[ इति परिक्रामति ]

युधा। [ सावेगम् ] कथं वारण्ये त्यजामि? (क) [ उत्थायानुधावति ]।

भरतः। [अनुगच्छन्] मातुल! ब्रूहि किमिदानीं करोमि?

युधा। रामभद्र! रामभद्र! अपेक्षस्व पादपरिचारकमरण्यानुचरं भरतम्।

रामः। ननु अस्यापि वर्णाश्रमरक्षणे गुरुनियोगः (ख)।

भर। लक्ष्मणस्य शत्रुघ्नस्य वा तदस्तु।

रामः। किमत्र कस्यचित् स्वरुचिः? (ग)।

भर। एतावती मम स्वरुचिः।

रामः। आः! शक्यं नाम मयि तिष्ठति त्वयान्येन वा गुरुमुल्लङ्घयितुम्?

---

मातुलेति। एष तातस्य दशरथस्य तातस्य जनकस्य प्रियापत्याः प्रियपुत्राः मातरश्च भवतैव अस्मिन् शोके आश्वासनीयाः सान्त्वनीयाः, वयं गताः चलिताः। अनुष्टुब्वृत्तम् ॥ ५६ ॥

(क) त्यजामि भरतं पर्य्युत्सुकमिति शेषः।

(ख) अस्यापि भरतस्य वर्णाश्रमरक्षणे वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्य्यादीनाञ्च रक्षणे प्रतिपालने, वर्णाः स्युर्ब्राह्मणादयः। ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये आश्रमोऽस्त्रीत्यमरः। गुरुनियोगः पितुरादेशः।

(ग) अत्र वनवासे। स्वरुचिः आत्मना रुचिः कस्यचित् भवतीति शेषः? न कस्यापि भवतीत्यर्थः।

भर। हा हा! कथं परित्यक्तोऽस्मि मन्दभाग्यः? [इति मूर्च्छति।

युधा। वत्स! समाश्वसिहि समाश्वसिहि।

भर। [आश्वस्य] मातुल! मातुल! धारयस्व माम्।

युधा। वत्स! एवं तावत् [भरतस्य कर्णे कथयित्वा] रामभद्र! एवमयं विज्ञापयति—यदेतद्भगवता शरभङ्गेन प्रेषितं तपनीयोपानद्युगलं तदार्य्यः प्रसादीकरोतु इति (घ)।

रामः। [तदुन्मुच्य] गृहाणेदं वत्स!

भर। [शिरसि आरोप्य] आर्य्य—

रामः। [परिष्वज्य] मत्पादस्पृष्टिकया प्रतिनिवर्त्तस्व। सम्प्रति सम्भावय चिरप्रमूढ़ौ तातौ (ङ)।

भर। अयमिदानीमहम्—

नन्दिग्रामे जटां बिभ्रदभिषिच्यार्य्यपादुके।
पालयिष्यामि पृथिवीं यावदार्य्यो निवर्त्तते ॥५७॥

[सीतारामौ प्रदक्षिणीकरोति]

लक्ष्म। आर्य्य भरत! लक्ष्मणः प्रणमति।

भरतः। [परिष्वज्य, वाष्पस्तम्भं नाटयति]

रामः। वत्स! तातौ सम्भावय।

भर। कष्टमद्यापि नोच्छ्वसितः [इति वीजयति]

---

(घ) शरभङ्गेन तदाख्येन मुनिना तपनीयोपानद्युगलं तपनस्येदं तपनीयं सूर्य्यदत्तमिति यावत् तापहरमिति वार्थः उपानद्युगलं पादुकायुग्मम्।

(ङ) मत्पादस्पृष्टिकया मम पादस्पर्शं कृत्वेति भावः यद्वा मम चरणपादुकया। सम्भावय समाश्वासय। चिरप्रमूढ़ौ चिरमोहितौ तातौ जनकदशरथौ।

नन्दिग्रामेति। जटां बिभ्रत् दधानः नन्दिग्रामे आर्य्यस्य पादुके अभिषिच्य राज्याधिदेवते कृत्वेति यावत् आर्य्यः रामः निवर्त्तते तावत् पृथिवीं पालयिष्यामि। अनुष्टुब्वृत्तम् ॥५७॥

जन। [समुच्छ्वस्य सर्वतो विलोक्य] हा हा मुषितोऽस्मि (च)।

दश। [उच्छ्वस्य] वत्स रामभद्र! न गन्तव्यम् न गन्तव्यम्।

प्राणाः पतन्ति परितस्तमसा वृतोऽस्मि
मर्मच्छिदो मम रुजः प्रसरन्त्यपूर्वाः।
अक्ष्णोर्मुखेन्दुमुपधेहि गिरं च देहि
हा पुत्र! मय्यकरुणः सहसैव मा भूः॥५८॥

सोन्मादमिव निर्भरं] भोः! क्व प्रविशामीदानीं मन्दभाग्यः?

[इति सविक्लवो भरतजनकाभ्यां नीयमानो निष्क्रान्तः]

युधा। वत्स! रामभद्र! रामभद्र!

एकीभूय शनैरनेकसभयव्युत्पन्नमेकक्रियं
मुक्ताक्रन्दमितस्ततः किमिदमित्युद्भ्रान्तनारीनरम्।
एतत्तत् पुरमन्यथैव सहसा सञ्जातमाविध्यते
यस्मिन् कर्दमितेषु वर्त्मसु घनैर्वाष्पाम्बुभिर्दुर्दिनम्॥५९॥

---

(च) मुषितः वञ्चितः।

प्राणाः इति। प्राणाः पतन्ति वहिर्गच्छन्तीत्यर्थः, परितः समन्तात् तमसा अन्धकारेण वृतः आच्छन्नः अस्मि, अपूर्वाः अननुभूताः मर्मच्छिदः रुजः पीड़ाः मम प्रसरन्ति विजृम्भन्ते। अक्ष्णोः नयनयोः सामीप्याधारे सप्तमी नयनयोः समीपे इत्यर्थः मुखेन्दुं मुखचन्द्रम् उपधेहि अर्पय, गिरं वाचञ्च देहि कथां कथयेत्यर्थः, हा पुत्र! सहसैव मयि अकरुणः निर्दयः मा भूः न भव वसन्ततिलकं वृत्तम्॥ ५८॥

एकीभूयेति। शनैः क्रमेण एकीभूय समवेतीभूयेत्यर्थः अनेकैः जनैः सभयं यथा तथा व्युत्पन्नं विशेषेणावधारितं सहसा एतादृशव्यापारस्य कथमप्यसम्भवनीयत्वेनाविश्वासात् अनेकैः सभयं यथा निश्चितमिति भावः एका एव क्रिया शोकव्यापारः यस्य तथोक्तम् इतस्ततो मुक्ताक्रन्दम् उच्चैः क्रन्दनपरमित्यर्थः किमिदम् इति उद्भ्रान्ताश्चकिता नार्य्यः नराश्च यस्मिन् तथोक्तम् एतत् तत् उत्सवपूर्णं पुरं सहसा अन्यथैव अन्यप्रकारमेव सञ्जातं यस्मिन् पुरे घनैः सान्द्रैर्वाष्पाम्बुभिः अश्रुजलैः कर्दमितेषु सञ्जातकर्दमेषु वर्त्मसु

रामः। मातुल मातुल! प्रतिनिवर्त्तस्व। अयञ्च वो हस्ते भरतः।

युधा। अनुरुध्यस्व मामनुगच्छन्तम्।

रामः। [ शान्तम् ] गुरवो यूयं नानुगन्तारः। आत्मना तृतीयेन गन्तव्यमित्यम्बाया आदेशः।

युधा। किमहमेकोऽनुगच्छामि अपितु सबालवृद्धाः प्रकृतयः (छ) किं न पश्यसि ?

स्कन्धारोपितयज्ञपात्रनिचयाः स्वैर्वाजपेयार्जितै-
श्छत्रैर्वारयितुं तवार्ककिरणानेते महान्तो जनाः।
साकेताः सह सैनिकैरनुपतत्पत्नीगृहीताग्नयः
प्राक्प्रस्थापितहोमधेनव इमे धावन्ति वृद्धा अपि ॥६०॥

रामः। मातुल मातुल! गुरुभिरेव शिशवो धर्मलोपात् पालयितव्याः तत् प्रसीदतु नः प्रतिनिवृत्त्य, निवर्त्त्यतामयं महाजनः। [ इति प्रणमति ]

युधा। वत्स! उत्तिष्ठ उत्तिष्ठ। एष वो वञ्चयित्वा प्रजाः क्वापि मन्दभाग्यो गच्छामि।

---

राजमार्गेषु दुर्दिनं मेघाच्छन्नम् अहः, मेघाच्छन्नेऽह्नि दुर्दिनमित्यमरः। आवेद्यते ज्ञाप्यते। अनेकसभयेत्यत्र अनेकसमयेति पाठान्तरम्। शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

(छ) प्रकृतयः अनुगच्छन्तीति शेषः।

स्कन्धेति। स्कन्धेषु आरोपिताः निहिताः यज्ञपात्राणां यज्ञोपकरणानां निचयाः समूहाः यैः तथोक्ताः एते साकेताः अयोध्यापुरवासिनः महान्तः बहवो जना लोकाः स्वैः निजैः वाजपेयेन यज्ञविशेषेण अर्जितैः तस्य दक्षिणात्वेन प्राप्तैरिति भावः छत्रैः आतपत्रैः तव अर्ककिरणान् सूर्य्यमयूखान् वारयितुं सैनिकैः सेनासंक्रान्तपुरुषैः सह अनुपतन्ती अनुगच्छन्ती पत्नी गृहीतस्य अग्निः यज्ञीय इति भावः यैः तथाभूताः सन्तः तथा इमे वृद्धा अपि प्राक् पूर्वं प्रस्थापिता होमधेनवः यैः तथाविधाः सन्तः धावन्ति अनुगच्छन्ति त्वामिति शेषः। महान्तो जना इत्यत्र महाब्राह्मणाः इति पाठान्तरम्। शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

त्वां लक्ष्मण महाबाहो! त्वाञ्च वैदेहनन्दिनि!
आमन्त्रये निवृत्तोऽस्मि पापः कल्याणमस्तु वाम् ॥६१॥

[ रुदन् प्रतिनिवृत्त्य ]

अहो! नु खलु भोः!
प्रतिमन्वन्तरं भूतैर्गीयमाना चरिष्यति।
प्रातः पवित्रं लोकानामियं चारित्रपञ्जिका ॥६२॥

[ इति निष्क्रान्तः ]

लक्ष्म। कथितमार्य्यस्य शृङ्गवेरपुरवास्तव्येन निषादपतिना गुहेन तत्प्रदेशपर्य्यन्तावस्कन्दिनो विराधराक्षसस्य दुर्विलसितम् (ज)।

रामः। तेन हि विराधहतकोन्मथनाय सन्निकृष्टप्रयागम् अनुपतन्मन्दाकिनीपवित्रमेखलं चित्रकूटं नामाचलम् उपेत्य मुनिभिः उपजुष्टतीर्थं रक्षांसि निहत्य दण्डकां प्राप्य सन्निहितगृध्रराजं क्रमेण यामो जनस्थानम् (झ)।

[ इति निष्क्रान्ताः सर्वे ]।

[ इति चारित्रं नाम चतुर्थोऽङ्कः ]।

---

त्वामिति। हे महाबाहो लक्ष्मण! त्वां हे वैदेहनन्दिनि! जानकि! त्वाञ्च आमन्त्रये सम्भाषे, पापोऽहं निवृत्तः अस्मि, वां युवयोः कल्याणं मङ्गलम् अस्तु ॥ ६१ ॥

प्रतीति। प्रतिमन्वन्तरं मन्वन्तरे मन्वन्तरे युगे युगे इत्यर्थः। भूतैः प्राणिभिः गीयमाना कीर्त्त्यमाना इयं चारित्रपञ्जिका चरित्रपद्धतिः प्रातः पवित्रं यथा तथा चरिष्यति भविष्यति। अनुष्टुब्वृत्तम् ॥ ६२ ॥

(ज) शृङ्गवेरेति। शृङ्गवेराख्यं पुरं वास्तव्यं निवासः यस्य तथोक्तेन। निषादपतिना चण्डालराजेन। तत्प्रदेशेति। तस्य प्रदेशस्य शृङ्गवेरपुरस्य पर्य्यन्तं प्रान्तसीमानम् अवस्कन्दति आक्रामतीति तथोक्तस्य। दुर्विलसितं दुश्चेष्टितम्।

(झ) सन्निकृष्टेति। सन्निकृष्टः सन्निहितः प्रयागः यस्य तथोक्तम्। अनुपतेति।

# अथ पञ्चमोऽङ्कः ।

[ ततः प्रविशति सम्पातिः (क) ]

सम्पा । नूनमद्य वत्सजटायुः अभिवादनाय मलयकन्दरकुलायम् उपसीदति (ख) । तथाहि—

पर्य्यायक्षणदृष्टनष्टककुभः संवर्त्तविस्तारयो-
र्नीहारीकृतमेघमोचितधृतव्यक्तस्फुरद्विद्युतः ।
आरात् कीर्णखणत्खणीकृतगुरुग्रावोच्चयश्रेणय:
श्येनेयस्य बृहत्पतत्त्रधुतयः प्रख्यापयन्त्यागमम् ॥ १ ॥

अनुषक्तया संसक्तया मन्दाकिन्या भागीरथ्या पविता मेखला नितम्बदेशः यस्य तादृशम् चित्रकूटेति । चित्राणि कूटानि शृङ्गाणि यस्य तथाविधः तम् । उपजुष्टेति । उपजुष्टानि सेवितानीति यावत् तीर्थानि पुण्यक्षेत्राणि यस्य तादृशं चित्रकूटमित्यस्य विशेषणम् । सन्निहितेति । सन्निहितः सन्निकृष्टः गृध्रराजः जटायुर्यस्य यस्मिन् वा तत् ।

इति वि, प्र, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता महावीरचरितनाटकस्य चतुर्थाङ्कव्याख्या समाप्ता ।

(क) सम्पातिः गरुड़स्य पुत्रः तथा जटायुषो ज्येष्ठः भ्राता ।

(ख) अभिवादनाय अभिवन्दनाय ममेति शेषः । मलयकन्दरेति । मलयस्य तदाख्यस्य गिरेः कन्दरः गुहा एव कुलायः नीड़ः महासनिलय इति भावः तं गुहा तु कन्दरो वास्त्रीति कुलायो नीड़मस्त्रियामिति चामरः । उपसीदति उपगच्छति ।

पर्य्यायेति । संवर्त्तविस्तारयोः सङ्कोचनप्रसारणयोः पक्षयोरिति भावः पर्य्यायेण क्षणात् दृष्टा नष्टाश्च ककुभः दिशः यासु ताः । नीहारीकृतात् पक्षप्रसारणादिवेगेन घनतापगमात् अवश्यायतां गमितादिति भावः मेघात् मोचिताः त्याजिताः धुताः कम्पिताः व्यक्तं प्रकाशं यथा तथा स्फुरन्त्यः विद्युतः याभिः तथोक्ताः । आरात् दूरतः, आराद्

दूरोद्वेल्लितवाड़वस्य जलधेरुल्लोलभिन्नाम्भसो-
रन्ध्रेष्वापतितेन वेगमरुता पातालमाध्मायते।
यद् वैकुण्ठवराहकण्ठकुहरस्फारोच्चरद्भैरव-
ध्वानोच्चण्डमकाण्डकालरजनीपर्जन्यवद्गर्जति ॥ २ ॥

[ प्रविश्य जटायुः ]

जटा। कावेरीवलयितमेखलस्य साना-
वेकस्मिन् मलयगिरेर्दिवः पतामि।
यत्रार्य्यो निवसति काश्यपः शकुन्तः
शैलेन्द्रोऽपर इव विप्रयुक्तपक्षः ॥ ३ ॥

दूरसमीपयोरित्यमरः। कीर्णाः विक्षिप्ताः खण्डखण्डीकृता गुरवः महान्तः ग्राव्णां प्रस्तराणाम् उच्चयश्रेणयः निवहराजयः याभिः तथाभूताः बृहतोः महतोः पत्त्रयोः पक्षयोः धुतयः प्रकम्पाः सञ्चालनानीति यावत् श्यैनेयस्य श्येनीतनयस्य जटायुषः आगमं प्रख्यापयन्ति सूचयन्ति। शार्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

दूरेति। दूरम् अत्यूर्द्धम् उद्वेल्लितः प्रकटितः वाड़वः वड़वानलः यत्र यस्माद्वा तथाभूतस्य, उल्लोलैः महातरङ्गैः भिन्नानि उच्छलितानि अम्भांसि जलानि यस्य तथोक्तस्य जलधेः समुद्रस्य रन्ध्रेषु विवरेषु आपतितेन प्रविष्टेन वेगमरुता वेगवायुना पातालम् आध्मायते आपूर्य्यते, यत् जटायोः पक्षवेगमारुतपूरितं पातालं वैकुण्ठवराहस्य वराहमूर्त्तिधरस्य विष्णोरित्यर्थः कण्ठकुहरात् कण्ठविवरात् स्फारम् अत्यर्थं यथा तथा उच्चरता भैरवेण भयङ्करेण ध्वानेन उच्चण्डम् अतितीव्रं सत् अकाण्डे सहसा कालरजनी संहाररात्रिः कल्पान्तकाल इति भावः तत्र यः पर्जन्यः मेघः तद्वत् गर्जति ध्वनति। शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

कावेरीति। कावेर्य्या तदाख्यया नद्या वलयिता वेष्टिता मेखला नितम्बः यस्य तस्य मलयगिरेः एकस्मिन् सानौ प्रस्थदेशे एतस्मिन्निति पाठे एतस्मिन् पुरतः परिदृश्यमाने इत्यर्थः। दिवः अन्तरीक्षात् पतामि, यत्र सानौ विप्रयुक्तौ दग्धौ सूर्य्यतापेनेति भावः कृत्तौ च इन्द्रेणेति भावः पक्षौ यस्य तथाभूतः अतएव अपरः शैलेन्द्र इव पर्वतराज इव काश्यपस्य अपत्यं पुमान् काश्यपः कश्यपमुनेः पौत्र इति यावत् शकुन्तः पक्षी आर्य्यः

विस्रंसयन्तौ परिगृह्य पक्षौ
जाता ममाप्युत्पतनश्रमार्त्तिः ।
शक्तिर्हि कालस्य विभोर्जराख्या
शक्त्यन्तराणां प्रतिबन्धहेतुः ॥ ४ ॥

तदयमार्य्या मन्वन्तरपुराणगृध्रराजः सम्पातिः (ग) । अहो ! भ्रातृस्नेहः ।

पुराकल्पे दूरोत्पतनखुरलीकेलिजनितात्
अतिप्रत्यासङ्गात् परितपति गात्राणि तपने ।
अवष्टभ्यासौ मामुपरिततपक्षः शिशुरिति
स्वपक्षाभ्यां प्लोषादविकलमरक्षत् करुणया ॥ ५ ॥

ज्येष्ठः सम्पातिरिति भावः निवसति । पुरा पर्वताः पक्षवन्तः आसन् पश्चात् इन्द्रः कोपात् तेषां पक्षान् चिच्छेद इति पौराणिकी कथा अत्र अनुसन्धेया । प्रहर्षणीवृत्तम् ॥ ३॥

विस्रंसयन्तीति । ममापि पक्षौ परिगृह्य अवलम्ब्य उत्पतनेन यः श्रमः तेन आर्त्तिः क्लान्तिः विस्रंसयन्ती विश्लथयन्ती अङ्गानीति भावः जाता, हि यतः विभोः सर्वशक्तिमतः कालस्य जराख्या जरानाम्नी शक्तिः सामर्थ्यं शक्त्यन्तराणाम् अन्यासां शक्तीनां प्रतिबन्धहेतुः विध्वंसकारणमित्यर्थः । ममापि कालेन जरया उत्पतने क्लेशो जात इति भावः । इन्द्रवज्रावृत्तम् ॥ ४ ॥

(ग) मन्वन्तरपुराणगृध्रराजः मन्वन्तरं स्वायम्भुवादिमनूनाम् एकैकस्याधिकारकालः दिव्यमानेन युगानामेकसप्ततिः मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिरित्यमरः । तत्र तस्मात् पुरातनः प्राक्तनः गृध्रराजः गृध्राख्यपक्षिराजः ॥ ४ ॥

पुरेति । पुरा पूर्वस्मिन् कल्पे ब्राह्मे दिवसे दूरे उत्पतनम् उड्डयनं तस्य खुरली अभ्यासः तस्यां यः केलिः क्रीड़ा अनुरागः तेन जनितात् अतिप्रत्यासङ्गात् अतिसन्निकर्षात् तपने सूर्य्ये गात्राणि परितपति सन्तपति सति असौ सम्पातिः उपरि ममेति शेषः ततौ विस्तारितौ पक्षौ येन तथोक्तः सन् माम् अवष्टभ्य अवलम्ब्य शिशुरिति करुणया कृपया स्वपक्षाभ्यां प्लोषात् सूर्य्यसन्तापदाहादित्यर्थः अविकलं सम्यक् यथा तथा मामरक्षत् । सम्पातिकथा किष्किन्धाकाण्डे अष्टपञ्चाशत् सर्गे यथा । पुरा वृत्रवधे वृत्ते

[ उपसृत्य ]

आर्य्य ! काश्यप ! त्वां जटायुरभिवादयते ।

सम्पा । एह्येहि वत्स !

त्वया पुत्रवती श्येनी गृध्राणां चक्रवर्त्तिना ।
गरुत्मतेव वीरेण विनता नः पितामही ॥ ६ ॥

[ परिष्वज्य ] वत्स जटायो ! अपि कालविप्रकर्षान्मन्दीभूतः पितृमरणशोको रामभद्रस्य ? (घ) ।

जटा । तस्य विद्यातपोवृद्धसंयोगः स्वा च धीरता ।
न्याय्यो रक्षाधिकारश्च दौर्मनस्यं व्यपोहति ॥ ७ ॥

सम्पा । तृप्तैर्विराधमांसानां गृध्रैरावेदितं हि मे ।
चित्रकूटाद् यथा रामः शरभङ्गाश्रमं गतः ॥ ८ ॥

---

सचाहं च जयैषिणौ । आदित्यमुपयातौ खे ज्वलन्तं रश्मिमालिनम् । आहत्याकाशमार्गेण जवेन स्वर्गतौ भृशम् । मध्यं प्राप्ते तु सूर्य्ये तु जटायुरवसीदति । तमहं भ्रातरं दृष्ट्वा सूर्य्यरश्मिभिरर्दितम् । पक्षाभ्यां छादयामास स्नेहात् परमविह्वलम् । निर्दग्धपत्रः पतितो विन्ध्येऽहं वानरर्षभाः ! । शिखरिणीवृत्तम् ॥ ५ ॥

त्वयेति । गृध्राणां चक्रवर्त्तिना अधीश्वरेण त्वया श्येनी मम मातेति भावः वीरेण गरुत्मता गरुडेन मम पित्रेति भावः नः अस्माकं पितामही पितृजननी विनतेव पुत्रवती प्रशस्तपुत्रा जातेति शेषः अत्र प्रशंसाविवक्षया मत्वर्थे वत्प्रत्ययः । अनुष्टुब्-वृत्तम् ॥ ६ ॥

(घ) कालविप्रकर्षात् समयातिरेकादित्यर्थः । मन्दीभूतः ह्रासं प्राप्तः ।

तस्येति । विद्यातपोवृद्धैः मुनिभिरिति भावः संयोगः सङ्गः स्वा आत्मीया धीरता च न्याय्यः न्यायादनपेतः रक्षाधिकारः रक्षणार्थमावेशश्च मुनीनामिति भावः । तस्य रामस्य दौर्मनस्यं शोकजनितं मनसो दौःस्थ्यं व्यपोहति निरस्यति । अनुष्टुब्वृत्तम् ॥ ७ ॥

तृप्तैरिति । विराधो नाम राक्षसः तस्य रामशरनिहतस्येति भावः मांसानि तेषां तृप्त्यर्थधातुयोगे करणे षष्ठी । तृप्तैः गृध्रैः मे मम आवेदितं हि ज्ञापितमेव यथा रामः चित्रकूटात् शरभङ्गस्य मुनेः आश्रमं गतः ॥ ८ ॥

तदा च शरभङ्गेन हव्यवाहे हुता तनुः ।
अथोपसेदिवान् रामः सुतीक्ष्णादीन् मुनीनपि ॥ ९ ॥

जटा । बाढ़म् । अधुनागस्त्यवचनाद्रामः पञ्चवट्यां प्रतिवसति ।

सम्पा । [ चिरात् स्मृत्वा ] आः अस्ति जनस्थाने पञ्चवटी नाम गोदावरीतटोद्देशः । वत्स जटायो ! विषयबाहुल्यं कालविप्रकर्षश्च नः स्मृतिं मुष्णाति (ङ) ।

कल्पस्यादौ मम परिचयस्तावदासीदुदस्थाद्
यावद्विष्णोरुपरि चरणश्चारुगङ्गापताकः ।
पर्य्यन्तेष्वप्यवधिवलयस्तेजसां यावदद्रि-
र्लोकालोकः परिकलयिता सप्तमस्याम्बुराशेः ॥ १० ॥

तदेति । तदा तस्मिन् समये च रामे स्वाश्रमं गते इति भावः शरभङ्गेन तनुः शरीरं हव्यवाहे अग्नौ हुता होमीकृता । अथानन्तरं रामः सुतीक्ष्णादीन् मुनीन् अपि उपसेदिवान् प्राप । अनुष्टुब्वृत्तद्वयम् ॥ ९ ॥

(ङ) बाहुल्यमिति । बाहुल्यं विषयाणां नानात्वमित्यर्थः । कालस्य विप्रकर्षः दूरत्वम् । स्मृतिं स्मरणशक्तिं मुष्णाति हरति ।

कल्पस्येति । कल्पस्य ब्राह्मदिवसस्य आदौ प्रारम्भे, चारुः मनोज्ञा गङ्गैव पताका तद्रूपेण विराजमानेति भावः यस्य तथाभूतः विष्णोर्वामनरूपिण इति भावः चरणः उपरि ऊर्द्ध्वं यावत् उदस्थात् उत्तस्थौ । तदुक्तं हरिवंशे । तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य सक्थिदेशे महात्मनः । परं प्रक्रममाणस्य पादमूले व्यवस्थितौ । विष्णोरमितवीर्य्यस्य वदन्त्येवं द्विजातय इति । पर्य्यन्तेषु प्रान्तेषु सप्तमस्य अम्बुराशेः विशुद्धजलनिधेः परिकलयिता परिच्छेदकः प्रान्तसीमेति ; यावत् तेजसाम् अवधिवलयः मण्डलाकारः अवधिभूत इत्यर्थः, लोक्यते एकस्मिन् पार्श्वे इति लोकः न लोक्यते अपरस्मिन् पार्श्वे इत्यलोकः लोकश्चासावलोकश्चेति ; लोकालोकः एकस्मिन्नेव पार्श्वे सूर्य्यस्य सञ्चारात् आलोकमयः अपरस्मिन् पार्श्वे सूर्य्यस्य गत्यभावात् तथा नेति अन्धकारमय इति भावः । तथाचोक्तं, स्वादूदकस्य परतो दृश्यते लोक-

जटा। तत्रैकदा रघुनन्दनं वृषस्यन्ती (च) शूर्पणखा प्राप्ता।

सम्पा। अहो! निर्मर्य्यादता (छ)।

अनेकयुगजीविन्यास्त्रेता यस्यास्त्रयोदशी।
सा चीरकण्ठं तं वत्सं लज्जयन्ती न लज्जिता?॥ ११॥

जटा। तस्याश्च कर्णनासौष्ठकर्त्तनेन न्यवीविशत्।
दशाननतिरस्कारप्रशस्तिमिव लक्ष्मणः॥ १२॥

सम्पा। तन्निमित्तकस्तर्हि कश्चिदनुबन्धः परैरभियोगः (ज)।

जटा। वाढम्, एकेनैव च रामभद्रेण

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः।
त्रयश्च दूषणखरत्रिमूर्द्धानो मृधे हताः॥ १३॥

संस्थितिः। द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता। लोकालोकस्तथा शैलो योजनायुतविस्तृतः। ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम्। अद्रिः पर्वतः यावत् तावत् मम परिचयः ज्ञानम् आसीत्। पूर्वमहम् अदग्धपक्षः ऊर्द्धमधश्च जगतां सर्वतः सञ्चरणशील आसं तेन ममाविदितं न किञ्चिदप्यस्तीति भावः। शार्दूलविक्रीडितं वृत्तम्॥ १०॥

(च) वृषस्यन्ती कामयमाना, वृषस्यन्ती तु कामुकीत्यमरः। वृषेण अश्वनरि·क्तीति वृषशब्दात् क्यप्रत्ययः।

(छ) निर्मर्य्यादता मर्य्यादाराहित्यम् अयुक्तधार्ष्ट्यमित्यर्थः।

अनेकेति। अनेकानि युगानि जीवतीति तथोक्तायाः यस्याः त्रयोदशी त्रयोदशपूरणी त्रेता द्वितीययुगमित्यर्थः गतेति शेषः, सा शूर्पणखा चीरकण्ठं शिशुमित्यर्थः तं वत्सं रामं लज्जयन्ती कामयमानेति शेषः न लज्जिता न लज्जां प्राप?॥ ११॥

तस्या इति। लक्ष्मणः तस्याः शूर्पणखायाः कर्णनासौष्ठकर्त्तनेन दशाननस्य रावणस्य तिरस्कारः अवमाननं तस्य प्रशस्तिमिव प्रशंसापत्रीमिव तामिति शेषः न्यवीविशत् प्रवेशयामासेत्यर्थः लङ्कामिति कर्म॥ १२॥

(ज) तन्निमित्तकः तद्धेतुकः। अनुबन्धः क्रतः। परैः शत्रुभिः। अभियोगः आक्रमणम्।

सम्पा। आश्चर्य्यम्! अथवा नाश्चर्य्यमेतद्दाशरथौ। महत् पुनरपावृतं (झ) वैरद्वारमिति मन्यमानः सम्प्रमुग्धोऽस्मि। तद्वत्स जटायो! नास्मिन्नवसरे सीतारामलक्ष्मणास्त्वया क्षणमपि मोक्तव्याः।

स्वसुः सोदर्य्यायाः कथमिव निकारं दशमुखः
तथा भूयोभूयः स्वजनविनिपातं च सहते?।
मदान्धो मायावी प्रभुरमितवीर्य्योऽन्तिकचरः
सपत्नः कष्टं नो निपुणमनुपाल्या हि शिशवः॥ १४॥

अहमपि समुद्रे कृताह्निकः शिवतातिपरिणतिमनुध्यास्यामि (ञ)।

[ इति निष्क्रान्तः ]

जटा। [ उत्पत्य, गगनगमनमभिनीय ]

एषोऽहं प्रलयमरुत्प्रचण्डरंहः-
संक्षिप्तप्रथिम पिबन्निवान्तरीक्षम्।

---

चतुर्दशेति। मधे युद्धे चतुर्दश सहस्राणि चतुर्दश च राक्षसाः दूषणखरत्रिमूर्द्धानः वयश्च हताः नाशिताः। अनुष्टुब्वृत्तम्॥ १३॥

(झ) अपावृतम् उद्घाटितम्।

स्वसुरिति। मदान्धः मदेन ऐश्वर्य्यगर्वेण अन्धः निर्विवेक इति यावत् मायावी माया कूटविद्या विद्यते अस्येति तथोक्तः प्रभुः शक्तिमान् अमितवीर्य्यः अपरिच्छेद्यबलः अन्तिकचरः सन्निकृष्टः सपत्नः शत्रुः दशमुखः रावणः सोदर्य्यायाः सहोदरायाः स्वसुः भगिन्याः शूर्पणखायाः निकारम् अवमाननं तथा भूयोभूयः पुनः पुनः स्वजनानां राक्षसानामिति भावः विनिपातञ्च कथमिव सहते? नैव सहते इत्यर्थः। नः अस्माकं कष्टं दुःखं हि यतः शिशवः रामादयः निपुणं सविशेषम् अनुपाल्याः रक्षणीयाः। शिखरिणीवृत्तम्॥ १४॥

(ञ) कृताह्निकः कृतदिवसकृत्यः शिवतातिपरिणतिं शिवता मङ्गलता यया रामस्य शुभमेव स्यात् तद्रूपं मङ्गलाचरणमित्यर्थः तस्याः अतिपरिणतिम् अतिमात्रवृद्धिम् अनुध्यास्यामि अनुचिन्तयिष्यामि।

क्षेपीयो मलयगिरेर्निवासभूभृत्-
संसक्तक्षितिरुहजालमभ्युपेतः ॥ १५ ॥

अयमविरलानोकहनिवहनिरन्तरस्निग्धनिर्मलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यदेशगो गिरिः प्रस्रवणो नाम (ट)। इयं च पञ्चवटी (ठ)। [ विभाव्य ] अये—

दूरं हृतश्चित्रमृगेण रामस्तया दिशा गच्छति लक्ष्मणोऽपि।
ततः परिव्राडुटजं प्रविष्टो धिग् व्यक्तरूपो दशकन्धरोऽयम् ॥ १६ ॥

एष इति। एषः अहं प्रलयमरुत इव कल्पान्तवायोरिव प्रचण्डेन रंहसा वेगेन संक्षिप्तः लघूकृतः प्रथिमा पृथुत्वं विस्तार इति यावत् यस्य तथाभूतम् अन्तरीक्षं गगनं पिबन्निव ग्रसन्निव क्षेपीयः अतिक्षिप्रं मलयगिरेः मलयपर्वतात् निवासभूभृति स्वावासपर्वते प्रस्रवणे गिरावित्यर्थः संसक्तं संलग्नं क्षितिरुहाणां वृक्षाणां जालं संहतिम् अभ्युपेतः प्राप्तः। प्रहर्षणीवृत्तम् ॥ १५ ॥

(ट) अयमिति। अविरलेन घनेन अनोकहानां वृक्षाणां निवहेन सङ्घेन निरन्तरः अव्यवधानः स्निग्धः निर्मलः परिसरः आभोगः यस्य तथाभूतं यत् अरण्यं वनं तेन परिणद्धा आवृता या गोदावरी तदाख्या नदी तया मुखराः सशब्दाः कन्दराः गुहाः यस्य तथाभूतः। अभिष्यन्दमानेति। अभिष्यन्दमानैः स्रवद्भिः मेघैः मेदुरितः स्निग्धीकृतः नीलिमा श्यामलत्वं यस्य तथोक्तः। जनस्थानमध्यदेशगः जनस्थानं दण्डकारण्यान्तर्गतसामान्यजनवासस्थानं तस्य मध्यदेशगः मध्यवर्त्ती।

(ठ) पञ्चवटी पञ्चानां वटानां समाहारः पञ्चवटी समाहारद्विगुः। यद्यपि वटशब्दो वृक्षविशेषवाची तथापि विशेषशब्दस्य क्वचित् सामान्यपरत्वदर्शनात् अत्र वटशब्दो वृक्षसामान्यवाचकः। तथाच, अश्वत्थो विल्ववृक्षश्च वटधात्र्यावशोककः। शास्त्रे पञ्चवटी प्रोक्तेति वचनात् वटादिवृक्षपञ्चकस्य यथानिर्दिष्टे एकस्मिन् प्रदेशे स्थितिरेव पञ्चवटीत्युच्यते। अत्र तु पञ्चवटीशब्देन तन्निबन्धनो दण्डकान्तःपाती प्रदेशविशेषोऽभिधीयते।

दूरमिति। चित्रमृगेण रामः दूरं हृतः आकृष्टः। लक्ष्मणोऽपि तया दिशा यया रामो हृत इति भावः गच्छति। ततः लक्ष्मणगमनानन्तरं परिव्राट् सन्न्यासी कश्चिदिति

प्रमादः (ड)।

परःसहस्रैरायुक्तं पिशाचवदनैः खरैः।

रथं वधूटीमारोप्य पापः क्वाप्येष गच्छति ॥ १७ ॥

पौलस्त्य! पौलस्त्य!

धर्त्तारः प्रलयेषु ये भगवतो वेदस्य विश्वेश्वराः

तेषामन्वयसम्भवस्य भवतः स्नातस्य वेदव्रतैः।

जेतुर्वै जलसद्मनोऽपि तपसा दृप्तस्य राज्ञः सतो

निन्द्या दुश्चरिता च नाभिजननी जाता कथं दुर्मतिः?॥ १८ ॥

कथमवज्ञया न शृणोतीव? आः! दुरात्मन्! नैकृतापसद! (ढ) तिष्ठ तिष्ठ—

शेषः उटजं रामनिवासमित्यर्थः प्रविष्टः। अयं परिव्राट् व्यक्तं प्रकटितं रूपं यस्य येन वा दशकन्धरः रावणः प्रथमं भिक्षुरूपेण कुटीरं प्रविष्टः ततश्च स्वं रूपं जग्राहेति भावः। धिक् निन्दामि एनं कपटचारिणमिति भावः। धिङ्निर्भर्त्सननिन्दयोरित्यमरः। उपजातिवृत्तम् ॥ १६ ॥

(ड) प्रमादः अनवधानता रामस्य मम वा। प्रमादोऽनवधानतेत्यमरः।

परइति। एषः पापः दुराचारः परःसहस्रैः सहस्राधिकैः पिशाचवदनैः पिशाचवत् वदनं येषां तैः खरैः गर्दभैः आयुक्तं रथं वधूटीं वधूं नवोढां सीतामित्यर्थः आरोप्य संस्थाप्य क्वापि प्रदेशे गच्छति। अनुष्टुव्वृत्तम् ॥ १७

धर्त्तार इति। प्रलयेषु कल्पान्तेषु ये भगवतो महार्थभूतस्येति भावः वेदस्य धर्त्तारः रचकाः विश्वेश्वराः विश्वेषां जगताम् ईश्वराः स्रष्टारः ब्रह्मादयः इति भावः तेषाम् अन्वयसम्भवस्य ब्रह्मवंशभवस्येति यावत् महावंशप्रसूतस्येति भावः, वेदव्रतैः श्रुत्युक्तनियमैः स्नातस्य ब्रह्मचर्य्यानन्तरं कृतसमावर्त्तनस्नानस्येत्यर्थः जलसद्मनः जलाधिपस्येत्यर्थः वरुणस्येत्यर्थः अपि अन्येषां लोकपालानां किमु वक्तव्यं वरुणस्यैव सर्वलोकपालप्रवरत्वादिति भावः जेतुर्वै जेतुरेव तपसा स्वशिरःकर्त्तनरूपेणेति भावः दृप्तस्य अलोकसामान्यगर्वस्येति भावः सतः साधोः राज्ञः अधीश्वरस्य भवतः तव निन्द्या गर्हणीया दुश्चरिता दुश्चारित्र्यापनीत्यर्थः नाभिजननी अकुलोचिता दुर्मतिः दुष्टा बुद्धिः कथं जाता? नैतदुचितं भवत इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

तुण्डप्रोतशिरःकरोटिशिखराक्रष्टिस्फुरत्प्रस्फुट-
क्लोमप्लीहयकृद्गतोष्णरुधिरस्नायून्त्रजालस्य ते।
अत्युग्रक्रकचप्रचण्डनखरोत्कृत्तक्वणत्कीकसै-
रङ्गैः खण्डितकन्धराधमनिभिः श्येनीसुतस्तृप्यतु ॥ १८ ॥

[ निष्क्रान्तः ]

[ इति विष्कम्भकः ]

[ प्रविश्य ] लक्ष्मणः। हा! आर्य्ये! क्वासि? कष्टं दशा-विपाकमनुभवत्यार्य्यो मारीचात् (ण)।

एष मूर्त्त इव क्रोधः शोकाग्निरिव जङ्गमः।
कृच्छ्राद् बिभर्त्ति हृल्लेखज्वालासंवेगिनीं तनुम् ॥२०॥

(ढ) नैकृत तापसद! राक्षसाधम!।

तुण्डेति! श्येनीसुतो जटायुः तुण्डेन मुखेन मदीयेनेति भावः प्रोतानां विद्धानां शिरसां करोटयः अस्थीनि तेषां शिखराणि अग्राणि तेषाम् आक्रष्ट्या स्फुरन्ति प्रसरन्ति अतएव प्रस्फुटानि प्रकटानि क्लोम हृदयादधोदक्षिणवर्त्तिजलवाहिशिरामूलविशेषः तदुक्तम्, अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहि शिरामूलं तृष्णास्थानं मतं बुधैरिति। प्लीहा वामकुक्षिपार्श्वस्थमांसखण्डविशेषः यकृत् दक्षिणकुक्षिपार्श्वस्थमांस-खण्डविशेषः तानि गतानि तत्र स्थितानीति यावत् उष्णानि रुधिराणि स्नायवः शिरा-विशेषाः अन्त्रजालानि क्षुद्राकृतिनाड़ीनिचयाः यस्य तथाभूतस्य ते तव अत्युग्रं क्रकच करपत्रं तद्वत् प्रचण्डो यो नखरः मदीय इति भावः तेन उत्कृत्ताः खण्डिताः क्वणन्त ध्वनन्तः कीकसाः अस्थीनि येषां तादृशैः तथा खण्डिताः कन्धराः ग्रीवाः धमन्यः शिराविशेषाः येषां तथाभूतैः अङ्गैः तृप्यतु तृप्तिं गच्छतु। शार्दूलविक्रीड़ितं वृत्तम् ॥ १९ ॥

(ण) दशाविपाकम् अवस्थापरिणामं दुर्दशामित्यर्थः।

एषः आर्य्यः। मूर्त्तः मूर्त्तिमान्। कृच्छ्रादिति कृच्छ्रादतिकष्टेन हृत् हृदयं लिखन्ति विध्यन्तीति हृल्लेखाः या ज्वालाः व्यथाः तासां संवेगः विद्यते अस्यामिति तथोक्तां तनुं शरीरं बिभर्त्ति धत्ते ॥ २० ॥

तथाहि ।

आभुग्नभ्रुकुटीविटङ्कघटनासंसूचितान्तःस्फुर-
द्धैर्य्यस्तम्भितदुर्व्यवस्थविततप्रोच्चण्डकोपानलः ।
उद्धूमावलिरम्भसामिव निधिर्मध्यज्वलद्वाडवो
विद्युद्व्यञ्जितवज्रगर्भजलदच्छायां समालम्बते ॥२१॥

[ततः प्रविशति रामः]

रामः । न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरेऽन्धे तमसीव मज्जति मनः संमीलितं लज्जया ।
शोकस्तातविपत्तिजो दहति मां नास्त्येव यस्मिन् क्रिया
मर्माणीह पुनर्भिनत्ति करुणा सीतां वराकीं प्रति ॥२२॥

लक्ष्म । आर्य्य ! आर्य्य ! न खलु लोकोत्तरकर्माणस्त्वादृशाः प्रमुह्यन्ति कृच्छ्रेषु (त) ।

आभुग्नेति । आभुग्नयोः सङ्कोचितयोः भ्रुवोः या कुटी भङ्गिः विटङ्कः कपोतपालिकेव तस्याः घटनया रचनया संसूचितः सम्यक् प्रकटितः अन्तःस्फुरता विसरता धैर्य्येण स्तम्भितः निरुद्धः दुर्व्यवस्थः विततः विस्तृतः प्रोच्चण्डः दारुणः कोपानलः यस्य तथोक्तः, अतएव उद्गता धूमावलिर्यस्य तथाभूतः मध्ये ज्वलन् वाडवः वडवाग्निः यस्य तथोक्तः, अम्भसां निधिरिव समुद्र इव तथा विद्युता व्यञ्जितं संसूचितं वज्रं गर्भे यस्य तथाभूतस्य जलदस्य मेघस्य छायां कान्तिं सादृश्यमित्यर्थः समालम्बते आश्रयति । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

न्यक्कार इति । हृदि वज्रकील इव मे मम तीव्रः न्यक्कारः धिक्कारः परिस्फुरति । लज्जया संमीलितं सङ्कुचितं मनः घोरे दारुणे अन्धे तमसीव गाढान्धकारे इव मज्जति । तातस्य जटायोः विपत्तिर्मरणं तस्मात् जायते इति तथोक्तः शोकः मां दहति यस्मिन् शोके क्रिया प्रतिविधानं नास्त्येव । इह जटायुशोके पुनः वराकीं तपस्विनीम् अनुकम्प्यामित्यर्थः सीतां प्रति करुणा दुःखजनिका कृपा मर्माणि भिनत्ति विध्यति अत्यन्तपीडयतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

(त) लोकोत्तरकर्माणः अलौकिककर्मक्षमाः । कृच्छ्रेषु विपत्सु ।

रामः । वत्स ! लोकोत्तराण्येव कर्माणि रामस्य ।

येर्गुप्तान्यकुतोभयानि भुवनान्यासन् महाभीषव-
स्ते सूर्य्यान्वयकेतवो नृपतयः पूर्वे तिरस्कारिताः ।
कल्पान्तेष्वपि यः स्थितः स गमितः साधुर्जटायुर्दिवं
पत्नीं हारयता वने यदकृतं लोकैः कृतं तन्मया ॥२३॥

हा ! तात ! काश्यप ! शकुन्तराज ! क्व पुनस्त्वादृशस्य महतस्तीर्थभूतस्य (थ) साधोः सम्भवः ?

लक्ष्म । पश्यामीव तां पश्चिमामवस्थां तातस्य (द) ।

यामोषधिमिवायुष्मन् ! विचिनोषि वने वने ।
सा सीता मम च प्राणा रावणेनोभयं हृतम् ॥२४॥

इत्येतदेवाभिधाय वीरलोकमधिष्ठितस्तातः (न) ।

रामः । वत्स वत्स ! हृदयमर्माविधः खलु अमी कथोद्घाताः (प) ।

यैरिति । यैः गुप्तानि रक्षितानि भुवनानि अकुतोभयानि निःशङ्कानि आसन्, महान्तः अभीषवः रश्मयः प्रताप इति यावत् येषां ते सूर्य्यान्वयकेतवः सूर्य्यवंशध्वजभूताः पूर्वे नृपतयः मान्धातृसगरादयः तिरस्कारिताः न्यक्कारिताः कुलवधूहारणात् मयेति शेषः यः कल्पान्तेषु अपि स्थितः अविनष्ट इति यावत् स साधुर्जटायुः दिवं स्वर्गं गमितः प्रापितः मद्दोषेणैव तस्य निधनं जातमिति भावः । अतः वने पत्नीं हारयता मया लोकैः जनैः यत् अकृतं न कृतम् तत् कृतम् । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

(थ) तीर्थभूतस्य योग्यपात्रभूतस्य ।

(द) पश्यामीति तातस्य जटायोः तां पश्चिमां चरमामवस्थां मृत्युदशां पश्यामीव ।

हे आयुष्मन् ! याम् ओषधिमिव वने वने विचिनोषि अन्विष्यसि चिन्तयसीत्यर्थः । सा सीता मम प्राणाश्च रावणेन उभयं हृतम् ॥ २४ ॥

(न) इत्येतत् अभिधायैव उक्त्वैव तातः जटायुः वीरलोकं स्वर्गम् अधिष्ठितः ममार इत्यर्थः ।

(प) हृदयेति हृदयमर्माणि आविध्यन्तीति तथोक्ताः । कथोद्घाताः कथोपक्रमाः ।

लक्ष्म। अतश्च तस्मिन् दुरात्मनि सर्वप्रकारेण वैरानृण्य-मुपगच्छाव: (फ)।

राम:। अथ किम्? किं हि नामैतत् करिष्यते यदेतावत: परिभवातिप्रसङ्गस्य तुल्यं स्यात्? (ब)।

प्रागेव राक्षसवधाय मति: स्थिता मे
बध्या हि ते बहुभिरेव यतो निमित्तै:।
तन्मात्रके त्विह क्षतेऽपि कुत: शमो मे?
कृत्यं कुलस्य कदनात् परतश्च नान्यत्॥ २५॥

तथापि वत्स!

प्रचण्डपरिपिण्डित: स्तिमितवृत्तिरन्तर्मुख:
पिबन्निव मुहुर्मुहुर्झटिति मन्युरुच्चैर्ज्वलन्।
शिखाभिरिव निश्चरन्ननुपलब्धदाह्यान्तर:
पयोधिमिव वाडवो दहति मामतस्त्रायताम्॥ २६॥

---

(फ) तस्मिन् दुरात्मनि रावणे। वैरानृण्यं वैरेण वैरनिर्यातनेनेति भाव: आनृण्यम् ऋणशून्यताम्। उपगच्छाव: प्राप्नुव:।

(ब) एतावता एतादृशस्य परिभवातिप्रसङ्गस्य स्त्रीहरणरूपन्यक्कारातिशयस्य तुल्यं यत् स्यात् तत् किं हि नाम करिष्यते कर्त्तव्यमित्यर्थ:? न किमपि एतत्तुल्यं प्रतिहिंस-नमस्तीति भाव:।

प्रागेवेति। प्रागेव पूर्वमेव राक्षसानां बधाय मे मम मति: स्थिता, यत: ते राक्षसा: बहुभिरेव निमित्तै: जगदुपप्लवध्वंसरूपैरिति भाव: बध्या हि बधार्हा एव। इह अस्मिन् व्यापारे तन्मात्रके तेषां केवले बधे क्षतेऽपि मे मम कुत: शम:? शान्ति: मनोव्यथा-निवृत्तिरिति भाव: नैव भवेदित्यर्थ: कुलस्य वंशस्य शत्रोरिति शेष: कदनात् ध्वंसनात् परतश्च अन्यत् कृत्यं न अस्तीति शेष: शत्रूणां वंशध्वंस एव कर्त्तव्य इति निष्कर्ष:। वसन्ततिलकं वृत्तम्॥ २५॥

प्रचण्डेति। प्रचण्डश्चासौ परिपिण्डित: परितो घनीभूतश्चेति तथोक्त: स्तिमिता

लक्ष्म। एतानि अतिसंभ्रान्तविविधमृगयूथानि उन्मत्तचण्डश्वापदकुलाक्रान्तविकटगिरिगह्वराणि अरण्यानि दक्षिणां दिशमभिवर्त्तन्ते तदेभिरेव पथिभिर्भवाव: (भ)।

राम:। अदृष्टपूर्वा: खलु अमी जनस्थानविभागा:।

लक्ष्म। ननु तदैव तातमारुणिं गृध्रराजमग्निसात्कृत्य निर्गतयो: पञ्चवट्याश्रमादावयो: कोऽपि कालो वर्त्तते यदा दूरविच्छिन्ना: सम्प्रति जनस्थानसीमान: (म)।
यथा च एतानि अग्रत: प्रतिभयजननानि अरण्यानि तथा नूनमसौ जनस्थानपश्चिम: कुञ्जवान् नाम दनुकबन्धाधिष्ठितो दण्डकारण्यविभाग: (य)।

---

स्थिरा वृत्तिर्वर्त्तनं यस्य तथाभूत: अन्त: अभ्यन्तरे गुप्तं अवभास: यस्य तथाभूत: पिबन्निव ग्रसन्निव शरीरधातूनिति भाव: मुहुर्मुहु: पुन:पुन: झटिति उद्वेल्लन् शिखाभि: ज्वालाभि: निश्वरन् प्रसरन् न उपलब्धं प्राप्तं दाह्यान्तरम् अन्यत् दहनीयं वस्तु येन तथाभूत: मन्यु: शोक: क्रोधो वा वाड़व: वड़वानल: पयोधिमिव समुद्रमिव मां दहति अत: त्रायतां रक्षतु भवानिति शेष:। पृथ्वीवृत्तम्॥ २६॥

(भ) संभ्रान्तेति। संभ्रान्तानि विविधानि मृगाणां यूथानि सङ्घा: येषु तानि। उन्मत्तेति। उन्मत्तै: उद्धतै: प्रचण्डै: उग्रै: श्वापदानां हिंस्रजन्तूनां कुलै: आक्रान्तानि आश्रितानि विकटानि भीषणानि गिरिगह्वराणि येषु तानि। भवाव: प्राप्नुव: गच्छाव इत्यर्थ: भूधातो: प्राप्त्यर्थकत्वाच्चेति भाव:।

(म) आरुणिम्। अरुणस्य अपत्यम् आरुणिस्तम् अरुणस्य गरुड़भ्रातृत्वात् गरुड़पुत्रेणैव तस्य पुत्रत्वस्य शास्त्रीयत्वात्। तथाचोक्तं भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति। गृध्रराजं जटायुषम्। अग्निसात्कृत्य यथाविधि दग्ध्वेत्यर्थ:। कोऽपि काल: कियान् काल इत्यर्थ:। दूरविच्छिन्ना: अतीव विच्छेदं गता: अल्पेनैव कालेन अरण्यप्रदेशा अवस्थान्तरं नीयमाना अन्याद्दशा भवन्तीति भाव:।

(य` प्रतिभयजननानि भयहेतुजननानीत्यर्थ:। कुञ्जवान् कुञ्जा लतादिपिहितोदरस्थानानि विद्यन्ते यस्मिन् तथाभूत:। दनुकबन्धेति दनुर्नाम कबन्ध: अदृष्टशिरा: पुमान् तेन अधिष्ठित: आश्रित:। कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरमित्यमर:।

राम: द्रष्टव्य एव स दुरात्मा कान्तारमण्डूक: (र)।

[ नेपथ्ये ] क: कोऽत्र भो: ! ? परित्रायतां परित्रायताम् अनेन दुरात्मना राक्षसकबन्धेन आक्रम्यमाणाम् अरण्ये स्त्रियम्।

अहं हि श्रमणा नाम सिद्धा शबरतापसी।
मतङ्गाश्रमवास्तव्या रामान्वेषिण्युपागता ॥ २७ ॥

राम:। वत्स लक्ष्मण ! गच्छ गच्छ।

लक्ष्म। एष गतोऽस्मि [ इति निष्क्रान्त: ]

राम:।

प्रिये ! हाहा ! क्वासि प्रकिर मधुरां वाचमथवा
पराभूतैरित्थं विलपनविनोदोऽप्यसुलभ:।
अनिन्द्य: पौलस्त्यो व्रजतु परिवादो मयि पुन-
र्गतो रूढे वैरे बहुगुणमनेन प्रतिकृतम् ॥ २८ ॥

(र) कान्तारमण्डूक: कान्तार: दुर्गमं वनं तस्य, तत्र वा मण्डूक: भेक: अगण्यत्वात्तस्य मण्डूकत्वारोप:।

अहमिति। अहं श्रमणा नाम सिद्धा साधिततपा: शबरतापसी चाण्डालजातीया तपस्विनी मतङ्गस्य मुनेराश्रम: वास्तव्यं वसतिर्यस्या: तथाभूता रामम् अन्विच्छतीति तथोक्ता रामानुसन्धानकारिणी सती उपगता उपस्थिता आगता ॥२७॥

प्रिये इति। प्रिये ! हा हा इति खेदातिशयद्योतनं द्विर्वचनम्। क्व कुत्र असि वर्त्तसे ? मधुरां मनोहारिणीं वाचं प्रकिर वितर प्रदेहि इति यावत् अथवा पराभूतै: जनै: अस्माभिरिति भाव: इत्थम् एवम्प्रकारेणेत्यर्थ: विलपनविनोद: विलापेन आत्मप्रीणनमित्यर्थ: अपि असुलभ: दुर्लभ इत्यर्थ:। अधीरोऽयं विलपति प्राकृतवदिति महाजननिन्दाभयादिति भाव:। पौलस्त्य: रावण: अनिन्द्य: अनपवाद्य: सन् व्रजतु गच्छतु न तेन मे क्षतिरिति भाव:, पुन: किन्तु रूढे प्ररूढे वैरे अनेन पौलस्त्येन मयि बहुगुणं प्रतिकृतं प्रकर्षेण प्रतिहिंसितमिति परिवाद: अपकलङ्क: गत, प्ररूढ इत्यर्थ:। शिखरिणीवृत्तम् ॥ २८ ॥

[ ततः प्रविशति लक्ष्मणः श्रमणा च ]

लक्ष्म। तत् क्रूरदन्तकरपत्रनिकृत्तसत्त्व-
सङ्घातनिःसरदसृक्प्लुतकूर्चगुच्छम्।
वक्त्रं वपुश्च विकृताकृति दीर्घबाहो-
रार्य्येण राक्षसकुतूहलिना न दृष्टम्॥ २८॥

आर्य्ये श्रमणि! अयमार्य्यः—

श्रमणा। जयति जयति देवः।

रामः। अथास्मत्पर्य्यन्वेषणे किं प्रयोजनम्?

श्रम। शृणोषि रावणानुजं विभीषणम्?।

रामः। कस्तं न शृणोति?।

श्रम। स च दैवाद् यदैव खरदूषणप्रभृतयो निहताः तदैव बन्धुभ्यः कस्यापि हेतोः परिक्रम्य सुग्रीवसख्यात् ऋष्यमूके वर्त्तते तस्य अयम् आत्मसमर्पितो लेखः (ल)। [ इति लेखमर्पयति ]

लक्ष्म। [ गृहीत्वा वाचयति ] स्वस्ति रामदेवं प्रणम्य विभीषणो विज्ञापयति—

तदिति। राक्षसेषु कुतूहलं कौतुकं किम्भूतः किमाकारः कीदृशाचारश्च राक्षस इत्येवमौत्सुक्यमित्यर्थः विद्यते अस्येति तथोक्तेन आर्य्येण रामेण तत् प्रसिद्धं क्रूराः दारुणा दन्ता एव करपत्रं क्रकचः तेन निकृत्तानां चर्वितानां सत्वानां प्राणिनां सङ्घातात् निःसरद्भिरसृग्भिः प्लुतः व्याप्तः कूर्चगुच्छः श्मश्रुराजिर्यस्य तथोक्तम्, अतएव विकृताकृति विकटाकारं दीर्घबाहोः योजनबाहोरित्यर्थः कबन्धस्येति शेषः वक्त्रं वदनं वपुश्च शरीरञ्च न दृष्टम्। वसन्ततिलकं वृत्तम्॥ २९॥

(ल) बन्धुभ्यः ज्ञातिभ्यो राक्षसेभ्य इत्यर्थः। परिक्रम्य अपसृत्य। सुग्रीवसख्यात् सुग्रीवेण सख्यं तस्मात्। ऋष्यमूकः पम्पासरोवरसन्निहितः पर्वतविशेषः। वर्त्तते तिष्ठति।

विश्लिष्टभागधेयानां त्रयी नः परमा गतिः।
धर्मः प्रक्रम्यमाणो वा गोप्ता धर्मस्य वा भवान् ॥ ३० ॥

रामः। वत्स! ब्रूहि किं प्रतिसन्दिश्यताम् (ब) एवंवादिनः प्रियसुहृदो लङ्केश्वरस्य तत्रभवतो महाराजविभीषणस्य ?

लक्ष्म। यदा लङ्केश्वरः प्रियसुहृदित्युक्तमार्य्येण तत् किमवशिष्यते सन्देशस्य ?।

रामः। यथाह सौमित्रिः।

श्रम। अनुगृहीताः स्मः।

लक्ष्म। आर्य्ये श्रमणे! कथयं विभीषणसम्पर्कादस्ति काचिदार्य्यायाः प्रवृत्तिः ? (श)।

श्रम। वर्त्तमाने नास्ति। यदा पुनर्दुरात्मना राक्षसापसदेन अपक्रियमाणायाः स्रस्तमनसूयानामाङ्कमुत्तरीयं तत्तैर्गृहीतम् (ष)।

रामः। हा प्रिये! महारण्यवासप्रियसखि! विदेहराजनन्दिनि! [ इति संवरणं नाटयति ]

लक्ष्म। आर्य्ये! कैः कस्य वा हेतोस्तद् गृहीतम् ?

---

विश्लिष्टेति। विश्लिष्टं विपर्य्यस्तं भागधेयं भाग्यं येषां तथाभूतानां प्रतिकूलदैवानामित्यर्थः त्रयी त्रिविधेति यावत् परमा उत्कृष्टा गतिः उपायः आश्रय इत्यर्थः प्रक्रम्यमाणः प्रकर्षेण आचर्य्यमाणः धर्मः, वा धर्मस्य गोप्ता रक्षिता भवान् गतिरिति पूर्वेणान्वयः। एतादृशप्रतिकूलदैवबान्धवत्यागेन अरण्ये तपश्चरणरूपो धर्मः सेवनीयः। अथवा धर्मरक्षिता भवानेव शरणमाश्रयणीय इति भावः ॥३०॥

(ब) प्रतिसन्दिश्यतां प्रतिसन्देशः प्रेष्यताम्।

(श) आर्य्यायाः सीतायाः। प्रवृत्तिर्वार्त्ता। वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः।

(ष) स्रस्तं भ्रष्टं रथादिति शेषः। अनसूयानामाङ्कम् अनसूयाया अत्रिपत्न्या नामचिह्नितं तद्दत्तमिति भावः। तैः तत्र स्थितैः सुग्रीवादिभिरिति भावः।

श्रम। ऋष्यमूके रामगुणपक्षपातात् सुग्रीवविभीषण-हनूमत्प्रभृतिभिः।

रामः। द्रष्टव्या हि निष्कारणप्रियकारिणो भुवनमहनीयमहिमानः (स) ते महात्मानः, तच्च सीतावासश्रुतमभिज्ञानम्। तद् ऋष्यमूकमभिसन्धाय तावद्गच्छावः।

श्रम। इत इतस्तर्हि देवः। [ इति परिक्रामति ]।

लक्ष्म। हनूमानिति महानेष वीरवादः। तत्रभवतो जातमात्रस्य तस्य समुद्भ्रान्तदेवासुराणि अद्भुतोदाहरणानि अनुश्रूयन्ते (ह)। अपिच किल।

यद् वज्रकर्षणे वीर्य्यं यद् वायौ वा समुन्नते।
यद् वालिनि महाबाहौ तच्च वीरे हनूमति॥ ३१॥

श्रम। एवमीदृशो हेमगिरिवास्तव्यस्य तत्रभवतः प्लवङ्ग-

(स) भुवनेति। भुवनेषु महनीयः प्रशंसनीयः महिमा प्रभावः येषां ते।

(ह) वीरवादः वीरतया प्रवाद इत्यर्थः। समुद्भ्रान्तेति। समुद्भ्रान्ताः विस्मिता देवा असुराश्च यैः तानि। जातमात्रो हि हनूमान् पक्वं फलं ज्ञात्वा उद्यन्तं भास्करं ग्रहीतुमुत्पपात ततश्च देवाः सविस्मया देवराजमुपगम्याब्रुवन् हे देवराज! क एष उद्यन्तमादित्यं ग्रसन् जगदुपप्लवाय वर्त्तते तदेतस्मात् रक्ष अस्मानिति देवराजस्तदाकर्ण्य तस्मै वज्रं प्राहिणोत् स च वज्राहतः भग्नहनुः जन्मचेले पर्वते पपात ममार च। अथ तन्माताञ्जना नाम वानरी पुत्रं तथा निहतं दृष्ट्वा वायोर्बलात्कारदोषादेव मम पुत्रो नष्ट इति वायुं प्रति भृशं चुकोप। स च वायुः पुत्रो मे नाशितो देवैरिति ज्ञात्वा जगति निःसञ्चार एवावातिष्ठत। वायोः सञ्चाराभावाच्च सर्वं जगत् विनष्टं भवद् दृष्ट्वा सर्वे देवा वायुमुपागच्छन् तत्पुत्रञ्चाजीवयन् ततश्च भग्नहनुत्वात् हनूमानित्याख्येति रामायणी गाथा। विस्तरस्तु वाल्मीकिरामायणस्य उत्तरकाण्डे ३५ सर्गे द्रष्टव्यः।

यदिति। वज्रकर्षणे वज्रभृति इन्द्रे यत् वीर्य्यं समुन्नते समुद्धते वायौ वा यत् वीर्य्यं, महाबाहौ वालिनि यच्च वीर्य्यमिति शेषः वीरे हनूमति तच्च तदेव वीर्य्यम् अस्तीति शेषः। यद्वायौ वा समुन्नति इति पाठस्तु प्रामादिकः प्रक्रमभङ्गदोषादिति सुधीभिश्चिन्त्यम्॥३१॥

पुङ्गवानीकवृद्धयूथपतेः, केसरिणः क्षेत्रसम्भवः सूनुः आञ्जनेयो हनूमान् नाम। यस्य रेतोधाः (च) पिता भगवान् मातरिश्वा। तत् किं हनूमता एकेन ?

अम्भोधेर्नारिकेलीरसमिव चुलुकैरुच्चुलुम्पन्त्यपो ये
येषामुत्क्षेपगर्वो विलसति गिरिषूदुम्बरप्रायबुद्ध्या।
ब्रह्मस्तम्बं निवासद्रुममिव रभसाद् विप्रकर्त्तुं क्षमा ये
तेषां कोट्योऽप्यसंख्याः सुतममरपतेर्वानराणां नमन्ति ॥३२॥

रामः। आर्य्ये! हन्त! दक्षिणेन (क) सुमहान् अग्निसञ्चयः। तत् किमेतत् ?

श्रम। कुमारेण लक्ष्मणेन तस्य योजनबाहोश्चितेयमभिसृष्टा (ख)।

---

(च) हेमगिरीति। हेमगिरिः सुमेरुः वासत्यं वसतिर्यस्य तथाभूतस्य। प्रवङ्गेति प्रवङ्गपुङ्गवानां वानरमुख्यानाम् अनीकेषु सेनासु वृद्धः प्रवरः प्राचीनो वा यूथपतिः सेनापतिः तस्य। क्षेत्रसम्भवः क्षेत्रं पत्नी अञ्जनेत्यर्थः, क्षेत्रभूता स्मृता नारी वीजभूतः स्मृतः पुमानिति शास्त्रात्। तस्मिन् सम्भवः उत्पत्तिर्यस्य तथोक्तः। रेतोधाः गर्भाधानकर्त्ता वीर्य्यसेक्तेत्यर्थः।

अम्भोधेरिति। ये अम्भोधेः समुद्रस्य अपः जलानि नारिकेलीरसमिव नारिकेलगर्भस्थजलमिव चुलुकैर्गण्डूषैः उच्चुलुम्पन्ति निःशेषं पिवन्तीत्यर्थः। येषां वानराणां गिरिषु पर्वतेषु विषये उत्क्षेपस्य उत्पाटनस्य गर्वः अहङ्कारः उदुम्बरप्रायबुद्ध्या उदुम्बरतुल्यबुद्ध्या विलसति। उदुम्बरः यज्ञाङ्गवृक्षः तत्प्रायः तत्सदृश इत्यर्थः यथा सामान्येन आयासेन उदुम्बरादयो वृक्षा उत्क्षिप्यन्ते तथा पर्वता अपि यैरुत्क्षिप्यन्ते इति भावः। ये रभसात् वेगात्, रभसो वेगहर्षयोरित्यमरः। ब्रह्मस्तम्बं ब्रह्माण्डं निवासद्रुममिव आवासतरुमिव विप्रकर्त्तुं विध्वंसितुं क्षमाः शक्ताः, तेषां वानराणाम् असंख्याः कोट्यः अमरपतेः इन्द्रस्य सुतं वालिनमित्यर्थः नमन्ति तदायत्ता वर्त्तन्ते इत्यर्थः। येषामुत्क्षेपगर्व इत्यादिषु येषामुत्क्षेपहेतुः शिखरिषु लकुचोदुम्बरप्राय एव। इति पाठान्तरम्। स्रग्धरावृत्तम् ॥३२॥

(क) दक्षिणेन दक्षिणस्यां दिशि।

(ख) अभिसृष्टा प्रज्वालिता।

रामः । साधु साधु कृतम् ।

लक्ष्म । आर्य्य ! पश्य पश्य ।

सौहित्यात् पृथवः क्वथन्ति रुधिरोत्सेकाश्चमत्कारिणः
टाङ्कारोत्कटमुत्कटन्ति नलकास्त्वङ्मांसविस्रंसनात् ।
उत्सर्पन्त्यथ मेदसां विकलनादुद्‌बुद्‌बुदा वीचयः
चित्रं चित्रमुदेति कोऽप्ययमितो दिव्यः श्मशानालयात् ॥३३ ॥

[ प्रविश्य ] दिव्यपुरुषः । जयति जयति रामदेवः ।

दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः ।
इन्द्रास्त्रकृतकाबन्ध्यः पूतोऽस्मि भवतां श्रयात् ॥ ३४ ॥

रामः । प्रियं नः प्रियम् ।

सौहित्यादिति । सौहित्यात् सुष्ठु हितम् अग्नौ आहितमिति यावत् तस्य भावः तस्मात् पृथवः घनाः चमत्कारिणः विस्मयावहाः रुधिराणाम् उत्सेकाः उद्रेकाः निचया इत्यर्थः क्वथन्ति परिपाकं व्रजन्ति, नलकाः नलाकृतीनि दीर्घाणि अस्थीनीत्यर्थः त्वचां चर्मणां मांसानाञ्च स्वनिहितानामिति भावः विस्रंसनात् विश्लेषणात् अग्निदाहेनेति भावः टाङ्कारेण टांटामित्याकारेण शब्देनेत्यर्थः उत्कटं प्रचण्डं यथा तथा उत्कटन्ति उद्‌गच्छन्ति । अथानन्तरं मेदसां घृताकारशरीरस्थितपदार्थविशेषाणां विकलनात् उद्‌गता बुद्‌बुदाः स्फोटविशेषाः यासु तथोक्ताः वीचयः तरङ्गाः उत्सर्पन्ति उद्गच्छन्ति । चित्रं चित्रम् आश्चर्य्यमाश्चर्य्यं कोऽपि अयं दिव्यः पुरुष इति शेषः इतः अस्मात् श्मशानालयात् श्मशानरूपगृहात् उदेति उत्तिष्ठति । शार्दूलविक्रीडितं वृत्तम् ॥ ३३ ॥

दनुरिति । श्रियः पुत्रः दनुर्नाम शापात् कस्यचित् महापुरुषस्य धर्षणजनितादिति भावः राक्षसतां गतः प्राप्तः ततश्च इन्द्रास्त्रेण कृतं काबन्ध्यं कबन्धभावः यस्य तथाभूतः पश्चात् भवतां श्रयात् सङ्गात् पूतः शापात् विमुक्त इति यावत् अस्मि । उक्तञ्च रामायणे, श्रियो मां मध्यमं पुत्रं दनुं नाम्ना च दानवम् । इन्द्रकोपादिदं रूपं प्राप्तवन्तमवेहि च । अहं हि तपसोग्रेण पितामहमतोषयम् । दीर्घमायुः स मे प्रादात् ततोऽहं पूर्णमानसः ।—रणे शक्रमधर्षयम् । तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा । सक्थिनी मे शिरश्चैव शरीरे सन्निवेशितमित्यादि ॥ ३४ ॥

दनुः। माल्यवत्प्रयुक्तेन च मया युष्मदासादनाय दूषित-मरण्यमासीत्। अलं वा तत्कालकाश्मल्यस्मरणेन, (ग) सम्प्रति तु युष्मत्प्रभावात् प्रहृष्टसहजज्योतिषः परोक्षमेव वस्तु किञ्चिदत्र प्रतिभाति। तच्च वः प्रतिबोधनाय क्षतमहोपकारेभ्यः कथ्यते (घ)।

प्रार्थ्य माल्यवता वाली युष्मद्घाते नियुज्यते।
तेनापि रावणे मैत्रीमनुरुध्य व्यपेक्ष्यते ॥ ३५ ॥

रामः। एष एव पन्थाश्चारित्रस्थानाम् (ङ)।

न तादृशः सुहृत्कार्य्ये माध्यस्थ्यमवलम्बते।
ममाप्यस्मिन् महावीरे सोत्कण्ठमिव मानसम् ॥ ३६ ॥

(ग) युष्मदासादनाय युष्मद्दर्शनाय। तत्कालेति। तस्मिन् काले कबन्धदेहस्थिति-काले इत्यर्थः तत् काश्मल्यं मलावहकर्मानुष्ठानमित्यर्थः तस्य स्मरणेन अलं न किमपि प्रयोजनमित्यर्थः।

(घ) प्रहृष्टेति। प्रहृष्टं सहजं स्वाभाविकं ज्योतिः तत्त्वावबोध इति यावत् यस्य तादृशस्य ममेति शेषः परोक्षम् अप्रत्यक्षम्। अत्र प्रतिभाति प्रत्यक्षवत् आभासते इत्यर्थः प्रतिबोधनाय विज्ञापनाय। क्षतेति। क्षतः महान् उपकारो यैः तादृशेभ्यः भवद्भ्य इति शेषः।

प्रार्थ्येति। माल्यवता रावणमातामहेन प्रार्थ्य अनुरुध्य वाली युष्माकं घाते वधे वधार्थमित्यर्थः नियुज्यते, तेनापि वालिनापि रावणे मैत्रीं सौहृदम् अनुरुध्य अनुसृत्य व्यपेक्षते विशेषेण प्रतीक्ष्य तिष्ठति युष्मद्घातायेति शेषः ॥ ३५ ॥

(ङ) पन्थाः पद्धतिः रीतिरित्यर्थः। चारित्रेति। चारित्रे तिष्ठन्तीति चारित्रस्थाः सच्चरितानुवर्त्तिन इति यावत् तेषाम्।

नेति। तादृशः चारित्रस्थ इत्यर्थः सुहृत्कार्य्ये माध्यस्थ्यम् औदासीन्यं न अवलम्बते न आश्रयति। ममापि अस्मिन् महावीरे रावणसुहृदि वालिनीति शेषः मानसं सोत्-कण्ठमिव तद्दर्शनार्थमुत्कण्ठितमित्यर्थः ॥ ३६ ॥

इतरे। क्व अन्यत्र रामदेवात् अमूनि अक्षराणि नाम ? (च)।

रामः। भद्रं कृतं सौजन्यम्। अधुना नन्द महाभाग ! स्वेषु लोकेषु (छ)।

दनुः। यथा आज्ञापयति [ इति निष्क्रान्तः ]

लक्ष्म। आर्य्ये ! बालिरावणयोः किंनिबन्धना मैत्री ?

श्रम। कैलासे तुलिते जिते त्रिभुवने दृप्यन्तमभ्युद्यतं
दोर्युद्धाय दशास्यमिन्द्रतनयः प्रक्षिप्य कक्षालये।
सान्ध्यं कर्म समाप्य सप्तसु नदीनाथेष्वथो मुक्तवान्
उन्मुक्ताय नताय याचितवते सख्यञ्च तस्मै ददौ ॥ ३७ ॥

लक्ष्म। दुरात्मन् ! पौलस्त्यकुलपांसन ! एष ते क्षत्रिय परितापिनो (क्ष) वीर्य्यस्य उत्कर्षः ?

रामः। एवमुत्तरोत्तरभावश्चित्रीयते जीवलोकः (ज)।

---

(च) रामदेवात् अन्यत्र अन्यस्मिन् क्व कस्मिन् पुरुषे इत्यर्थः अमूनि अक्षराणि वचनानि नाम सम्भावनायाम् ?। एतादृशवचनं तादृशे वीरे प्रतिस्पर्द्धिनि रामादृते को वक्तुं शक्नोति ? नैव कोऽपीति मया सम्भाव्यते इत्यर्थः।

(छ) भद्रम् उत्तमं सौजन्यं कृतम् आचरितम् एतत्कथनेनेति भावः। नन्द मोदस्व।

कैलासे इति। कैलासे पर्वते इति शेषः तुलिते उद्धृते बाहुभिरिति शेषः त्रिभुवने जिते पराभूते सति रावणेनेति शेषः दृप्यन्तं गर्वपूरितमिति यावत् दोर्युद्धाय बाहुयुद्धाय अभ्युद्यतम् अभ्युत्थितं दशास्यं रावणम् इन्द्रतनयः बाली कक्षः बाहुमूलमेव आलयः गृहं तस्मिन् प्रक्षिप्य सप्तसु नदीनाथेषु समुद्रेषु सान्ध्यं कर्म सन्ध्योपासनविधिं समाप्य अथ सन्ध्यासमापनानन्तरं मुक्तवान् त्यक्तवान् कक्षालयादिति शेषः उन्मुक्ताय नताय प्रणतिं गताय याचितवते तस्मै रावणाय सख्यं मैत्रीं ददौ च। शार्दूलविक्रीड़ितं वृत्तम् ॥३७॥

(क्ष) क्षत्रियपरितापिनः क्षत्रियान् परितपतीति तथोक्तस्य वीर्य्यस्य वानरचूर्णितत्वेति भावः।

(ज) उत्तरोत्तरभावः उत्तरोत्तरं भावः प्रकारः विभवः इति भावः यस्य तथाभूतः। चित्रीयते आश्चर्य्यवत् प्रतिभाति

लक्ष्म। आर्य्ये! पुरत एष ते शुभ्रगिरिः (झ) किंनामधेयः?

श्रम। नायं गिरिर्यशोराशिरिव वीरस्य वालिनः।
एष दुन्दुभिदैत्येन्द्रमहिषस्यास्थिसञ्चयः॥ ३८॥

लक्ष्म। उपरुद्धानि अनेन वर्त्मानि, तत्परिहृत्य गच्छामः (ञ)।

रामः। ननु एहि [इति पदेन क्षिपति]

श्रम। आश्चर्य्यम्।

यत् संक्रन्दननन्दनः कपिवृषा निर्मथ्य दोस्तम्भयोः
व्यापारेण निरास्थदास्थितगिरेर्देवद्विषो दुन्दुभेः।
तत् कङ्कालमकाण्डपाण्डरघनप्रस्पर्द्धि रुन्धत् पुनः
पादाङ्गुष्ठविवर्त्तनादिदमितो निर्विन्ध्यमाविध्यति॥ ३९॥

---

(झ) शुभ्रगिरिः श्वेतपर्वतः।

नेति। अयं गिरिर्न, वीरस्य वालिनः यशोराशिरिव दुन्दुभिर्नाम दैत्येन्द्रो महिषः तस्य अस्थिसञ्चयः कङ्कालराशिरेषः॥ ३८॥

(ञ) उपरुद्धानि निरुद्धानि। वर्त्मानि पन्थानः। परिहृत्य अतिक्रम्य।

यदिति। संक्रन्दनः इन्द्रः, संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन इत्यमरः। तस्य नन्दनः कपिवृषा वानरराजो बाली दोस्तम्भयोः बाहुरूपयोः स्तम्भयोः व्यापारेण आस्थितः आरूढ़ः गिरिः किष्किन्ध्याद्रिर्येन तथाभूतस्य देवद्विषः असुरस्य दुन्दुभेः यत् कङ्कालं शरीरास्थीत्यर्थः निर्मथ्य निष्पिष्य निरास्थत् निचिक्षेप अकाण्डे पाण्डरो यः घनः मेघः तस्य प्रस्पर्द्धि अनुरूपमित्यर्थः रुन्धत् मार्गनिरोधीत्यर्थः तत् कङ्कालं पुनः पादाङ्गुष्ठेन रामस्येति शेषः विवर्त्तनात् व्यापारणात् इतः अस्मात् स्वस्थानादित्यर्थः निर्विन्ध्यं नास्ति विन्ध्यः तदाख्यः पर्वतः यस्मिन् तत इदं हस्तेन निर्दिश्यमानम् आविध्यति आसमन्तात् विन्ध्यपर्वत इव आचरति इति यावत्। पादाङ्गुष्ठविवर्त्तनादयमितो निर्विन्ध्यमाविध्यति। इति पाठे च अयं रामः निर्विन्ध्यं सफलं यथा तथा आविध्यति निरस्यति इति वा अर्थः शार्दूलविक्रीड़ितं वृत्तम्॥ ३९॥

लक्ष्म । प्रशान्तगम्भीरनीलविपुलश्रीः भरण्यगिरिभूमिः प्रसज्यते (ट) ।

श्रम । ऋष्यमूकपम्पापर्य्यन्तभूमयः खलु एताः । तथा च अग्रतो मतङ्गाश्रमपदम् । यत्र शून्योऽपि सन्निहितसोमचषकविशेष-पात्रपरिकरास्तीर्णवर्हिः इध्मवान् आज्यगन्धिः अद्यापि भगवान् वैश्वानरः समिध्यते (ठ) ।

रामः । अचिन्त्यसम्पदयस्तपसां विशेषाः (ड) ।

श्रम । देव ! पश्य पश्य ।

इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ ४० ॥

(ट) प्रशान्तेति । प्रशान्ता सौम्या गम्भीरा दुरवगाहा नीला विपुला महती श्रीर्यस्या तथोक्ता । प्रसज्यते सन्ततं दृश्यते इति भावः ।

(ठ) ऋष्यमूकेति । ऋष्यमूकश्च पम्पा नाम सरश्च तयोः पर्य्यन्तभूमयः प्रान्तदेशाः । मतङ्गाश्रमपदं मतङ्गस्य मुनेराश्रमस्थानम् । यत्र आश्रमपदे शून्योऽपि ऋषिणा विरहितोऽपि । सन्निहितेति । सन्निहितैः स्थितैः सोमचषकविशेषपात्रपरिकरैः सोमरसपानपात्रैर्विशेषपात्रसमूहैश्च आस्तीर्णः समन्ततः सज्जितः वर्हिः कुशो यस्य सः इध्मवान् काष्ठसमन्वितः आज्यगन्धिः हविर्गन्धिः वैश्वानरः अग्निः । समिध्यते स्वयमेव प्रज्वलति ।

(ड) अचिन्त्यसम्पदयः अचिन्तनीयप्रभावाः ।

इहेति । इह अस्मिन् प्रदेशे समदैः समुल्लसद्भिः शकुन्तैः पक्षिभिः आक्रान्तेभ्यः अध्यासितेभ्यः वानीरेभ्यः वेतसतरुभ्यः मुक्तैः त्यक्तैः पक्षिणामाक्रमणात् पतितैरिति भावः प्रसवैः तत्पुष्पैरित्यर्थः सुरभीणि सुगन्धानि शीतानि शीतलानि स्वच्छानि निर्मलानि तोयानि यासु ताः फलभराणां फलसमूहानां परिणामेन परिपाकेण श्यामा ये जम्बूनिकुञ्जाः जम्बूवनानि तेषु स्खलनेन भङ्गेन यद्वा तेषां तत्फलानामिति भावः स्खलनेन

अपिच। दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः॥ ४१॥

लक्ष्म। तत् किमभित एव प्रवृद्धपौरस्त्यमारुतविहन्य-मानकदम्बानि काननानि सङ्कलितबाष्पपटलया दृशा परिक्षिप्य धनुरवष्टभ्य धीरचरितशरीरेण आर्य्येण सपदि स्थीयते? (ढ)।

राम। वत्स! किं न पश्यसि?
स्थितमुपनतजृम्भागर्भविम्बैः कदम्बैः
कृतमतिकलकण्ठैस्ताण्डवं नीलकण्ठैः।

पतनेन मुखराणि सशब्दानि भूरीणि स्रोतांसि यासां तथाविधाः निर्झरिण्यः सरितः वहन्ति प्रसरन्ति। मालिनीवृत्तम्॥ ४०॥

दधतीति। अत्र अस्मिन् प्रदेशे कुहरभाजां गह्वरवर्त्तिनां भल्लूकयूनां तरुणभल्लूकानाम् अनुरसितेन प्रतिध्वनिना गुरूणि महान्ति अम्बूकृतानि निष्ठीवनशब्दाः स्त्यानं वृद्धिं दधति गच्छन्ति। तथा शिशिरः शीतलः कटुः तीव्रः कषायः सुरभिः सल्लकीनां गजभक्ष्यवृक्षविशेषाणाम् इभैः हस्तिभिः दलितानां खण्डितानां विकीर्णानाम् इतस्ततो विच्छिन्नानां ग्रन्थीनां निष्यन्दगन्धः निर्य्याससौरभं स्त्यायते वर्द्धते प्रसरतीत्यर्थः। मालिनीवृत्तम्॥४१॥

(ढ) प्रवृद्धेति। प्रवृद्धेन वृद्धिं गतेन पौरस्त्येन पूर्वदिग्भवेन मारुतेन वायुना विहन्यमाना ताड्यमानाः कदम्बाः तरुविशेषाः येषु तानि पूर्ववायुसंस्पर्शजनितकुसुमप्रकरकदम्बानीति भावः। सङ्कलितं सम्पतितं बाष्पाणाम् अश्रूणां पटलं समूहः यस्याः तथाभूतया। दृशा दृष्ट्या उद्दीपकत्वादिति भावः। परिक्षिप्य निरीक्ष्य। अवष्टभ्य आश्रित्य गृहीत्वेति यावत्। धीरेति। धीरं चरितं चेष्टितं यस्य तादृशं शरीरं यस्य तथोक्तेन। आर्य्येण रामेण। सपदि सहसा। स्थीयते अवस्थितिः क्रियते।

उपरिविघटमानप्रौढ़तापिञ्छनीलः
श्रयति शिखरमद्रे र्नूतनस्तोयवाहः॥ ४२॥

लक्ष्म। [स्वगतम्] अपि नामायम् आर्य्यः केनचिद्रसान्तरेण विक्षिप्यते? (ण)।

[नेपथ्ये]

मातामह! निवर्त्तस्व (त)।

त्वन्नियोगादयुक्तोऽपि बधः साधोः करिष्यते।
पूज्योऽपि ननु मित्रस्य यो गुरुर्गुरुरेव सः॥ ४३॥

लक्ष्म। आर्य्य! कोऽयम्?

राम। देव! पश्य पश्य।

स्थितमिति। कदम्बैः उपनता उपस्थिता जृम्भा विकाशः गर्भे अभ्यन्तरे येषां तादृशानि विकाशोन्मुखानीति यावत् बिम्बानि कुसुमानि येषां तथाभूतैः स्थितम्। अतिशयेन कलः मधुरास्फुटः कण्ठो येषां तादृशैः नीलकण्ठैः मयूरैः ताण्डवं नृत्यं क्रतम्। नूतनः अतएव उपरि विघटमानं विकसत् प्रौढ़ं प्रकृष्टं यत् तापिञ्छं तमालपुष्पं तद्वत् नीलः तोयवाहः मेघः अद्रेः पर्वतस्य शिखरं शृङ्गं श्रयति अधिरोहति मालिनीवृत्तम्॥ ४२॥

(ण) रसान्तरेण अन्येन विप्रलम्भशृङ्गारभिन्नेन रसेन वीरादिनेति भावः। विक्षिप्यते आक्रम्यते। प्रियाविरहस्य उद्दीपनवस्तुदर्शनात् रामस्य चित्तवैकल्यं भवेत् तस्मात् यदि अधुना भावान्तरमाश्रयति चित्तमस्य तदा श्रेयः। उक्तञ्च, मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे इति।

(त) मातामहेति। मित्रस्य रावणस्य मातामहे स्वस्य मातामहत्वाध्यासः सौहृद्यातिशयद्योतनार्थः।

त्वन्नियोगादिति। तव नियोगात् आदेशात् अयुक्तोऽपि अनुचितोऽपि साधोः रामस्य बधः करिष्यते मयेति शेषः। ननु भोः मित्रस्य यो गुरुः स गुरुरेव अतः पूज्यः अपि पूजनीय एव अपिरेवार्थः। अनुष्टुब्‌वृत्तम्॥ ४३॥

बिभ्राणश्चारु चामीकरकमलमयं दाम दत्तं मघोना
पिङ्गेनाङ्गेन सन्ध्याच्छुरित इव महानम्बुवाहस्तडित्वान् ।
उत्पाताविद्धमूर्त्तिर्दधदुपरि गिरेर्गैरिकाङ्गस्य लक्ष्मीम्
अन्तः सीमन्तरेखामिव वियति जवादिन्द्रसूनुस्तनोति ॥४४॥

लक्ष्म । आर्य्य ! आर्य्य ! दिष्ट्या प्राप्तः सः वीरगोष्ठीदान-प्रियसुहृत् माघवतः (थ) ।

रामः । [ स्वगतम् ] महावीरः सः ।

[ ततः प्रविशति वाली ]

वाली ।

लोकालोकालवालस्खलनपरिलसत्सप्तमाम्भोधिपूरं
विश्लिष्यत्पूर्वकल्पत्रिभुवनमखिलोत्खातपातालमूलम् ।
पर्य्यस्तादित्यचन्द्रस्तवकमवपतद्भूरिताराप्रसूनं
ब्रह्मस्तम्बं लुनीयामिह हि मम विधावस्ति तीव्रो विषादः ॥४५॥

---

बिभ्राण इति । मघोना इन्द्रेण दत्तं चारु मनोज्ञं चामीकरकमलमयं काञ्चनपद्मप्रचुरमित्यर्थः दाम माल्यं पिङ्गेन पिङ्गरेण अङ्गेन बिभ्राणः दधानः अतएव सन्ध्यया सन्ध्यारागेण छुरितः व्याप्तः तड़ित्वान् महान् विद्युत्वान् अम्बुवाह इव मेघ इव इन्द्रसूनुर्वाली उपरि उत्पतनेन आविद्धा सङ्कोचिता लघ्वीव प्रतीयमानेति भावः मूर्त्तिर्यस्य तथाभूतस्य गैरिकाङ्गस्य गैरिकाणि रक्तानीति भावः अङ्गानि यस्य तथाभूतस्य गिरेः पर्व्वतस्य लक्ष्मीं श्रियं दधत् आश्रयन् जवात् वेगात् वियति आकाशे अन्तः नभोमध्ये इत्यर्थः सीमन्तरेखामिव केशान्तर्गतवर्त्म रेखामिव तनोति विस्तारयति । स्रग्धरावृत्तम् ॥ ४४ ॥

(थ) प्राप्तः उपस्थितः । वीरगोष्ठीति । वीराणां गोष्ठी सभा संग्राम इत्यर्थः तस्या दाने प्रियः सुहृत् बन्धुः युद्धदानार्थीत्यर्थः माघवतः मघोनः अपत्यं पुमान् माघवतः इन्द्रसूनुरित्यर्थः ।

लोकेति । लोकालोकः सप्तमद्वीपान्तस्थितजलधिपरपारवर्त्ती चक्रवालाचल एव आलवालः वृक्षमूलस्थजलनिरोधी वेष्टनविशेषः तस्य स्खलनेन ब्रह्माण्डस्योत्पाटनवेगात् विपर्य्यासेनेति भावः परिलसन्तः प्रसरन्तः उच्छलन्त इति यावत् निरोधाभावादिति

एवं नामायुक्तमनुरुध्यमानाः पुमांसो महति अयुक्तगह्वरे पात्यन्ते। यदनेन माल्यवता पौलस्त्यमैत्रीदिवसमनुस्माथ्य तत्रभवतो रघुध्वजस्य निधने नियुक्तोऽस्मि। अहो! ग्रहः। प्रातरारभ्य मामनुबध्नन् किष्किन्धायाः प्रस्थाप्य सम्प्रति निवृत्तः (द) कष्टं भोः! कष्टम्।

दौरात्म्यादरिभिर्निजार्जवरुचौ मायाविभिर्वञ्चिते
धर्मात्मन्यतिथौ निजानपि जगत्पूज्ये गृहानागते।
एतस्मिन्नुचितं न नाम विहितं वाचापि नोक्तं प्रियं
धिक् पापेन मया रिपाविव कथं बद्धो बधायोद्यमः? ॥४६॥

भावः सप्तमस्य अम्भोधेः स्वादूदकस्य समुद्रस्य पूराः प्रवाहा यस्मिन् तत्, विश्लिष्यन्ति विश्लेषं गच्छन्ति पूर्वस्य कल्पस्य सृष्टिकालस्य त्रीणि भुवनानि यस्मिन् तत्, अखिलं समग्रम् उत्खातं पातनमेव मूलं यस्मिन् तत्, पर्य्यस्तौ पतितौ आदित्यचन्द्रौ सूर्य्याचन्द्रमसावेव स्तवकौ गुच्छौ यस्मिन् तत्, अवपतन्ति स्खलन्ति भूरीणि बहूनि तारा नक्षत्राण्येव प्रसूनानि पुष्पाणि यस्मिन् तत् यथा तथा ब्रह्मस्तम्बं ब्रह्माण्डं वृक्षमिति भावः लुनीयाम् उच्छिन्द्याम् उत्पाट्य विध्वंसयेयमिति यावत्, शक्यार्थे विधिलिङ्। इह अस्मिन् विधौ व्यापारे ब्रह्माण्डोत्पाटने इति भावः मम तीव्रः दारुणः विषादः हि क्षोभ एव अस्ति विधातृनिषेधेन तदकरणादिति भावः यद्वा इह विधौ रामनिधनव्यापारे इति भावः मम तीव्रः विषादः अस्ति सामान्यकर्मत्वात् निरपराधतया अयुक्तत्वाच्चेति भावः स्रग्धरावृत्तम् ॥ ४५ ॥

(द) अयुक्तमिति। अयुक्तम् अनुचितम् अनुरुध्यमानाः अनुरोधेन कार्य्यमाणाः। अयुक्तगह्वरे अयुक्तकर्मजनिते नरके इति भावः। पौलस्त्येति। पौलस्त्येन रावणेन या मैत्री मित्रभावः तस्या दिवसः तम्। *यस्मिन् दिवसे मैत्री कृता तं दिवसमित्यर्थः अनुस्माथ्य स्मारयित्वा। रघुध्वजस्य रघुवंशध्वजभूतस्य रामस्येति यावत्। ग्रहः निर्बन्धः। अनुबध्नन् अनुसरन् अनुरुन्धन्नित्यर्थः निवृत्तः प्रस्थितः माल्यवानिति शेषः।

दौरात्म्यादिति। मायाविभिः मायानिपुणैः अरिभिः शत्रुभिः दौरात्म्यात् दुरात्मताम् आश्रित्येत्यर्थः, ल्यब्लोपे पञ्चमी वञ्चिते प्रतारिते हृतभार्य्ये इति भावः निजेन स्वीयेन

कथितश्च सम्प्रत्येवमेव चारकैः विभीषणेन सुग्रीवस्यापि अनाख्याय रामान्तिकं श्रमणा प्रेषिता, प्रतिपन्नलङ्काधिपत्यश्च तस्य दाशरथिरस्मिन् मतङ्गाश्रमोपकण्ठे वर्त्तत इति (ध)। भवतु अवतरामि। [ तथा नाटयति ] कः कोऽत्र भोः ?

विजितपरशुरामं सत्यधर्माभिरामं
गुणनिधिमभिरामं द्रष्टुमभ्यागतोऽस्मि।
भवति च फलवत्ता चक्षुषस्तत्र दृष्टे
भवति च रमणीयो दर्पकण्डूनिकाषः ॥ ४७ ॥

रामः। वत्स सौमित्रे ! मामिहस्थमावेदय महाभागाय।

लक्ष्म। [ उपसृत्य ] अयमार्य्यस्तिष्ठति तदुपसर्पतु महाभागः।

आर्जवेन सारल्येन शुचिः पवित्रः तस्मिन् धर्मात्मनि धर्ममये जगतां पूज्ये आराध्ये अतिथौ आगन्तुके एतस्मिन् रामे निजान् गृहान् आगतेऽपि पापेन पापकर्मणा मया उचितम् अनुरूपम् आतिथ्यमिति शेषः न विहितं नाम प्राकाम्ये, प्राकाम्येन आतिथ्यं न कृतमित्यर्थः वाचापि प्रियं न उक्तं रिपाविव शत्राविव कथं वधाय उद्यमः उद्योगः बद्धः ? कृतः धिक् मामिति शेषः। एतादृशकार्य्यकारिणं मां निन्दामीत्यर्थः, धिङ् निर्भर्त्सननिन्दयोरित्यमरः। शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

(ध) चारकैः गूढपुरुषैः। सुग्रीवस्यापि अनाख्याय सुग्रीवमपि अनुक्त्वेत्यर्थः। प्रतिपन्नेति। प्रतिपन्नम् अङ्गीकृतं लङ्काया आधिपत्यं येन तथाभूतः।

विजितेति। विजितः परशुरामो येन तं, सत्ये धर्मे अभिरमते इति तथोक्तं, गुणनिधिं गुणानां धैर्य्यगाम्भीर्य्यादीनां निधिराश्रयः तम्, अभिरामं सुन्दरं राममिति शेषः, द्रष्टुम् अभ्यागतः प्राप्तः अस्मि। तत्र तस्मिन् रामे दृष्टे सति चक्षुषः फलवत्ता सार्थकता भवति च, रमणीयः मनोऽभिमतः दर्पकण्डूः निकाषः निरसनं भवति च। मालिनीवृत्तम् ॥ ४७ ॥

बाली। अपि त्वं पुनरसौ लक्ष्मणः ?

लक्ष्म। अथ किम् ?

[उभौ उपसर्पतः]

बाली। [स्वगतम्]

स एष रामश्चरिताभिरामो धर्मैकवीरः पुरुषप्रकाण्डः।
स्वान्येव पूर्वाणि परैश्चरित्रैर्योऽत्यद्भुतैरप्रतिमोऽतिशेते ॥ ४८ ॥

[प्रकाशम्] राम !

आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु ममापि सम्प्रति कुतस्त्वद्दर्शने चक्षुषः ?।
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत् किं वृथा व्याहृतैः ?
अस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम् ॥ ४९ ॥

रामः। दिष्ट्या यदद्य दृष्टस्त्वं सत्यमेतच्च युज्यते।
किं त्वशस्त्रेषु युष्मासु कथं रामोऽस्तु सायुधः ? ॥५०॥

स इति। चरितैः कार्य्यैः अभिरमते इति तथोक्तः, धर्मैकवीरः एकमात्रधर्म्मवीरः पुरुषप्रकाण्डः प्रशस्तः पुमान् स एषः, अप्रतिमः अतुल्यः यः परैः महद्भिः अत्यद्भुतैः अतीव लोकोत्तरैरित्यर्थः चरितैः स्वान्येव पूर्वाणि पूर्वपुरुषाणां चरितानीत्यर्थः अतिशेते अतिशय्य वर्त्तते। उपजातिवृत्तम् ॥ ४८ ॥

आनन्दायेति। आनन्दाय प्रीतये विस्मयाय लोकोत्तरचरितरूपदर्शनजनितचमत्काराय वा पश्चान्तरे दुःखाय एतादृशोऽपि हन्तव्य इति विषादायेत्यर्थः सम्प्रति दृष्टोऽसि, तु पुनः तव दर्शने मम चक्षुषः वैतृष्ण्यमपि तृष्णाभावोऽपि तृप्तिरपि कुतः ? नैव तृप्तिरस्तीत्यर्थः पुनः पुनस्तव दर्शनेच्छा मम वर्त्तते इति भावः। तव सङ्गतिरेव साङ्गत्यं सङ्ग इत्यर्थः तेन यत् सुखं तस्य विषयः पात्रम् न अस्मि अहं तव मैत्रीसुखलोलुपो न इति भावः। तत् तस्मात् हेतोः वृथा निरर्थकैरित्यर्थः जल्पितैः भाषितैः किम् ? न किमपि प्रयोजनमित्यर्थः, अस्मिन् विश्रुतं प्रसिद्धं प्रख्यातमित्यर्थः जामदग्न्यस्य भार्गवस्य दमनं येन तादृशे पाणौ धनुः जृम्भतां राजताम्। धनुर्गृहाणेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४९ ॥

दिष्ट्येति। अद्य त्वं यत् दृष्टः अवलोकितः मयेति शेषः तत् तव दर्शनमित्यर्थः

बाली। [विहस्य] भो महाक्षत्रिय! किमिति अननु-कम्पनीयान् (न) अपि एवम् अस्मान् अनुकम्पसे।

ज्ञाता एव वयं जगत्सु चरितैर्वाग्भिः किमाख्यायते?
संयत्तो भव सत्यमस्ति भवतः सत्यो मनुष्यो भवान्।
शस्त्रैरव्यवधीयमानविजयाः प्रायो वयं तेषु चेद्
आहस्ते सुखमाश्वसन्ति गिरयो यैर्वानराः शस्त्रिणः॥ ५१॥

तदितः स्थलीमधितिष्ठावः।

लक्ष्म। आर्य्य! यथाह महाभागः स्वजातिसमयव्यवस्थिता युद्धधर्मा इति (प)।

वालिरामौ। [अन्योन्यमुद्दिश्य]

दिष्ट्या भाग्येन जातमिति शेषः भाग्यशालिन एव भवद्दर्शनं लभन्ते इति भावः। एतच्च मदुक्तं सत्यं युज्यते युक्तियुक्तं भवति किन्तु अशस्त्रेषु अधृतशस्त्रेषु युष्मासु रामः कथं सायुधः सशस्त्रः अस्तु? भवतु। अशस्त्रं शस्त्रपाणिर्नाभियुञ्जीतेति शास्त्रादिति भावः। अनुष्टुब्वृत्तम्॥ ५०॥

(न) अननुकम्पनीयान् दयानर्हान् आततायित्वादिति भावः।

ज्ञाता इति। वयं चरितैः जगत्सु ज्ञाता एव विख्याता एव, वाग्भिः वचनैः किम् आख्यायते कथ्यते? वचनं पुनरुक्तमिति भावः। संयत्तः सन्नद्धः भव भवतः सत्यम् अस्ति, भवान् सत्यः यथार्थप्रियः मनुष्यः, वयं प्रायः शस्त्रैः अव्यवधीयमानः न व्यव-धानयोग्यः विजयः येषां तादृशाः शस्त्राणि अस्माकं विजयं न प्रतिहन्तुं शक्नुवन्तीति भावः। तेषु शस्त्रेषु ते तव आहः निर्बन्धः शस्त्रधारिणस्तते नान्येन योद्धव्ये इत्येवंरूप इति भावः चेत् यदि, तदा गिरयः सुखम् आश्वसन्ति जीवन्ति तिष्ठन्तीति यावत्, यैः गिरिभिः वानराः शस्त्रिणः अस्त्रधारिणः भवन्तीति शेषः पर्वता एव अस्त्राणि अस्माकमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ५१॥

(प) स्वजातीति। स्वस्य जातिः स्वजातिः तस्याः समयः आचारः नियम इति यावत् तस्मिन् व्यवस्थिताः अनुरक्ताः। वानराणां शस्त्रव्यवहारः पर्वतेष्विति पर्वता एवैषां शस्त्राणीति भावः।

कामं त्वया सह श्लाघ्यो वीरगोष्ठीमहोत्सवः।
किं त्विदानीमतिक्रान्ते त्वय्यवीरा वसुन्धरा ॥ ५२ ॥

[ परिक्रम्य निष्क्रान्तौ ]

लक्ष्म। कथमास्फालिते धनुषि कुपितः सांक्रन्दनिः (फ)।
तथाहि।

गर्जत्पर्जन्यघोरस्तनितमविरतं तिग्मगम्भीरमन्तः-
र्गर्जन् गुञ्जाभजृम्भाविवृतमुखविशद्विश्वदिक्चक्रवालः।
संरम्भोत्तम्भतुङ्गस्थितविततताडित्पिङ्गलाङ्गूलकेतुः
व्यस्तं विस्तार्य्य दर्पादपिहितगगनोत्सङ्गमङ्गं धुनोति ॥५३॥

[ नेपथ्ये ]

विभीषण ! विभीषण !

आर्य्यस्य वालिन इव ध्वनिरेष नूनं
तस्यैव नूतनघनस्तनितप्रचण्डः।

---

काममिति। त्वया सह वीरगोष्ठीमहोत्सवः संग्रामानुष्ठानानन्दः श्लाघ्यः प्रशस्यः किन्तु इदानीं त्वयि अतिक्रान्ते वीरलोकं गते इत्यर्थः वसुन्धरा पृथ्वी अवीरा वीररहिता भविष्यतीति शेषः ॥ ५२ ॥

(फ) आस्फालिते मौर्वीसंयोगेन टङ्कारिते इति यावत् साङ्क्रन्दनिः संक्रन्दन इन्द्रः तस्य अपत्यं पुमान् साङ्क्रन्दनिः वालीत्यर्थः।

गर्जदिति। गर्जन् यः पर्जन्यः मेघः तस्येव घोरं तीव्रं स्तनितं यस्मिन् तत् यथा तथा अविरतं सन्ततं तिग्मगम्भीरं तीक्ष्णगभीरं अन्तः मध्ये गर्जन् इङ्कुर्वन्नित्यर्थः गुञ्जाभे गुञ्जाफलनिभे जृम्भया आदानेन विवृते प्रकटिते मुखे विशत् विश्वासां समस्तानां दिशां चक्रवालं मण्डलं यस्य तथोक्तः। संरम्भस्य क्रोधस्य उत्तम्भेन उद्गमेन तुङ्गं उन्नतं यथा तथा स्थितः विततः विस्तृतः तडिदिव विद्युदिव पिङ्गः लाङ्गूल एव केतुर्ध्वजः यस्य तथभूतः दर्पात् अपिहितः आच्छादितः गगनोत्सङ्गः गगनाभोगः येन तथाभूतं अङ्गं व्यस्तं विपरीतं यथा तथा विस्तार्य्य धुनोति कम्पयति गर्जन् इत्यत्र गुञ्जन् इति पाठान्तरम्। स्रग्धरावृत्तम् ॥ ५३ ॥

मौर्व्वीरवस्य कुत एष भयानकः स्यात् ?
व्यापारितं किमु हरेण धनुः पिनाकम् ? ॥ ५४ ॥

लक्ष्म। आर्य्य ! अयं नु कः ?

राम। स एष खलु विभीषणसखः सुग्रीवः सविमर्षसंरम्भं सम्प्रहारमनुसरति। सर्वे च यूथपतयो गिरिगह्वरेभ्यः संपतन्ति (ब)।

लक्ष्म। तेन हि सम्प्रति मयापि आरोपयितव्यं धनुः।

राम। एष बालिकायदुन्दुभिकरङ्कसप्ततालगिरिमहीतलानि अवदार्य्य रामतूणीरमधिशयितः शरः (भ)।

[ नेपथ्ये ]

मद्द्रोहाच्छपथात् प्रसीदतु मतिः पौलस्त्यसुग्रीवयोः
हे वीराः कपयः ! शमोऽस्तु भवतामोशः स एवास्मि चेत्।
रामात् प्राप्तमहार्घ्यवीरमरणस्याशास्ति चैषाद्य मे
योऽहं सूर्य्यसुतः स एव भवतां योऽयं स वत्सोऽङ्गदः ॥ ५५ ॥

आर्य्यस्येति। आर्य्यस्य बालिन इव एष ध्वनिः सिंहनादः। तस्यैव बालिन इव नूतनस्य नवोदितस्य घनस्येव स्तनितं गर्जितं तद्वत् प्रचण्डः उत्कटः एष भयानकः मौर्व्वीरवस्य धनुष्टङ्कारस्य कुतः स्यात् ? किमु किमिति हरेण पिनाकं व्यापारितं आस्फालितं ? नूनं मन्ये। वसन्ततिलकं वृत्तम् ॥ ५४ ॥

(ब) सविमर्षसंरम्भं विमर्षेण तर्केण सह संरम्भः सम्भ्रमः कोपो वा यत्र तत् यथा तथा। सम्प्रहारं युद्धम्। यूथपतयः वानरसेनापतयः।

(भ) बालीति। बालिनः कायः शरीरं दुन्दुभेः महिषाकारदैत्यस्य करङ्कं अस्थिकूटं सप्त तालाः श्रेणीबद्धाः सप्तसंख्यकास्तालतरवः गिरिः पर्वतः महीतलञ्च तानि। अवदार्य्य निर्भिद्य।

मद्द्रोहादिति। पौलस्त्यसुग्रीवयोः विभीषणसुग्रीवयोः मतिः मयि द्रोहः हिंसा रामेण कृत इति भावः तस्मात् मद्वधादित्यर्थः शपथात् यवर्थे पञ्चमी शपथं कृत्वेत्यर्थः

लक्ष्म। तदयमनुचराज्ञानियन्त्रणोन्मुक्तवीरसमयसङ्गलस-दसह्यदुःखनिभृतैर्यूथपतिभिः आर्य्येण च सपक्षपातवाष्पेण वीक्ष्यमाणः स्वद्रोहशपथयन्त्रितसशोकविभीषणेन याच्यमान-शरीरसौष्ठवः प्रयत्ननिरुद्धनिष्ठुरप्रहारमर्मच्छेदवेदनावेगः परिष्वङ्गव्याजविधृतसुग्रीवकण्ठपरिधौकृतस्वकण्ठकनककमलमा-लागुणः शक्रसूनुरस्यामपि दशायां वीरश्रिया प्रदीप्यते (म)।

[ ततः प्रविशतः सुग्रीवविभीषणौ वाली रामश्च ]

---

यदा रामेण वाली हतः तदा वयं के इति विचार्य्य न कदापि रामेण वैरं कर्त्तव्यं यदि क्रियते तदास्माकमीदृक् पातकं भविष्यतीत्येवं दिव्यमाश्रित्येति यावत् यद्वा स्वस्य आत्मनः द्रोहो यस्मिन् तादृशात् शपथात् यदि विरुद्धमाचरसि तदा स्वद्रोहपातकं लप्स्यसे इत्येवं रूपात् शपथात्। प्रसीदतु प्रसन्ना भवतु हे वीराः कपयः! स एव अस्मि अहं भवतां ईशः स्वामी चेत् तदा शमः शान्तिरस्तु रामे विद्वेषो मास्त्विति भावः। रामात् प्राप्तं महार्घं महामूल्यं वीरमरणं वीरोचितमृत्युर्येन तथाभूतस्य मे मम अद्य एषा आशा च अस्ति यत् भवतां अहं यः सूर्य्यसुतः सुग्रीवः स एव अयं सूर्य्यसूतः यः, स एव वत्सः अङ्गदः भवद्भिः सुग्रीवोऽहमिव वत्सश्चाङ्गदः सुग्रीव इव दृश्य इति भावः। शार्दूल-विक्रीड़ितं वृत्तम्॥ ५५॥

(म) तदयमिति। अनुचराणां सैनिकानां आज्ञया बालिनः आदेशेनेति यावत् नियन्त्रणं निरोधनं यस्मिन् तद्यथा तथा उन्मुक्तस्य परित्यक्तस्य वीरसमयस्य वीराचारस्य संग्रामावतरणस्येति यावत् सङ्गेन सम्पर्केण वीराचारत्यागवशेनेति भावः लसन्ति स्फुरन्ति असह्यानि यानि दुःखानि तैः निभृताः निःशब्दं स्थिताः तैः। सपक्षपातवाष्पेण पक्ष-पातः स्नेहः तेन सहितानि तन्निबन्धनानीति यावत् वाष्पाणि यस्य तादृशेन। वीक्ष्यमाणः निरीक्ष्यमाणः। स्वद्रोहेति। स्वस्य आत्मनः द्रोहः वध इत्यर्थः तस्मिन् यः शपथः प्रागुक्तः तेन यन्त्रितः निरुद्धः अतएव सशोकः विभीषणः तेन। याच्यमानेति याच्य-मानं पृच्छ्यमानमिति यावत् शरीरस्य सौष्ठवं सुस्थता स्वास्थ्यमिति यावत् रामशरव्यथा प्रगाढ़ा नवेति भावः यस्य तथोक्तः। प्रयत्नेन निरुद्धः संगोपित इति भावः निष्ठुरेण प्रहारेण रामशरस्येति भावः मर्मच्छेदस्य वेदनावेगः व्यथातिशयः येन तथोक्तः। परि-ष्वङ्गेति। परिष्वङ्गव्याजेन आलिङ्गनमिषेण विधृते सुग्रीवस्य कण्ठे परिधौकृतः वेष्टितः

राम:। अप्राकृताभिजनवीर्य्ययशश्चरित्रान्
पुण्यश्रिय: कुलमहीधरभूरिसारान्।
एवंविधानपि निपात्य कटुर्विपाक:
सर्वङ्कष: कषति हा विषम: कृतान्त:॥ ५६॥

*वाली। वत्स विभीषण! पश्य पश्य सुष्ठु शोभते वत्स-सुग्रीवस्य वक्षसि सहस्रपुष्करमालागुण: (य)।

सुग्रीवविभीषणौ। [अपवार्य्य]
अकाण्डशुष्काशनिपातरौद्र:
क एष धातुर्विषमो विवर्त्त:?।
अस्माभिरार्य्य: शपथैर्निरुद्धै:
कथं विलङ्घ्य: कथमासितव्यम्?॥ ५७॥

---

निबद्ध: इति यावत् स्वकण्ठस्य कनककमलमालागुण: काञ्चनपद्ममालारज्जुर्येन तथाभूत: आलिङ्गनव्याजेन सुग्रीवकण्ठे स्वकण्ठादुन्मुच्य काञ्चनकमलमालां समर्पयन्निति यावत्। अस्यामपि दशायां रणभूमिपातावस्थायामित्यर्थ:।

अप्राकृतेति। सर्वं जनं कषति निष्पीड़यतीति सर्वङ्कष: अतएव कटु: तीव्र: विपाक: परिणाम: अप्राकृतं अलौकिकं असामान्यमित्यर्थ: अभिजन: अन्वय: वीर्य्यं पराक्रम: यश: कीर्त्ति: चरित्रं सुकृतं येषां तान् पुण्यश्रिय: पुण्यलक्ष्मीकान् कुलमहीधरा: कुलपर्वता इव भूरिसारा महासारा: तान् एवंविधान् वालिसदृशान् पुरुषानिति भाव: निपात्य कषति निसूदयति। हा खेदे कृतान्तो दैवं विषम: दारुण:, कृतान्तो यम-दैवयोरित्यमर:। वसन्ततिलकं वृत्तम्॥ ५६॥

(य) सहस्रेति सहस्रं पुष्कराणि पद्मानि तेषां मालागुण: माला एव गुण: रज्जु:।

अकाण्डेति। अकाण्डे सहसा शुष्के वस्तुनि अशनिपात: वज्रपात: यद्वा शुष्क: इन्द्राम्बुवर्जित इति यावत् य: अशनि: वज्रं तस्य पात: तद्वत् रौद्र: दारुण: धातु: स्रष्टु: क एष विवर्त्त:? विपरिणाम:? अस्माभि: शपथै: निरुद्धै: सद्भि: आर्य्य: वाली कथं विलङ्घ्य:? लङ्घयितुं शक्य: नैव आर्य्यवचनं शपथनियन्त्रितैरस्माभि: कदाचित् लङ्घनीय-मित्यर्थ: कथं आसितव्यं तूष्णीं स्थातव्यमित्यर्थ: अकृत्वा वैरशोधनमिति शेष:। उपजाति-वृत्तम्॥ ५७॥

बाली। रामभद्र! रामभद्र!

रामः। आर्य्य! अयमस्मि।

बाली। यदासक्तं दैवादनभिमतसख्येऽपि हि जने
मया सख्यं प्राणैरनृण इव तस्याहमधुना।
यदन्यत् साधूनां तव च गुणराशेः समुचितं
प्रहाणे प्राणानां तदपि हि यथाशक्ति विदधे ॥५८॥

रामः। [सविनयलज्जाशोकस्तिष्ठति]

सुग्रीवविभीषणौ। [जनान्तिकम्] आर्य्ये श्रमणि! कथ-मन्यतकृदादिवास्माकं रामदेवादेष दैवविपाकः? (र)।

श्रम। माल्यवता किलैवमिति। [उभयोः कर्णे कथयति]

बाली। वत्स सुग्रीव!

सुग्री। [वाष्पस्तम्भं नाटयति]।

बाली। ननु सुग्रीव! आः प्रातिकूलिकः संवृत्तः (ल)।

सुग्री। [सकरुणम्] आर्य्य आर्य्य! प्रसीद आज्ञापय।

बाली। वत्स! कथय कस्तवास्मि?

सुग्री। गुरुः स्वामी च।

बाली। त्वं तु मम कः?

सुग्री। शिष्यः प्रेष्यश्च।

---

यदेति। दैवात् दौर्भाग्यादिति यावत् न अभिमतं सख्यं येन यस्य वा तादृशेऽपि जने रावणे इति भावः यत् सख्यं मया आसक्तं स्थापितमित्यर्थः अधुना अहं प्राणैः प्राणान् दत्त्वेति भावः तस्य सख्यस्य अनृण इव ऋणशून्य इव जात इति शेषः। साधूनां गुणराशेश्च तव समुचितं अभिमतमिति भावः यत् अन्यत् सख्यमिति शेषः अहं प्राणानां प्रहाणे परित्यागे तत्समये इत्यर्थः तदपि यथाशक्ति विदधे करोमि। शिखरिणी-वृत्तम् ॥ ५८ ॥

(र) दैवविपाकः वालिनिपातरूप इति भावः।

(ल) प्रातिकूलिकः प्रतिकूलवर्त्ती।

वाली। वत्स ! कथय कः आवयोः अन्योन्यधर्म्मः ?

सुग्री। वशित्वं वो वश्यता च मम (व)।

वाली। [ तं हस्ते गृहीत्वा ] तर्हि दत्तोऽसि रामाय। रामभद्र ! ननु एष गृह्यताम्।

रामसुग्रीवौ। को हि पूज्यस्य गुरोर्वचनं न बहु मन्यते ?

विभी। अहो विस्तरस्थानेऽपि धर्म्मोपपत्तिविशुद्धः संक्षेपः (श)।

वाली। वत्स सुग्रीव ! अथ ब्रह्मपुत्रादाचार्य्यादास्रवतः अधीतधर्म्मपारायणवचनेन कीदृशस्त्वया मैत्रीधर्म्म आगमितः (ष)।

सुग्री। प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम्।
आत्मनीव प्रियाधानमेतन्मैत्री महाव्रतम्॥ ५९॥

वाली। रामभद्र ! तवापि भगवतः सहस्रकिरणान्वयपुरोहिताद् वशिष्ठादेष एव हि सम्प्रदायः (स)।

रामः। आर्य्य ! अथ किम् ?

(व) वशित्वं वशङ्करत्वम्। वश्यता वशंवदता।

(श) विस्तरस्थाने बहुवक्तव्यस्थाने। धर्म्मेति। धर्मस्य उपपत्त्या स्वीकारेण विशुद्धः पूतः संक्षेपः स्वल्पोक्तिः। स्वल्पेन धर्मयुक्तेन वचसा महानर्थः संसाधित इति भावः।

(ष) अथेति। अथ साम्प्रतम्। आचार्य्यात् गुरोः। अधीतेति। अधीतानि धर्मपारायणवचनानि धर्मस्य परमार्थबोधकवाक्यानि येन तादृशेन। मैत्रीधर्मः सख्यधर्मः आगमितः ज्ञातः।

प्राणैरिति। प्राणैरपि हिता हितकरी वृत्तिर्व्यवहारः अद्रोहः अनिष्टानाचरणं व्याजवर्जनं कापट्यत्यागः आत्मनीव स्वस्मिन्निव प्रियाधानं प्रियाचरणं सुहृदीति भावः एतत् महाव्रतं मैत्री सख्यम् उच्यते इति शेषः॥ ५९॥

(स) सहस्रकिरणेति। सहस्रकिरणः सूर्य्यः तस्य अन्वयः वंशः तस्य पुरोहितः तस्मात् सम्प्रदायः शिक्षा।

वाली। तदनेन मैत्रीधर्मेण भवद्भ्याम् अन्योन्यस्य वर्त्तितव्यम्। मदनुरोधात् क्रियताम् उपनिबन्धः अग्निसाक्षिकस्य। समयो नातिवर्त्तते। सन्निहित एवायं मतङ्गयज्ञाग्निः (ङ)।

रामसुग्रीवौ। [ अन्योन्यहस्तग्राहम् ]

पुण्ये मतङ्गयज्ञाग्नौ सख्यं निर्वृत्तमावयोः।
ममेव हृदयं तेऽस्तु तवेव हृदयञ्च मे ॥ ६० ॥

वाली। रामभद्र! अयं च वत्सो विभीषणस्त्वया प्रतिश्रुतलङ्काधिराज्य एव पुरतः श्रमणायाः।

विभी। [ सलज्जाशङ्कम् ] कथं ज्ञातोऽस्मि?

श्रमणालक्ष्मणौ। अहो! चारचक्षुष्मत्ता।

रामः। अथ किम्?

विभी। तर्हि प्रसन्नं देवेन [इति प्रणमति]।

सुग्री। मयापि अविदितः श्रमणावृत्तान्तः फलितस्त्विति तर्कितार्थोऽस्मि (क)।

रामः। हे प्रियसुहृदौ महाराजसुग्रीवविभीषणौ! एष वामिदानीं सौमित्रिः।

लक्ष्म। आर्य्यौ! लक्ष्मणोऽभिवादयते।

---

(ङ) उपनिबन्धः सख्यबन्धनम्। मतङ्गेति। मतङ्गस्य मुनेः यज्ञाग्निः।

पुण्ये इति। पुण्ये पवित्रे मतङ्गस्य यज्ञाग्नौ यज्ञाग्निसमीपे इत्यर्थः आवयोः सख्यं निर्वृत्तं सम्पन्नम्। ते तव हृदयं ममेव, मे मम हृदयञ्च तवेव अस्तु भवतु। अनुष्टुब्वृत्तम् ॥ ६० ॥

(च) चारचक्षुष्मत्ता चाराः गूढपुरुषा एव चक्षूंषि विद्यन्ते येषां ते चारचक्षुष्मन्तः तेषां भावः चारचक्षुष्मत्ता राजानश्चारचक्षुष इति वचनात् चारमुखेनैव सर्वमाकर्णयन्तीति भावः।

(क) फलितः सिद्धः।

उभौ। एह्येहि वत्स ! [इत्यालिङ्गतः]।

राम। अतिगम्भीरः सरसः स्नेहकारः (ख)।

माल्य। वत्स विभीषण ! तवापि अलम् इदानीं स्वार्थ-शालीनतया, एवं परिणाममेवैतद् वस्तु। रावणो हि नास्त्ये-वेति मद्वृत्तान्तेनैव व्याख्यातम् (ग)।

अपत्यस्नेहसाम्येऽपि पिण्डोपजीविनो मातामहस्य विशे-षतो रावणहितोपस्थानं धर्मः। स्वयं कथयति तु मातामहः सम्यक् युक्तम् एव विभीषणस्य प्रेयसा रामचन्द्रेण योग इति। महान्त एव हि तादृशा नाम अगाधसत्त्वाः अविनयपरि-स्पन्दितं जानन्ति। प्रचलन्ति भोः ! मे प्राणाः, तदवसाने प्रपातस्थलम् उपनयन्तु मां भवन्तः (घ)।

नीलप्रभृतयः।

हा वीर ! हा मघवनन्दन ! मन्दराद्रि-
निष्कम्पसार ! जगदप्रतिमल्लवीर ! ।

---

(ख) अतिगम्भीरः अतिदुरवगाहः। सरसः सानुरागः।

(ग) स्वार्थशालीनतया स्वार्थेषु स्वप्रयोजनेषु शालीनतया लज्जया। एवमिति। एतत् वस्तु घटनं रामेण युष्मत्सम्मेलनमिति भावः एवम् इत्थं परिणामः फलं यस्य तथो-क्तम्। त्वत्प्रयोजनानुकूलमिति भावः। मद्वृत्तान्तेन मम निधनेनेति भावः रावणो हि मत्परिभूतः रामस्तु मम जेता तदनेन रावणो हन्तव्य इति प्राञ्जलमिति भावः।

(घ) अपत्येति। अपत्ये दौहित्रे विभीषणे स्नेहः तस्य साम्यं तौल्यं तस्मिन्। रावणे यथा माल्यवतः अपत्यस्नेहः विभीषणेऽपि तथैव तथा सत्यपीति भावः। पिण्डोप-जीविनः अन्नोपजीविनः अन्नेन प्रतिपाल्यस्येति यावत्। तादृशाः माल्यवत्सदृशाः महान्तः पुरुषाः इति यावत्। अगाधसत्त्वाः गभीरबुद्धिशालिनः। अविनयपरिस्पन्दितं दुश्चेष्टित-विजृम्भणम् रावणस्येति शेषः। प्रचलन्ति उद्गच्छन्ति। अवसानेति। अवसाने चरमसमये। प्रपातः प्रकर्षेण पतनं तस्य स्थलं श्मशानभूमिमित्यर्थः अथवा प्रपात-स्थलम्। गिरिनदी- प्रपातस्थानम्।

उद्दर्पदुन्दुभिनिशुम्भपटुप्रचण्ड-

दोर्दण्डमण्डल ! गतोऽसि हहा हता स्मः॥ ६१ ॥

[ इति रुदद्भिस्तैर्धार्य्यमाणः परिक्रम्य ]

वाली। भो भो महात्मानः प्लवङ्गपुङ्गवाः !

सुग्रीवाङ्गदयोः प्रभुत्वमिह यत् सौजन्यमेतद्धि वः

मत्प्रीत्यैव तु नावधीर्य्यमनयोर्यद् वो महिम्नः क्षमम्।

प्राप्तः सम्प्रति रामरावणरणः स्नेहस्य निर्व्यञ्जकः

तस्मिन् अञ्जलिरेष शान्तमथवा वीर्य्येषु वः के वयम् ? ॥ ६२ ॥

हेति। हा वीर ! हा मघवनन्दन ! इन्द्रसूनो ! हा मन्दराद्रिवत् निष्कम्पः अविचाल्यः सारो बलं स्थिरांशो वा यस्य तत्सम्बुद्धौ। जगतसु अप्रतिमल्लः प्रतिमल्लः प्रतिवीरः तद्रहितः वीरः अप्रतिमल्लवीरः तत्सम्बुद्धौ। उद्दर्पस्य दर्पोद्धतस्य दुन्दुभेः दैत्यभेदस्य निशुम्भे मर्द्दने पटु समर्थं प्रचण्डं दोर्दण्डमण्डलं बाहुदण्डयुगलं यस्य तथाभूतः तत्सम्बुद्धौ। गतः असि, गतोऽसि हहा इति खेदे हताः स्मः अधुना निराश्रया वयमिति शेषः। वसन्ततिलकं वृत्तम् ॥ ६१ ॥

सुग्रीवेति। इह अस्मिन् जगति सुग्रीवाङ्गदयोः यत् प्रभुत्वं आधिपत्यं एतत् वः युष्माकं सौजन्यं हि, दाक्षिण्यमेव युष्माकं सौजन्यमूलतया सुग्रीवाङ्गदयोराधिपत्यमिति भावः। तु किन्तु मत्प्रीत्यैव मां प्रति स्नेहेनैव वः युष्माकं महिम्नः प्रभावस्य क्षमं योग्यं साध्यमिति यावत् यत् तत् अनयोः सुग्रीवाङ्गदयोः न अवधीर्य्यं न अवज्ञया परिहार्य्यमित्यर्थः यथासाध्यमनयोरानुकूल्यं कर्त्तव्यमिति भावः। सम्प्रति रामरावणयोः रणः संग्रामः प्राप्तः उपस्थितः। तस्मिन् रणे स्नेहस्य निर्व्यञ्जकः निःशेषेण व्यञ्जकः प्रकाशकः एषः अञ्जलिः कृताञ्जलिरहं रामसाहाय्ये यतन्तां भवन्त इति प्रार्थये इति भावः। अथवा शान्तं अवक्तव्यमेतत् वचनं निरस्तं भवत्विति भावः। यतः वः युष्माकं वीर्य्येषु विषयेषु वयं के ? न केऽपीत्यर्थः। भवन्तः स्वस्ववीर्य्यानुरूपमवश्यमेव आचरिष्यन्ति तत्र मद्वचनं निरर्थकमिति भावः। प्राप्तः सम्प्रति इत्यत्र प्राप्ते सम्प्रति रामरावणरणे स्नेहस्य निर्व्यञ्जकै युष्माभ्यञ्जलि रेष इति पाठान्तरम्। शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

किञ्च ।

कर्णावर्जितदिङ्मतङ्गजयुगद्वन्द्वोपमर्दाश्च ते
पुच्छास्फोटदलत्समुद्रविवरैः पातालझम्पाश्च ताः ।
कापेयस्य च पौरुषस्य च तथा प्रेम्णो गरिम्णश्च यद्
दोष्णामुन्मथितद्विषां सुसदृशं तन्मा स्म वो विस्मरत् ॥ ६२ ॥

[ इति निष्क्रान्ताः सर्वे ]

इति महावीरचरिते आरण्यकं नाम पञ्चमोऽङ्कः ।

---

कर्णेति । ते प्रसिद्धाः कर्णैः आवर्जितानाम् आनमितानाम् आनमितकर्णानामित्यर्थः दिङ्मतङ्गजानां दिग्गजानां युगेन यत् द्वन्द्वं द्वाभ्यां द्वाभ्यां दिग्गजाभ्यां सह भवतामेकैकस्य यत् युद्धमिति यावत् तत्र उपमर्दाः सम्प्रहाराश्च, ताश्च पुच्छानां लाङ्गूलानां आस्फोटेन आस्फालनेन दलतो दीर्य्यतः समुद्रस्य विवरैः रन्ध्रैः पातालेषु झम्पाः लम्फनानि, कपीनामिदं कापेयं तस्य वानरसम्बन्धिन इत्यर्थः पौरुषस्य पराक्रमस्य च गरिम्णः अतिप्रवृद्धस्य प्रेम्णः प्रणयस्य च तथा उन्मथिता द्विषः शत्रवः यैः तथाभूतानां दोष्णां भुजानाञ्च यत् सुसदृशं स्वनुरूपं यत्र तत् वः युष्मान् माश्म विस्मरत् न विस्मरतु मात्याक्षीदित्यर्थः रामरावणयुद्धे युष्माभिः स्वानुरूपं विचरितव्यमिति भावः । अत्र रामायणं, क्षोभयेयुश्च सहसा गम्भीरान् सलिलाशयान् । गृह्णीयुरपि मातङ्गान् मत्तान् प्रव्रजितान् वने । इति प्रमाणमनुसन्धेयम् । शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागर-
भट्टाचार्य्येण विरचिता महावीरचरितनाटकस्य
पञ्चमाङ्कव्याख्या समाप्ता ।

---

# अथ षष्ठोऽङ्कः ।

[ ततः प्रविशति विषण्णो माल्यवान् । ]

माल्य । [ सचिन्तम् ] अहह ! रक्षःपतेर्दुर्विनयविटपिकोरकाः परितः प्रकीर्णा इव (क) ।

बीजं यस्य विदेहराजतनयायाच्ञाङ्कुरोऽपि स्वसु-
र्यात्रा तौ परिवञ्चितुं किसलयं मारीचमायाविधिः ।
शाखाजालमयोनिजापहरणं तस्य स्फुटं कोरकाः
कीशाधीशवधोऽनुजस्य गमनं सख्यं तयोस्तेन च ॥ १ ॥

अयमचिरादेव फलोन्मुखोऽपि भवितेति मन्ये । यतो वृद्धबुद्धिरनागतं पश्यति [ निःश्वस्य ] अहो ! वामता भागधेयानाम् (ख) ।

---

(क) रक्षःपतेः राक्षसराजस्य रावणस्य । दुर्विनय एव विटपी तरुः तस्य कोरकाः कलिकाः, कलिका कोरकः पुमानित्यमरः । परितः समन्तात् प्रकीर्णा इव विकारिता इव ।

बीजमिति । यस्य विटपिनः बीजं विदेहराजस्य जनकस्य तनया सीता तस्यां याच्ञा प्रार्थना अभिलाष इति यावत् तौ रामलक्ष्मणौ परिवञ्चितुं विप्रलब्धुं स्वसुः भगिन्याः शूर्पणखायाः यात्रा गमनं अङ्कुरोऽपि प्ररोह एव, अपिरेवार्थः । मारीचस्य मायाविधिः कनकमृगरूपकपटविधानं किसलयं पल्लवः । अयोनिजायाः सीतायाः हरणं शाखाजालं शाखासङ्घः कीशाधीशस्य वानरराजस्य वालिनः वधः अनुजस्य विभीषणस्य गमनम् अस्मत्परित्यागेन विपक्षाश्रयणमिति भावः तयोः रामसुग्रीवयोः तेन विभीषणेन सख्यञ्च एतानि तस्य शाखाजालस्य स्फुटं सुव्यक्तं यथा तथा कोरकाः प्ररोहाः प्रशाखा इति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(ख) अयमिति । अयं विटपी । वृद्धेति । वृद्धानां बुद्धिः प्रज्ञा वृद्धा परिणता बुद्धिर्वा । अनागतं भविष्यं वस्तु । वामता प्रतिकूलता ।

व्यसनेऽस्मिन् मन्त्रशक्त्या यद्यत् प्रतिज्ञातं मया ।
अलसस्य यथा कार्य्यं तत्तत् प्रच्युतमात्मना ॥ २ ॥

[ सानुतापम् ] साचिव्यं नाम महते सन्तापाय (ग) ।

यत् किञ्चिद् दुर्मदाः स्वैरमाद्रियन्ते निरर्गलम् ।
तत्र तत्र प्रतीकारश्चिन्त्यो वक्रे विधावपि ॥ ३ ॥

अहो ! दुरात्मनः क्षत्रियवटोः सर्वातिशायि चरितम् । यत्तथाविधशौर्य्योष्माणं कपिचक्रवर्त्तिनं शरैः संयमयता (घ) किं नाम न विहितम् ? [ स्मरणं नाटयित्वा ] उक्तञ्च किष्किन्धातः प्रतिनिवृत्तेन चारकेण यत् सीतामन्वेष्टुमनुदिशमभिदुद्रुवुः कपिपुङ्गवा इति (ङ) ।

[ नेपथ्ये ]

भ्राम्तोः समाधिकानां प्रविदधदरुणैरर्चिषां चक्रवालैः
द्राक्षीराणामलक्ष्यप्रसृतिरतिसमुत्तसरोक्षालयेषु ।

---

व्यसने इति । अस्मिन् व्यसने विपदि मया मन्त्रस्य शक्त्या प्रभावेण यत् यत् प्रतिज्ञातं प्रतिविधानाय प्रयुक्तमिति यावत् । अलसस्य क्रियामन्दस्य कार्य्यं यथा तत् तत् आत्मना स्वयमेव प्रच्युतं प्रभ्रष्टं बहुधा रामनिधनार्थं जामदग्न्यबाल्यादीनाम् उत्तेजनरूपा नीतयः प्रयुक्ताः ताश्च भाग्यदोषात् वैफल्यं गता इति भावः ॥ २ ॥

(ग) साचिव्यं मन्त्रित्वम् ।

यदिति । दुर्मदाः मदमत्ताः प्रभव इति शेषः स्वैरं स्वेच्छयेत्यर्थः निरर्गलं निर्बाधं यथा तथा यत् किञ्चित् आद्रियन्ते आदरेण समाचरन्तीति यावत्, वक्रे प्रतिकूलेऽपि विधौ दैवे तत्र तत्र कार्य्ये इति शेषः प्रतीकारः प्रतिविधानं चिन्त्यः विभाव्यः मन्त्रिभिरिति शेषः ॥ ३ ॥

(घ) क्षत्रियवटोः क्षत्रियकुमारस्य रामस्येति यावत् । तथाविधेति । तथाविधः शौर्य्यस्य उष्मा तेजः यस्य तादृशम् । संयमता संयमता विध्यतेत्यर्थः ।

(ङ) चारकेण अस्माकं गूढचरेण । अनुदिशं दिशि दिशि ।

भ्रष्टप्लुष्टापसर्पद्रजनिचरभटोद्गाढकल्पान्तशङ्कं
लङ्कां प्रौढो हुताशः खलु परिदलिताब्धिस्त्रिकूटाच्च लीढे ॥४॥

[ प्रविश्य पटाक्षेपेण संभ्रान्ता त्रिजटा ]

त्रिज। परित्ताअदु परित्ताअदु कणिट्ठमादामहो (च)।

[ इति सोरस्ताडं पतति ]

माल्य। वत्से! अलं कातरतया किमिदमुच्चैरत्याहितम्? (छ)।

त्रिज। [ उत्थाय ] कणिट्ठमादामह! किं कहेमि मंदभाइणी। एसो क्खु कोवि दुट्ठवाणरो सअलं विदज्झिअ णअरं खणमेत्तएण पत्थरद्दुमणिक्खेवविक्खित्तविविहरक्खसलोओ अक्खेण क्खु कुमालएण अनुबंधिज्जमाणो तस्सिं कादंतलीलं कादुअ झत्ति णिक्कंतो (ज)।

भ्रान्तीरिति। समभ्यः अधिकाः तासाम् अर्चिषां ज्वालानां शिखानामित्यर्थः, अर्चिर्हेतिः शिखा स्त्रियामित्यमरः। अग्रे: सप्तार्चिष्ट्वेऽपि तदधिकत्वोक्तिस्तस्य प्रचण्डतातिशयद्योतनाय। चक्रैः श्रोत्रैः चक्रवालैः समूहैः भ्रान्तीः भ्रमणानि प्रविदधत् कुर्वन्नित्यर्थः द्राक् झटिति चलितसुपर्णाः ये रौक्मालयाः काञ्चनवेश्मानि तेषु कीराणां पक्षिणाम् अवस्था लङ्घयितुमशक्या प्रहतिः प्रसरणं यत्र तथोक्तः त्रिकूटात् त्रिकूटाख्यपर्वतादारभ्य च परिदलितः परितो विमर्दितः अब्धिः समुद्रः अब्धिपर्यन्तस्थलमिति यावत् येन, तथोक्तः प्रौढः प्रचण्डः हुताशः अग्निः खलु निश्चितम् भ्रष्टं यथा तथा प्लुष्टानां दग्धानाम् अतएव अपसर्पतां पलायमानानां रजनिचरभटानां राक्षसवीराणां उद्गाढा प्रवृद्धा कल्पान्तस्य प्रलयस्य शङ्का यस्मिन् तत् यथा तथा लङ्कां लीढि आस्वादयति दहतीत्यर्थः। स्रग्धरावृत्तम् ॥ ४ ॥

(च) परित्रायतां परित्रायतां कनिष्ठमातामहः सं।

कनिष्ठमातामहः माल्यवान्।

(छ) अत्याहितम् अमङ्गलम्।

(ज) कनिष्ठमातामह! किं कथयामि मन्दभागिनी। एष खलु कोऽपि दुष्टवानरः सकलं विदह्य नगरं क्षणमात्रेण प्रस्तरद्रुमनिक्षेपविक्षिप्तविविधराक्षसलोकोऽक्षेण

माल्य। [ सखेदम् ] किं नाम दग्धं नगरं हतोऽक्षः कुमारः? अपि को नामायं कपिः स्यात्? [ सस्मरणम् ] उक्तञ्च चारकेण हनुमान् अवाचीं (झ) दिशमिति। अहह!

तूलदाहं पुरीं लङ्कां दहतैव हनूमता।
अपि लङ्कापतेस्तीव्रः प्रतापो निरवाप्यत ॥ ५ ॥

वत्से! अपि तेन सीताप्रवृत्तिरुपलब्धा? (ञ)।

त्रिज। कणिट्ठमादामह! पुरदो ज्जेव कोवि मक्कटपरमाणू तीए समं मंतअन्तो दिट्ठो। तीए वि उम्मोचिअ केसाहरणं अहिस्साणं त्ति तस्स हत्थे समप्पिदं एत्तिअं आणामि (ट)।

माल्य। किं न पर्य्याप्तम्? [ साशङ्कम् ] एतेनैव कपिपरमाणुना तावदेवमनुष्ठितम्। एवं परःशताः कोट्यः श्रूयन्ते सम्प्रति सुग्रीवभुजबलपरिपालिते कपिवर्गे (ठ)।

खलु कुमारेण अनुबध्यमानः तस्मिन् कृतान्तलीलां कृत्वा झटिति निष्क्रान्तः इति सं।

प्रस्तरद्रुमाणां निक्षेपेण विक्षिप्ताः विध्वस्ताः विविधाः बहवो राक्षसलोकाः येन तथाभूतः। अनुबध्यमानः अनुगम्यमानः बधार्थमिति भावः। तस्मिन् अक्षे कुमारे , रावणपुत्रभेदे। कृतान्तलीलां यमविचेष्टितं कृत्वा अक्षं निहत्येति भावः।

(झ) अवाचीं दक्षिणाम्।

तूलेति। तूलस्येव दाहः दहनं यत्र तत् यथा तथा लङ्कां पुरीं नगरीं दहता हनूमतैव लङ्कापतेः रावणस्यापि तीव्रः प्रतापः तेजः निरवाप्यत निर्वाणं नीतः। अनुष्टुप्-वृत्तम् ॥ ५ ॥

(ञ) सीताप्रवृत्तिः सीतावृत्तान्तः। उपलब्धा ज्ञाता प्राप्ता वा।

(ट) कनिष्ठमातामह! पुरत एव कोऽपि मर्कटपरमाणुः तया समं मन्त्रयन् दृष्टः तयापि उन्मोच्य केशाभरणम् अभिज्ञानमिति तस्य हस्ते समर्पितम् एतावत् जानामि सं।

(ठ) पर्य्याप्तं सम्पन्नम्। कपिपरमाणुना क्षुद्रेण कपिना। कोट्यः कोटिसंख्याः कपीनामिति शेषः। कपिवर्गे कपीनां वर्गे समूहे।

त्रिज । [सवितर्कम्] कहं तारिसी सुउमारदंसणा वि सुसिणिद्धव्वाहारा वि माणुसी वि सीदा अह्माणं रक्खसाणं वि रक्खसी जादा (ड) ।

माल्य । वत्से ! युज्यतेऽपि (ढ) ।

पतिव्रतामयं ज्योतिः शान्तं दीप्तं च बुध्यते ।

[विमृश्य] अथवा किं नाम सा वराकी ?

दुष्कर्मणां परीपाकः स्वयमेवैष दीप्यते ॥ ६ ॥

त्रिज । कणिट्ठमादामह ! पढमं क्खु दण्डकारण्णपज्जंतपरिट्ठिदविविहमहीहरप्पदेसेसु णिवासो ज्जेव अह्माणं रक्खसाणं । विहारा क्खु णिखिलम्मि जम्बुद्दीवे । संपदं क्खु इह णअरे वि अक्खमो णिवासो का गइ । को पडिआरो ? (ण) ।

माल्य । वत्से ! किमेवमतिकातरासि ? पश्य—

दुर्गोऽयं चित्रकूटस्तदुपरि नगरं सप्तधातुप्रकार-
प्राकारं दुस्तरैषा निरवधिपरिखाप्यब्धिरभ्रङ्कषोर्मिः ।

[विमृश्य] अथवा किमनेन ।

(ड) कथं तादृशी सुकुमारदर्शनापि सुस्निग्धव्याहारापि मानुषी अपि सीता अस्माकं राक्षसानाम् अपि राक्षसी जाता सं ।

(ढ) युज्यतेऽपि युक्तमेवैतदित्यर्थः ।

पतिव्रतेति । पतिव्रता साध्वी तन्मयं ज्योतिः शान्तं सौम्यं दीप्तञ्च कारणादिति भावः बुध्यते कथ्यते । दुष्कर्मणाम् एषः परीपाकः परिणामः फलमिति यावत् स्वयम् एव दीप्यते ज्वलति ॥ ६ ॥

(ण) कनिष्ठमातामह ! प्रथमं खलु दण्डकारण्यपर्य्यन्तपरिस्थितविविधमहीधरप्रदेशेषु निवास अस्माकं राक्षसानाम् । विहाराः खलु निखिले जम्बूद्वीपे । साम्प्रतं खलु इह नगरेऽपि अक्षमो निवासः का गतिः ? कः प्रतीकार ? इति सं ।

दुर्ग इति । अयं चित्राणि मनोज्ञानि कूटानि शृङ्गाणि यस्य तथोक्तः त्रिकूटाख्यपर्वत इति यावत् दुर्गः दुर्गमस्थानं शत्रूणामिति शेषः । अस्य चित्रकूटस्य उपरि सप्त-

दोर्दण्डा एव दृप्यद्रिपुदलनमहासवदीक्षाः प्रतीक्ष्या

रक्षोनाथस्य * * * * * * *

[ वामाक्षिस्पन्दनं सूचयन्, सव्यथम् ]

* * * * किं नो विधिरिह वचनेऽप्यक्षमो दुर्विपाकः ? ॥७॥

वत्से ! वत्सस्य कुम्भकर्णस्य निद्रापगमसीम्नः (त) कियदवशिष्टम् ?

त्रिज। कणिट्ठमादामह ! अस्सिं ज्जेव कसणचउद्दसीदिअहे चउट्ठमासो परिसमत्तो (थ)।

माल्य। कथमद्यापि विप्रकृष्टतमः किल प्रबोधकालः ? (द) [ सस्मरणम् ] विमृष्यमाणे तु दिष्ट्या कनिष्ठवत्स एव दूरदर्शी यस्य अविमृष्यकारितापि शुभोदर्का भविष्यति। सुबहुशोऽपि अभिसन्धीयमाने कुलप्रतिष्ठातन्तुं तमेव उत्पश्यामि (ध)।

धातुप्रकाराः स्वर्णादिसर्वविधखनिजपदार्थमयाः प्राकाराः प्राचीराः यस्य तादृशं नगरं लङ्काख्यमिति यावत् अभङ्गुराः गमनस्पर्शिन्यः ऊर्मयः तरङ्गाः यस्य तथाभूतः अब्धिः समुद्रः एषा निरवधिपरिखा अनन्ता जलरूपा परिवेष्टना दुस्तरा तर्तुमशक्या विधेयप्राधान्यात् स्त्रीत्वम् रक्षोनाथस्य रावणस्य दोर्दण्डाः दण्डरूपाः बाहवः विंशतिसंख्यका इति भावः दृप्यतां रिपूणां शत्रूणां दलनं मर्दनमेव महासवं महायज्ञः तत्र दीक्षा संस्कारविशेषः येषां तथोक्ता एव प्रतीक्ष्याः अस्माकं रक्षणे शक्ता इति सविश्वासं मन्तव्या इति भावः। दुष्टः विपाकः परिणामो यस्य तथाभूतः विधिः दैवम् अस्माकम् इह अस्मिन् वचनेऽपि किम् अक्षमः असहनः ? वचनमपि अस्माकं न सहते इत्यर्थः। स्रग्धरावृत्तम् ॥ ७ ॥

(त) निद्रापगमसीम्नः निद्राभङ्गसमयस्य।

(थ) कनिष्ठमातामह ! अस्मिन्नेव कृष्णचतुर्दशीदिवसे चतुर्थमासः परिसमाप्तः।

(द) विप्रकृष्टतमः अतिदूरवर्ती। प्रबोधकालः जागरणसमयः।

(ध) विमृष्यमाणे विचार्यमाणे। यस्य अविमृष्यकारिता सहसा शत्रोः शरणागतिरिति भावः। शुभोदर्का शोभनोत्तरफला। अभिसन्धीयमाने विचार्यमाणे। कुलप्रतिष्ठातन्तुं वंशस्थितिकारणभूतापत्यमित्यर्थः। उत्पश्यामि सम्भावयामि।

त्रिज। ससम्भ्रमम्] कणिट्ठमादामह! हद्धी! हद्धी! सन्तं पावं पडिहदममङ्गलं (न)।

माल्य। किमिति?

त्रिज। कणिट्ठमादामहस्स अअं णववअणोवसासो अस्सिं ज्जेव कस्सिं अमङ्गले ण प्पउत्तो (प)।

माल्य। वत्से! नैतदनुसन्धायोक्तम्। एवं किलावसीयते (फ)। यतः।

न कुत्राप्यन्यत्र प्रबलभवितव्यादयमहो
विशुद्धैवोत्पत्त्या पतति न च तत्पापधिषणा।
यथा स्वैरं भ्राम्यन्निरवधि वियत्यस्तशिखरं
व्युदस्यायं भास्वांस्तदनुगतघस्राचिरपि सा ॥ ८ ॥

---

(न) कनिष्ठमातामह! हा धिक्! हा धिक्! शान्तं पापं प्रतिहतममङ्गलम् सं।

(प) कनिष्ठमातामहस्य अयं नववचनोपन्यासः अन्यस्मिन्नेव कस्मिन् अमङ्गले न प्रयुक्तः। सं।

नवेति। नवः नूतनः वचनोपन्यासः वाक्यप्रयोगः अन्यस्मिन् एव कस्मिन् अमङ्गले अमङ्गलव्यापारे बहुधा युद्धादिव्यापारघटनायां न प्रयुक्तः कथितः। न कस्मिन्नपि काले ईदृक् वाक्प्रयोगः कृतः तत् कथमधुना एतादृगुपन्यस्तमिति वाक्यार्थः। अथवा ण प्पउत्तो इत्यत्र ज्जेव विस्संतो इति पाठान्तरे च विभीषण एव अस्माकं कुलतन्तुः भविष्यति इति मातामहस्य कथनेन रावणो मरिष्यति इति वाक्यार्थावसानं भवति। इति तात्पर्य्यम्।

(फ) अनुसन्धाय अन्विष्य। अवसीयते फलतः सङ्कुटते इति यावत्।

नेति। स्वैरं स्वेच्छया निरवधि अनवरतं वियति आकाशे भ्राम्यन् अयं भास्वान् सूर्य्यः सा तं सूर्य्यम् अनुगता अनुगामिनी घस्रस्य दिवसस्य अर्चिः प्रभापि अस्तशिखरं व्युदस्य विहाय यथा न पतति अस्तशिखर एव पततीत्यर्थः। तथा अयं रावणः उत्पत्त्या जन्मना विशुद्धैव तस्य पापा पापप्रवर्त्तिनीत्यर्थः धिषणा प्रज्ञा च प्रबलभवितव्यात् बलवत्तरदुर्द्दैवात् अन्यत्र कुत्रापि न च पतति। प्रबलदुर्द्दैवहृष्ट्यैव मयैवमुपन्यस्तमिति भावः। शिखरिणीवृत्तम् ॥८॥

तदत्र प्रतीकारेषु केवलं राज्ञः सुमतिसन्धारणनीतिः अवशिष्यते, कृतमनया। वत्से ! अवैषि किमुपक्रमस्तावद्देवो दशकन्धरः (ब)।

त्रिज। कणिट्ठमादामह ! सामी क्खु संपदं सव्वतोभद्दं णाम अट्टालअं आरुहिअ तोए रक्खसकुलकालरत्तोए अधिट्ठिदं असोअवणिअं ज्जेव पलोअन्तो चिट्ठदि। अस्सं अ इत्थिआमुहपउत्ताए वात्ताए एसा पउत्ती सुदा। "एदं णअरवुत्तन्तं अणुहविअ किं वि दुम्मणाअन्ती सामिणी वि पड़िबोहेदुं तहिं ज्जेव पत्थिदेत्ति" (भ)।

माल्य। वत्से ! स्त्रीत्वेऽपि वरं सा खलु देवी मन्दोदरी, यन्मतिः प्रतिबोधनाय उत्ताम्यति। न पुनर्देवो यः प्रतिबोधितोऽद्यापि न बुध्यते तदेहि तावदभ्यन्तरं प्रविश्य प्रणिधिकार्य्यं विचारयामः (म)।

[ निष्क्रान्तौ ]

[ इति विष्कम्भकः ]

---

(ब) राज्ञ इति। राज्ञः रावणस्य सुमतेः सन्धारणे नीतिः उपायः। सीताप्रत्यर्पणरूपा नीतिरिति यावत्। अवशिष्यते अवशिष्टा अस्ति इति यावत्। अनया सुमतिसन्धारणनीत्या। अवैषि जानासि। किमुपक्रमः किमारम्भः।

(भ) कनिष्ठमातामह ! स्वामी खलु साम्प्रतं सर्व्वतोभद्रं नाम अट्टालकमारुह्य तया राक्षसकुलकालरात्र्या अधिष्ठिताम् अशोकवनिकाम् एव प्रलोकयन् तिष्ठति। अन्यच्च स्त्रीमुखप्रवृत्तया वार्त्तया एषा प्रवृत्तिः श्रुता। "इदं नगरवृत्तान्तम् अनुभूय किमपि दुर्मनायमाना स्वामिनी अपि प्रतिबोधयितुं तत्रैव प्रस्थितेति" सं।

सर्व्वतः सर्व्वासु दिक्षु सर्व्वेषु स्थानेषु च भद्रं शोभनम्। अथवा सर्व्वतोभद्रं चतुर्द्वारसमायुक्तं प्रासादमिति यावत्। राक्षसकुलकालरात्र्या सीतया। स्त्रीमुखप्रवृत्तया स्त्रीमुखपरम्पराश्रुतया। स्वामिनी मन्दोदरी। प्रतिबोधयितुं सदुपदेशं दातुमिति भावः।

(म) यन्मतिः यस्याः मतिः। उत्ताम्यति उद्यच्छति व्यग्रा भवति इति भावः। प्रणिधिकार्य्यं प्रणिधयः गूढ़पुरुषाः तेषां कार्य्यम्।

[ ततः प्रविशति सोत्कण्ठो रावणः ]

रावणः । [ सीतां विभाव्य ]—

मुखं यदि किमिन्दुना ? यदि चलाञ्चले लोचने
किमुत्पलकदम्बकैः ? यदि तरङ्गभङ्गी भ्रुवौ ।
किमात्मभवधन्वना ? यदि सुसंयताः कुन्तलाः
किमम्बुवहडम्बरैः ? यदि तनूरियं किं श्रिया ? ॥ ९ ॥

[ सस्मरणोल्लासम् ] अहो ! हलमुखविनिर्भिन्नविश्वम्भराविर्भूतयोषिद्रत्नम् अनुभवतो मम मनोरथेन चिराय फलितम् । [ विमृश्य ] अनुकूलस्य विधेः किलायं विश्वासः । [ सगर्वम् ] अथवा कएष विधिरपि (य) ।

पिष्ट्वा ब्रह्माण्डमस्मादथ भुवनविभागादुदस्यापि किञ्चिद्
ब्रह्माणं चाधिकृत्याप्रतिमरुचितरं स्वं प्रतापं यशश्च ।

मुखमिति । यदि मुखम् अस्तीति शेषः सीताया इति सर्वत्र योज्यम् । तदा इन्दुना चन्द्रेण किम् ? न किमपि प्रयोजनमित्यर्थः । यदि चलाञ्चले चञ्चलापाङ्गे लोचने स्त इति शेषः तदा उत्पलानां नीलोत्पलानां कदम्बकैः समूहैः किम् ? न किञ्चिदपि प्रयोजनमित्यर्थः । यदि तरङ्गवत् भङ्गिः वक्रता ययोः तथाविधे भ्रुवौ स्त इति शेषः तदा आत्मभवस्य कामस्य धन्वना धनुषा किम् ? न किमपि प्रयोजनमित्यर्थः । यदि सुसंयताः सुष्ठु निबद्धाः कुन्तलाः केशाः सन्तीति शेषः तदा अम्बुवहानां मेघानां डम्बरैः निचयैः किम् ? न किमपि प्रयोजनमित्यर्थः । यदि इयं तनूः अङ्गम् अस्तीति शेषः तदा श्रिया लक्ष्म्या किम् ? न किमपि प्रयोजनमित्यर्थः । अत्र उपमानानां निष्फलत्वप्रतिपादनात् प्रतीपालङ्कारः । तदुक्तं दर्पणे । प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् । निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते । इति पृथ्वीवृत्तम् ॥ ९ ॥

(य) हलेति । हलमुखेन लाङ्गलाग्रेण विनिर्भिन्ना विभेदं गता या विश्वम्भरा पृथ्वी तस्याम् आविर्भूतं योषिदेव रत्नं रमणीरत्नम् अनुभवतः ध्यायतः । फलितं सिद्धम् । विश्वासः प्रत्ययः विश्वास इत्यत्र विलास इति पाठः समीचीनः । विधिरपि दैवमपि कः ? न कोऽपीत्यर्थः, न गण्यते इति भावः ।

सूर्येन्दू संविधाय स्वयमधिकतरं निर्वृतः स्यामहं चेत्
न स्यादालस्यदोषः सकरुणमथवा कोऽनुकम्प्येषु कोपः ? ॥१०॥

[ ततः प्रविशति मन्दोदरी चेटी च ]

चेटी । इदो इदो भट्टिणी एदं अ राजदसोवाणमग्गदुआरअं ता आरोहदु भट्टिणी (र) ।

मन्दो । [ सोपानारोहणं नाटयित्वा, रावणं निरूप्य ] कहं एसो महाराअदसकंधर उवविट्ठो वट्टदि । [ निर्वर्ण्य ] कहं असोअवणिआसंमुहं पलोएदि । [ सखेदम् ] कहं ईरिसे वि रिउवक्खाहिओए संवुत्ते राअकज्जाणवक्खो लक्खीअदि महाराअदसकन्धरो त्ति [ उपसृत्य ] जेदु जेदु महाराअ दस-कंधरो (ल) ।

पिष्टेति । चेत् यदि आलस्यदोषः अलसतयावस्थानमेव दोषः न स्यात् ममेति शेषः, तदाहं ब्रह्माण्डं पिष्ट्वा निष्पिष्य निर्मथ्येति यावत् अथ ब्रह्माण्डनिर्मथनानन्तरम् अस्मात् भुवनविभागात् स्वर्गमर्त्यपातालरूपादिति भावः किञ्चित् अपि किमपि च स्वस्य मनसोऽनभिमतमिति भावः उदस्य निराकृत्य ब्रह्माणञ्च अधिकृत्य अधीनीकृत्य अप्रतिमरुचितरम् अनुपममनोरमं स्वं प्रतापं यशश्च सूर्येन्दू सूर्यम् इन्दुञ्च यथाक्रममिति भावः संविधाय संस्थाप्य स्वयमात्मना अधिकतरं निर्वृतः सुखी स्याम भवेयं भवितुं शक्नुयामिति यावत् । सकरुणम् आहेति अध्याहार्य्यायाः क्रियायाः विशेषणम् अथवा किंवा अनुकम्प्येषु कृपार्हेषु विध्यादिषु कोपः कः ? निष्प्रयोजन इत्यर्थः । यदि विधेर्मम मनोरथसिद्धौ स्वस्यानुकूल्यगर्वः स्यात् भवतु वराकं तं प्रति न मम कोप इति पूर्ववाक्याभिप्रायः । स्रग्धरावृत्तम् ॥ १० ॥

(र) इत इतो भर्त्री । एतच्च राजतसोपानमार्गद्वारं तदारोहतु भर्त्री । सं ।

(ल) कथमेषः महाराजदशकन्धर उपविष्टो वर्त्तते । कथम् अशोकवनिकासम्मुखं प्रलोकयति । कथमीदृशेऽपि रिपुपक्षाभियोगे संवृत्ते राजकार्य्यानपेक्षः लक्ष्यते महाराजदशकन्धर इति । जयति जयति महाराजो दशकन्धरः सं ।

रावणः। [आकारसंवरणं नाटयित्वा] कथं मन्दोदरी ? [इति पार्श्वे समुपवेशयति]

मन्दो। [तथा कृत्वा] महाराअ ! किं एत्थ चिंतिदं ? (ब)

राव। कुत्र ?

मन्दो। रिउवक्खाहिजोए (ग्र)।

राव। [सोत्प्रासम्] कथं रिपुस्तत्पक्षस्तदभियोगश्च ? इति अश्रुतं श्राव्यते देव्या (ग)।

योऽहं द्वाभ्यां भुजाभ्यां मृधभुवि युगपन्मत्तदिग्दन्तिदन्तान्
रुद्ध्वा दोर्भिश्चतुर्भिः सरभसमजितान् दिक्पतीनप्यरौत्सम्।
दीप्यद्वज्रादिचण्डप्रहरणपतनक्षुण्णवक्षस्त्वचो मे
तस्यापि प्रातिभाव्याद्रिपुरिति कलितः कोऽप्यपूर्वः प्रमादः ॥११॥

भवतु तथापि श्रोतव्यम्। देवि ! स कः ? (घ)।

(ब) महाराज ! किमत्र चिन्तितम् ?

(ग्र) रिपुपक्षाभियोगे खं।

(ग) सोत्प्रासम् उत्प्रासः मनाक् स्मितं तेन सह वर्त्तते इति सोत्प्रासम् आहेति क्रियाविशेषणम्। अश्रुतम् अनाकर्णितं कदापीति शेषः।

योऽहमिति। योऽहं मृधभुवि रणभूमौ युगपत् समकालं द्वाभ्यां भुजाभ्यां मत्तानाम् दिग्दन्तिनां दिग्गजानां दन्तान् रुद्ध्वा निवार्य्येत्यर्थः सरभसं सवेगं अजितान् दिक्पतीन् दिक्पालान् इन्द्रादीनपि चतुर्भिर्दोर्भिः भुजैः अरौत्सं अवारयमित्यर्थः विंशतिभुजस्य मे इत्थं षड्भिरेव भुजैर्दिग्गजदिक्पालपराजयः कृतः सर्वैर्भुजैः किमपरं वक्तव्यमिति भावः। तत्र दीप्यतां ज्वलतां वज्रादीनां चण्डानां अतिदारुणानां प्रहरणानां पतनेन क्षुण्णाः दलिताः वक्षसः त्वचश्चर्माणि न तु वक्ष इति भावः यस्य तथाभूतस्य तस्य प्रसिद्धस्य त्रिलोकवीरस्येति भावः मे मम प्रातिभाव्यात् प्रतिद्वन्द्विभावात् रिपुरिति शत्रुरिति कलितः कल्पितः न तु सत्यतया निर्णीत इति भावः कोऽपि अपूर्वः प्रमादः अनवधानतारूप इति यावत्। अनवधानतैव मम शत्रुर्नान्य इति भावः। स्रग्धरावृत्तम् ॥ ११ ॥

(घ) सः रिपुः।

मन्दो। णिखिलवलीमुहचक्काणुगदसुग्गीवाग्गेसरो सहक-णिट्ठो दासरही रामो त्ति सुणीअदि (ङ)।

राव। किं सहानुजस्तापसः। देवि! किं गतेन तेन तैर्वा सः? (च)।

मन्दो। महाराअ! समुदाओ क्खु संकीअदि। अवरं अ साअरवेलासु सेणं विणिवेसिअ आहुदो तेण साअरो ण णिग्गदो भवणादो (क)। तदा तु [संस्कृतमाश्रित्य]

प्रायुङ्क्तास्त्रं स किञ्चिज्जलनिधिकुहरे यन्महिम्ना क्षणार्द्धात्
आवृत्यावृत्य चक्रभ्रममखिलमभूत् क्वाथतः शोणमम्भः।
उन्मूर्च्छन्नक्रचक्रं झटिति परिदलत्कच्छपौघं प्रमुह्यद्-
भूयःपाथोमनुष्यं स्फुटदतुलरवं प्रस्फुटच्छङ्खशुक्ति ॥ १२ ॥

(ङ) निखिलवलीमुखचक्रानुगतसुग्रीवाग्रेसरः सहकनिष्ठो दाशरथी राम इति श्रूयते सं।

निखिलेति। निखिलानां समस्तानां वलीमुखानां वानराणां चक्रैः सेनाभिः अनुगतः परिवृतः सुग्रीवः अग्रेसरो यस्य तथोक्तः। सहकनिष्ठः सलक्ष्मणः।

(च) गतेन लङ्कामिति शेषः तेन तापसेनेत्यर्थः तैर्वा सुग्रीवादिभिरित्यर्थः सः अभियोगः किम्? इति वाक्यार्थः।

(क) महाराज! समुदायः खलु शङ्क्यते। अपरञ्च सागरवेलासु सेनां विनिवेश्य आहूतस्तेन सागरः न निर्गतो भवनात् सं।

खलु यतः समुदायः संहतिः, अतएव शङ्क्यते शङ्कास्पदत्वेन गण्यते इत्यर्थः।

प्रायुङ्क्तेति। स रामः जलनिधिकुहरे सागरकुक्षौ किञ्चित् किमपि अस्त्रं प्रायुङ्क्त प्रयुक्तवान् यस्य अस्त्रस्य महिम्ना प्रभावेण क्षणार्द्धात् अल्पेनैव क्षणेनेत्यर्थः अखिलं अम्भः जलं चक्रभ्रमं चक्रस्येव भ्रमः भ्रमणं यस्मिन् तत् यथा तथा आवृत्य आवृत्य भ्रान्त्वा भ्रान्त्वा क्वाथतः पाकात् उत्तापातिशयादित्यर्थः शोणं रक्तं उन्मूर्च्छन्ति उद्गच्छन्ति तापातिशयासहमत्वादिति सर्वत्र योज्यं नक्राणां जलजन्तुभेदानां चक्राणि सङ्घाः यस्मिन् तत् झटिति सहसा परिदलन्तः विशीर्यन्तः कच्छपानां कमठानां ओघाः समूहाः यस्मिन्

राव। [सावज्ञम्] किं ततः?

मन्दो। महाराअ! तदो अ पुंखमेत्तपेक्खिज्जमाणतिक्खसरणिअरपज्भलिदसरीरेण णिक्कमिअ सलिलादो सपादपडणं अब्भत्थिअ मग्गो उवदिट्ठो साहसिएण समुद्देण, उण साहसिअस्स रामस्स साहाज्जवुत्ती सुणीअदि (ख)।

राव। [सहासम्] अस्तु श्रूयते। देवि! कीदृशः? (ग)।

मन्दो। महाराअ! वलीमुहसहस्साणीदेहिं महीहरेहिं सेदु णिम्मीअदि (घ)।

तथाभूतं प्रमुह्यन्तः प्रकर्षेण मोहं गच्छन्तः भूयांसः बहवः पाथोमनुष्याः जलमानुषा यस्मिन् तथोक्तं स्फुटन् उद्गच्छन् अतुलः महान् रवः यस्मात् तादृशं प्रस्फुटन्तः विदलन्तः शङ्खाः शुक्तयः मुक्तास्फोटाश्च यस्मिन् तथाविधं अभूत्, मुक्तास्फोटः स्त्रियां शुक्तिरित्यमरः। तथाच रामायणम्। ते ज्वलन्तो महाबाणास्तेजसा पावकोपमाः। विविशुः सागरस्याशु सलिलं त्रस्तपन्नगम्। ततो वेगः समुद्रस्य सनक्रमकरो महान्। संबभूव महाघोरः समारुतरवस्तथा। महोर्मिजालचलितः शङ्खजालसमावृतः। सधूमः परिवृत्तोर्मिः सहसासीन्महोदधिः। आघूर्णिततरङ्गौघः सम्भ्रान्तोरगराक्षसः। उद्वर्तितमहाग्राहः सघोषो वरुणालय इति। स्रग्धरावृत्तम्॥ १२॥

(ख) महाराज! ततश्च पुङ्खमात्रप्रेक्ष्यमाणतीक्ष्णशरनिकरप्रज्वलितशरीरेण निष्क्रम्य सलिलात् सपादपतनं अभ्यर्थ्य मार्गं उपदिष्टः साहसिकेन समुद्रेण, पुनः साहसिकस्य रामस्य साहाय्यवृत्ती श्रूयते सः।

पुङ्खमात्रे मूलभागग्रहणमात्रे न तु सन्धाननिक्षेपादिषु अतिद्रुतहस्तत्वाद् वेगातिशयाच्चेति भावः दृश्यमानः यः तीक्ष्णशरनिकरः तेन प्रज्वलितं विज्वलितं विवशीकृतमिति यावत् शरीरं यस्य तेन। अभ्यर्थ्य अनुनीयेत्यर्थः मार्गः पन्थाः। साहाय्यवृत्ती रामस्य साहाय्यकारी साहसिकेन रावणाद् भयमगणयतेति भावः।

(ग) कीदृशः पन्था इति शेषः।

(घ) महाराज! वलीमुखसहस्रानीतैः महीधरैः सेतुर्निर्मीयते सः।

महीधरैः पर्वतैः।

राव । देवि ! विप्रलब्धा असि केनचित् । अकलितगाम्भीर्य्य-महिमा किलायं पाथोनाथः (ङ) ।

जम्बुद्वीपेऽथ वान्येषु द्वीपेष्वपि महीधराः ।
यावन्तस्तैः कुचिकोणोऽप्यस्य न भ्रियते किल ॥१३॥

अपिच । साहसिकस्येति वदन्त्या देव्या विस्मृतप्रायम् (च) । मत्साहसे तु—

उत्पुष्यद्गलधमनिस्फुटप्रसर्पत्-
प्रत्यग्रक्षतजझरीनिवृत्तपाद्यः ।
हर्षास्रुप्रचुरमधुस्मितस्फुटश्रि-
वक्त्राब्जार्चितचरणः शिवः प्रमाणम् ॥१४॥

मन्दो । महाराअ ! ओधारेहि किं वि असारिसो रअणा-अरस्स वि वलीमुहस्स हत्थपुसदो उवरि ज्जेव चिट्ठंदि ते महीहरा जले त्ति (छ) ।

(ङ) विप्रलब्धा वञ्चिता । अकलितेति । न कलितः न ग्रस्तः केनापीति भावः गाम्भीर्य्यस्य दुरवगाहत्वस्य महिमा यस्य तादृशः । पाथोनाथः सलिलनिधिः ।

जम्बुद्वीपे इति । जम्बुद्वीपे वा अन्येषु द्वीपेषु अपि यावन्तः महीधराः पर्वताः स्थिता इति शेषः तैः सर्वैरिति शेषः अपि अस्य समुद्रस्य कुचिकोणः जठरैकदेशः न किल नैवेत्यर्थः भ्रियते भर्त्तुं शक्यते अनुष्टुब्वृत्तम् ॥ १३ ॥

(च) विस्मृतप्रायं प्रायेण विस्मृतमित्यर्थः ।

उत्पुष्यदिति । उत्पुष्यन्तीभ्यः विकसन्तीभ्यः गलधमनिभ्यः कण्ठनलीभ्यः स्फुटं अतीव प्रसर्पतां प्रसरतां प्रत्यग्राणां अभिनवानां क्षतजानां रक्तानां झरीभिः प्रवाहैः निवृत्तं सम्पन्नं पाद्यं पादप्रक्षालनार्थमुदकं यस्य तथोक्तः, हर्षाम्बूणि आनन्दवाष्पा एव प्रचुराणि प्रभूतानि मधूनि मकरन्दा येषां तथोक्तानि, तथा स्मितमेव स्फुटा श्रीः शोभा विकाश इति यावत् येषां तथाभूतानि यानि वक्त्राब्जानि वदनकमलानि तैः अर्चितौ पूजितौ चरणौ यस्य तथाभूतः शिवः प्रमाणं निदर्शनमित्यर्थः । एतादृक् साहसी अहं यत् दश-भिर्मुखैर्महेश्वरमतोषयं मत्तः साहसिकः कोऽपरोऽस्तीति भावः । प्रहर्षणीवृत्तम् ॥१४॥

राव । [सशिरःकम्पम्] इदं तदप्रतीकार्य्यं मौग्ध्यम् अबलानां यद् ग्रावाणोऽपि (ञ) प्लवन्त इति । देवि ! किं बहुना उक्तेन ?

श्रुतं मे जानाति श्रुतिकविरथाज्ञां सहचरः
स शच्या धैर्य्यं चाशनिरथ यशोऽदस्त्रिभुवनम् ।
बलं कैलासाद्रिः किमपरमहो ! साहसमपि
स्वरक्तौलालाम्भःस्नपितचरणः खण्डपरशुः ॥१५॥

[नेपथ्ये महान् कलकलः]

मन्दो । महाराज ! परित्ताहि परित्ताहि (झ) ।

[इति सत्रासमुदीक्षते]

राव । देवि ! अलं शङ्कया ।

(ङ) महाराज ! अवधारय किमपि अन्यादृशी रचना कस्यापि वलीमुखस्य हस्तपुण्यतः उपरि एव तिष्ठन्ति ते महीधरा जले इति सं ।

अन्यादृशी अन्यप्रकारा । वलीमुखस्य वानरस्य विश्वकर्मसुतस्य नलस्येति भावः, नलः सेतुमकारयदिति रामायणम् । हस्तपुण्यतः हस्तस्य पुण्यं सुकृतं समुद्रे प्रस्तरप्लावनसामर्थ्यमिदानमिति भावः तस्मात् ।

(ञ) अप्रतीकार्य्यं अप्रतिविधेयं मौग्ध्यं अबोधत्वमिति भावः । ग्रावाणः पाषाणाः ।

श्रुतमिति । श्रुतिकविः वेदरचयिता ब्रह्मेत्यर्थः मे मम श्रुतं वेदशास्त्रज्ञानमित्यर्थः, अथानन्तरं शच्याः सहचरः स इन्द्र इत्यर्थः आज्ञां, अशनिः वज्रं धैर्य्यम्, अथानन्तरम् अदस्त्रिभुवनं यशः, कैलासाद्रिः बलम् अपरं किं वक्तव्यमिति शेषः, स्वरक्तैः स्ववह्निः कीलालाम्भोभिः शोणितजलैः स्नपितौ चरणौ यस्य तथाभूतः खण्डपरशुः शिवः अपि साहसं मे इति सर्वत्र योज्यं जानाति । ब्रह्मा मम शास्त्रदीक्षायामाचार्य्यः, इन्द्रः आज्ञाकरः, वज्रोऽपि मत्संहारे असमर्थः, त्रिभुवनं यशोभिः पूरितम् । कैलासाद्रिः मद्बाहुबलपरीक्षायां निकषोपलः दशभिः शिरोभिरभिवन्दितः शिव इति भावः । शिखरिणीवृत्तम् ॥ १५ ॥

(झ) महाराज ! परित्रायस्व परित्रायस्व सं ।

[ पुनर्नेपथ्ये ]

भो भो लङ्काद्वाररक्षिणो राक्षसगणाः !

दत्त द्वाराणि तूर्णं सरलतरगुरूण्यश्मसारार्गलानि
क्षिप्यन्तां शस्त्रजातं तदुपरि नयत स्वान्वयांश्चावधत्त ।
रुध्यध्वं निर्विषासून् शिशुयुवतिजनान् वीवधांश्चाद्रियध्वं
प्राप्तः सुग्रीवमुख्यप्लवगपरिवृतः सानुजो रामभद्रः ॥ १६ ॥

[नेपथ्याभिमुखं प्रविष्टा प्रतीहारी] (ञ) ।

प्रतीहारी । भट्ट ! एसो पडीहारभूमिए चिट्ठदि सेणावइ पहत्थो विण्णविदुकामो (ट) ।

राव । कथं सेनापतिः प्रहस्तः ? प्रवेशय ।

प्रती । तथा [ इति निष्क्रान्ता ]

[ततः प्रविशति प्रहस्तः]

प्रह । अहो ! मनुष्यपोतस्य तावदत्यूर्जस्वलं चरितम् (ठ) । तथाहि ।

---

दत्तेति । तूर्णं शीघ्रं द्वाराणि दत्त आहणुत । सरलतराणि अत्यृजूनि गुरूणि महान्ति अश्मसारार्गलानि लौहमयानि अर्गलानि क्षिप्यन्तां निवेश्यन्तां द्वारेष्विति शेषः । तदुपरि तेषां द्वाराणाम् उपरि शस्त्रजातम् अस्त्रसमूहं नयत स्थापयत, स्वान्वयान् स्वस्व-कुलजान् अवधत्त पर्य्यवेक्षध्वं निर्विषाः निस्तेजस इति भावः असवः प्राणा येषां तान् अल्पप्राणानिति भावः शिशुयुवतिजनान् रुध्यध्वं रक्षतेत्यर्थः । वीवधान् खाद्यसामग्रीश्च आद्रियध्वं यत्नेन पालयत तदभावे योद्धुमक्षमत्वादिति भावः । कथमित्याह प्राप्त इति, सुग्रीवोमुख्यः प्रधानो येषां तैः प्लवगैः वानरैः परिवृतः सानुजः सलक्ष्मणः रामभद्रः प्राप्तः उपस्थितः । अत्र चतुर्थपादवाक्यार्थस्य पूर्वपादत्रयस्य हेतुत्वेन कीर्त्तनात् काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे । हेतोर्वाक्यपदार्थत्वे, काव्यलिङ्गं निगद्यते इति । स्रग्धरा-वृत्तम् ॥ १६ ॥

(ञ) प्रतीहारी दौवारिकी ।

(ट) भर्त्तः ! एषः प्रतीहारभूमौ तिष्ठति सेनापतिः प्रहस्तो विज्ञापयितुकामः सं ।

(ठ) अत्यूर्जस्वलम् अतिशयेन प्रतापपूर्णमित्यर्थः ।

भीमं गोष्पदवद् विलङ्घ्य परितः कल्लोलमालाकुलं
पाथोनाथमुपेत्य मन्थरतरं लङ्कानिबद्धेक्षणः।
स्कन्धावारमसौ निवेश्य विषमे सौवेलमूर्ध्नि स्वयं
कैश्चिद् वानरपुङ्गवैः परिवृतोऽध्यास्ते पुरः प्राङ्गणम् ॥१७॥

[पुरो निरूप्य] कथमयं लङ्केश्वरः?

राव। भद्र सेनापते! को हेतुरस्य कलकलस्य?

प्रह। [स्वगतम्] कथमद्याप्यनभिज्ञ एव देवः? भवतु कार्य्यमात्रं विज्ञापयामि [प्रकाशम्]

पुरं निःशेषघटितं कपाटद्वारमावृतम्।
रक्षा चाप्तैर्भक्तिमद्भिः कौणपैः परितः कृता ॥ १८ ॥

राव। किमिति?

प्रह। [स्वगतम्] कथं सैवावस्था? भवतु [प्रकाशम्] देव! लङ्केश्वर!

मनुष्यपोतमात्रेण सानुजेन पुरी तव।
रुध्यते स्म यथासारं वीवधाद्यपि दुर्लभम् ॥१९॥

---

भीममिति। असौ मनुष्यपोतः कैश्चित् कतिपयैः वानरमुख्यैः कपिप्रवरैः परिवृतः सहितः सन् परितः समन्तात् कल्लोलमालाभिः तरङ्गश्रेणिभिः आकुलम् आकीर्णं भीमं भयङ्करं पाथोनाथं जलनिधिं गोष्पदवत् गोखुरपद्धतिस्थजलवत् मन्थरतरम् अतिशयेन मन्थरं सावहेलमिति भावः विलङ्घ्य उत्तीर्य्य उपेत्य समीपमागत्य लङ्कायां निबद्धे अर्पिते ईक्षणे नेत्रे येन तथोक्तः विषमे उन्नतानते सुवेलस्य लङ्कास्थितस्य पर्वतविशेषस्य अयं सौवेलं स चासौ मूर्द्धा चेति तस्मिन् स्कन्धावारं सेनां निवेश्य स्वयं पुरः लङ्काया इति यावत् प्राङ्गणं चत्वरम् अध्यास्ते अधितिष्ठति। शार्दूलविक्रीड़ितं वृत्तम् ॥ १७ ॥

पुरमिति। पुरं नगरं निःशेषं यथा तथा घटितं सम्यक् व्यवस्थापितमिति यावत् कपाटद्वारम् आवृतं पिनद्धं भक्तिमद्भिः अनुरक्तैः आप्तैः विश्वस्तैः कौणपैः राक्षसैः, राक्षसः कौणपः क्रव्यादित्यमरः। परितः सर्वतः रक्षा च कृता विहिता ॥ १८ ॥

मनुष्येति। सानुजेन कनिष्ठभ्रातृसहितेन मनुष्यपोतेन मानवशिशुना तव पुरी

[प्रविश्य प्रतीहारी]

प्रती। भट्ट! एसो कोबि बलीमुहो रामस्स दूदो त्ति भणिअ पड़ीहारदेसे चिट्ठदि (ड)।

राव। [सावज्ञम्] बलीमुख: ? प्रवेशय।

प्रती। तधा [इति निष्क्राम्य अङ्गदेन सह प्रविश्य तं प्रति] एसो भट्टो उपसप्प (ढ)।

अङ्ग। [उपसृत्य] जयति जयति परममाहेश्वरो लङ्केश्वर: (ण)।

राव। सुग्रीवानुचरो भवान् ?

अङ्ग। न हि न हि।

राव। तर्हि कस्य ?

अङ्ग। लङ्केश्वर! श्रूयतां योऽहं यदर्थमागतश्च।

दृप्यद्राक्षसचक्रकाननमहादावानलस्याज्ञया
दूतो दाशरथेस्तदीयवचसा त्वामागत: शासितुम्।

यथासार यथाबल रुध्यते स्म अरोधि। तेन वीवधाद्यपि आहारद्रव्याद्यपि दुर्लभ लब्धुमशक्यम्। आहारीय द्रव्याणां नानास्थानेभ्य: आहार्य्यत्वात् पुरीरोधे कथ तत्-सम्भव इति भाव:। अनुष्टुब्वृत्तम् ॥ १९ ॥

(ड) भर्त्त:! एष कोऽपि बलीमुखो रामस्य दूत इति भणित्वा प्रतीहारदेशे तिष्ठति स ।

कोऽपि बलीमुख: अङ्गद: इति भाव:।

(ढ) एष भर्त्ता उपसर्प स ।

(ण) परममाहेश्वर: महेश्वर: शिव: देवता यस्यासौ माहेश्वर: परमश्चासौ माहेश्वर-श्चेति परममाहेश्वर: परमशैव इत्यर्थ:।

दृप्यदिति। दृप्यत् राक्षसचक्रमेव कानन वन तस्य महान् दावानल: तस्य दाश-रथे: रामस्य आज्ञया दूत: सन्देशहर: सन् तदीयवचसा तस्य वाक्येन त्वां शासितुम्

सीतां मुञ्च भजावरोधनसुहृद्दायादपुत्रान्वितः
सौमित्रेश्चरणौ न चेत्तदिषुभिः शासिष्यसे दुर्मदः ॥२०॥

राव । [सहासम्] वलीमुखोऽपि वाचाटः किं वक्तव्यम् ? (त)

अङ्ग । अहं यत् किञ्चित् स्यां त्वन्तु सिद्धान्तमेवावधारय (थ)

तत्पादाब्जनखं किंवा तत्तीक्ष्णेषु मुखं नताः ।
स्रष्टारस्तेऽद्य मूर्द्धानस्तयोरभिमतं वद ॥२१॥

राव । [सक्रोधम्] कः कोऽत्र भोः ! यत्किञ्चिद्वादिनोऽस्य मुखं संस्कुर्य्यात् (द) ।

प्रह । देव ! दूतः किलायं किमत्र क्रोधेन ? (न) ।

राव । एतन्मुखसंस्कार एव तपस्विनः प्रत्युत्तरीकरणम् (प)

उपदेष्टुम् आगतः । सीतां मुञ्च त्यज, अवरोधनसुहृद्दायादपुत्रान्वितः स्त्रीमित्रज्ञातिपुत्रसहितः सौमित्रेः सुमित्रानन्दनस्य लक्ष्मणस्य चरणौ भज सेवस्व, न चेत् तस्य लक्ष्मणस्य इषुभिः शरैः दुर्मदः मदमत्तस्त्वं शासिष्यसे । शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

(त) वाचाटः वक्ता ।

(थ) यत्किञ्चित् स्यां यः सः भवेयमित्यर्थः । सिद्धान्तं निश्चितम् ।

तदिति । ते तव मूर्द्धानः अद्य तस्य लक्ष्मणस्य पादाब्जनखं चरणकमलनखरं नताः भविष्यन्ति किंवा तस्य लक्ष्मणस्य तीक्ष्णम् इषोः शरस्य मुखम् अग्रम् स्रष्टारः स्रक्ष्यन्ति अतः तयोः नमनमरणयोरिति भावः अभिमतम् इष्टं वद । अनुष्टुब्वृत्तम् ॥ २१ ॥

(द) यत्किञ्चिद् वादिनः अयुक्तवादिन इत्यर्थः । संस्कुर्य्यात् शोधयेत् यथा पुनरीदृशं वदेत् तथा मुखशुद्धिं कुर्य्यादित्यर्थः, अनुरूपा शास्तिरस्य विधातव्येति भावः । उक्तञ्च रामायणे । अथैवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे । क्रोधेन महताविष्टः सचिवानाह रावणः । गृह्यतामेष दुर्मेधाः वध्यतामिति चासकृदिति ।

(न) दूतः किलायं किमत्र क्रोधेन । नीतिशास्त्रे दूतं प्रति क्रोधस्याकर्त्तव्यत्वोक्तत्वादिति भावः ।

(प) एतदिति । एतस्य मुखसंस्कारः मुखस्य वैरूप्यादिकरणरूपा शास्तिरित्यर्थः । तपस्विनः रामस्य प्रत्युत्तरीकरणं प्रतिवचनीकरणम् । दूतस्य वैरूप्यादिविधानस्योक्त

अङ्ग । [उद्रोमकूपस्फुरणमभिनीय] (फ) ।

यथासङ्ख्यं तीक्ष्णक्रकचविषमक्रूरनखर-
प्रगल्भव्यापारप्रमथितशिरोबन्धशिथिलैः ।
शिरोभिस्ते दिग्भ्यो बलिमनुपहृत्यैव किमहं
निवर्त्तेय स्यां चेन्न रघुपतिदौत्येन परवान् ॥ २२॥

[ इत्याप्लुत्य निष्क्रान्तः ]

राव । [निरूप्य] अहो ! जातिसुलभं चापलमप्रतीकार्य्यम् ।

प्रह । देव ! निदेशाचरमालिकापरिग्रहाय उत्कण्ठति हृदयम् (ब) ।

राव । किमत्रापि प्रष्टव्यो निदेशः ?

लोथ्यन्तामभितोऽर्गलानि भुवनप्रख्यातसारोद्धतैः
पाथ्यन्तां पुरगोपुराणि च परव्याक्षेपिभीराक्षसैः ।
मथ्यन्तां रिपुघस्मरप्रहरणं विक्षोभ्य भङ्ग्या भुजाः
खण्ड्यन्तां च मुहुर्विवल्गनपृथोत्थानोल्कटा मर्कटाः ॥२३॥

रामायणे यथा । वैरूप्यमङ्गेषु कशानिपातो मौण्ड्यं तथा लक्ष्मणसन्निपातः । एवंविधान् हंति ह्यचवादी दण्डेषु दूतस्य बधो न दृष्टः ॥ इति ।

(फ) उद्रोमेति । उद्गता उद्रिक्ता रोमकूपा यस्मिन् तादृशं स्फुरणम् अङ्गस्फीतता-विधानमित्यर्थः । अभिनीय नाट्येन प्रकटय्येत्यर्थः ।

यथासङ्ख्यमिति । चेत् यदि अहं रघुपतेः रामस्य दौत्येन सन्देशहरत्वेन परवान् पराधीनः न स्यां न भवेयं तदा यथासङ्ख्यम् एकादिसङ्ख्याक्रमेण तीक्ष्णाः क्रकचवत् कर-पत्रवत् विषमाः उग्राः क्रूराः निष्ठुराः ये नखराः तेषां प्रगल्भेन प्रचण्डेन व्यापारेण प्रहारेणेत्यर्थः प्रमथितेन विच्छिन्नेन शिरोबन्धेन उष्णीषेण शिथिलानि अनावृतानीति भावः तैः ते तव शिरोभिः दशभिरिति भावः दिग्भ्यः दशभ्य इति भावः बलिम् उपहारम् अनुपहृत्य अदत्त्वेत्यर्थः किं निवर्त्तेय ? नैव निवर्त्तयेत्यर्थः । दूतानां दौत्यातिरिक्तस्य कार्य्यस्य अकरणीयत्वादिति भावः । शिरोभ्य उष्णीषाणि प्रभ्रंशितानि गृहीत्वैव निवर्त्ते इति भावः । शिखरिणीवृत्तम् ॥ २२ ॥

प्रह । यदाज्ञापयति महाराजः । [ इति निष्क्रान्तः ]

[ नेपथ्ये महान् कलकलः ]

सर्वे । [ ससंभ्रममाकर्णयन्ति ]

[ पुनर्नेपथ्ये ]

बध्यन्तेऽस्त्रपपुङ्गवाः प्रतिभयाभोगैः प्लवङ्गाधिपैः
बध्यन्ते च वितर्दिकाः प्रतिदिशं कृत्तैरदोमूर्द्धभिः ।
छिद्यन्ते च वहिः प्रपित्सव इमे मध्ये क्रुधान्धाः क्षणाद्
भिद्यन्ते पुरगोपुराणि च दिशि चिप्तैश्च गण्डोपलैः ॥ २४ ॥

---

(व) निदेशेति । निदेशः आज्ञा तस्य अक्षरमालिका अक्षराण्येव मालिका स्रक् तस्याः ग्रहणाय उत्कण्ठते त्वरते । प्रभोराज्ञा मालेव हृदये धार्य्यते इति भावः ।

वोल्यन्तामिति । भुवनेषु प्रख्यातः सारः उत्कर्षः बलं वा तेन उद्धताः उद्दमाः तैः परव्याक्षेपिभिः शत्रुविमर्द्दनकारिभिः राक्षसैः अभितः सर्वतः सर्वेषु द्वारेष्विति भावः अर्गलानि द्वारावरोधककीला इत्यर्थः वोल्यन्तां मोच्यन्तां पुरगोपुराणि लङ्कानगर्य्या वहिर्द्वाराणि च पाट्यन्ताम् उद्घाट्यन्ताम् । भवद्भिर्यत् द्वारावरोधनं कृतं तदयुक्तं द्वाराणामुद्घाटनेनैव स्थातव्यं भीता हि द्वारं रुन्धन्तीति भावः । भङ्ग्या कौशलेन रिपूणां शत्रूणां घस्मरं संहारकं प्रहरणम् अस्त्रं विक्षोभ्य विमर्द्य भुजाः बाहवः मथ्यन्ताम् आस्फाल्यन्तां यथा शत्रवो भीताः पलायेरन्निति भावः विशेषेण वल्गनम् उल्लम्फनं तथा उत्थानञ्च तयोरुत्कटाः मर्कटाः वानराः मुहुः पुनःपुनः खण्ड्यन्तां विनाश्यन्ताञ्च । पुरगोपुराणि इत्यत्र परितोरणानि इति पाठान्तरम् । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

बध्यन्ते इति । प्रतिभयः भयङ्करः, भयङ्करं प्रतिभयमित्यमरः । आभोगः आकारो येषां तैः प्लवङ्गाधिपैः वानरयूथपतिभिः अस्रपपुङ्गवाः राक्षसप्रवराः, राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशर इत्यमरः । बध्यन्ते हन्यन्ते । कृत्तैः छिन्नैः अमीषां राक्षसानां मूर्द्धभिः शिरोभिः प्रतिदिशं वितर्दिकाः वेदिकाः बध्यन्ते निर्म्मीयन्ते च । वहिः बाह्यदेशं रणाङ्गणमिति यावत् प्रपित्सवः प्राप्तुमिच्छवः क्रुधान्धाः क्रोधपरीता इमे राक्षसाः मध्ये अन्तरा रणभूमिप्राप्तेः पूर्वमिति यावत् क्षणात् छिद्यन्ते च । दिशि चिप्तैः गण्डोपलैः गण्डशैलैः क्षुद्रैः पर्वतैरित्यर्थः पुरगोपुराणि नगरद्वाराणि भिद्यन्ते च । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

राव। [ऊर्ध्वमवलोक्य सक्रोधमुत्प्रेक्ष्य च] कथमेते तपस्विपक्षपातादनात्मज्ञा वासवपुरःसरा दिवौकसोऽपि मत्सरिणो विक्षुभ्यन्ते। तद्देवि! त्वमभ्यन्तरे प्रविश। अहमपि तावत् (भ)।

केश्चिद्दोर्भिः प्रमत्तान् प्लवगपरिवृढान् दिक्षु विक्षिप्य दक्षैः
अन्यैः पिष्ट्वापि युद्धाभिनयविधिनटौ तौ तपस्विप्ररोहौ।
शिष्टैः कृष्ट्वा स्वचेतःप्रतिफलितवृथारम्भमात्रप्रविष्टान्
दुष्टांस्त्रैविष्टपानप्यपगतकरुणस्तैर्बिभर्मि स्वकाराम् ॥ २५ ॥

[इति विकटं परिक्रम्य निष्क्रान्तः]

[ततः प्रविशति रथेन सपरिवारो वासवः सूतश्च मातलिः]

मात। देव! दिवस्पते! यथा तावदधिलङ्कमेषः (म)।

(भ) तपस्वीति। तपस्विनि रामे पक्षपातः अनुरागः तस्मात्। अनात्मज्ञाः आत्मज्ञानवर्जिताः रावणस्य आज्ञावहा वयमित्यजानन्त इति भावः। वासवपुरःसराः इन्द्रप्रमुखाः। मत्सरिणः मद्विद्वेषिणः विक्षुभ्यन्ते भिद्यन्ते।

केश्चिदिति। अपगता विनष्टा करुणा दया यस्य तथोक्तः निर्दयः सन्नित्यर्थः केश्चित् कतिपयैः दोर्भिर्भुजैः प्रमत्तान् अनवहितान् अबोधानित्यर्थः प्लवगपरिवृढान् वानरप्रवरान् सुग्रीवादीनित्यर्थः दिक्षु विक्षिप्य निपात्य अन्यैः दक्षैः निपुणैः दोर्भिरिति शेषः युद्धस्य अभिनयः वीराणामवस्थानुकरणम् एव विधिः विधानं तत्र नटौ वीरानुकारिणौ न तु तत्त्वतो वीराविति भावः तौ तपस्विप्ररोहौ तापसाङ्कुरौ रामलक्ष्मणाविति भावः अपि पिष्ट्वा विमर्द्य विनाश्येति यावत् शिष्टैः अवशिष्टैः दोर्भिः स्वचेतसि प्रतिफलितं प्रतिबिम्बितम् उद्बुद्धमित्यर्थः मनःकल्पितमिति यावत् वृथा विफलं रन्ध्रमात्रं सामान्यच्छिद्रमिति यावत् रामेण मम वैररूपमिति भावः तत्र प्रविष्टान् मदाश्रयत्यागेन रामपक्षपातप्रविष्टानिति भावः अतएव दुष्टान् विद्रोहप्रवृत्तानिति यावत् त्रैविष्टपान् दिवौकसोऽपि कृष्ट्वा आकृष्य तैः त्रैविष्टपैः स्वकारां स्वस्य कारां चारकं बन्धनागारमित्यर्थः बिभर्मि पूरयामि। स्रग्धरावृत्तम् ॥ २५ ॥

(म) अधिलङ्कं लङ्कायाम्। एष निर्घोष इति वक्ष्यमाणेनान्वयः।

संवर्त्तप्रकटविवर्त्तसप्तपाथो-
नाथोर्म्मिव्यतिकरविभ्रमप्रचण्डः।
निर्घोषः स्फुरति भृशं परःसहस्र-
व्यावल्गत्प्रबलगतागतास्रपाणाम् ॥२६॥

तथा तर्कये युयुत्सया निर्यियासति नक्तञ्चरचक्रवर्त्तीति (य)।

वास। सूत! पश्य पश्य

दृढ़तरमभियोगं वीक्ष्य रक्षोविनेता
सह तनुजसगर्भप्रेष्यरक्षःसहस्रैः।
सरभसमररााणि द्रागपावृत्य विद्रा-
वितनिखिलवनौका निर्गतोऽयं नगर्य्याः ॥२७॥

[शब्दश्रवणं नाटयित्वा]। आः क एषः कौबेर्य्याः ककुभः

संवर्त्तेति। संवर्त्ते प्रलये, "संवर्त्तः प्रलयः कल्प" इत्यमरः। प्रकटः उत्कटः तीव्र इति यावत् विवर्त्तः परिणामः येषां तथाविधाः ये सप्त पाथोनाथाः जलनिधयः तेषाम् ऊर्म्मीणां तरङ्गाणां व्यतिकरस्य सम्मेलनस्य यो विभ्रमः विलासः तद्वत् प्रचण्डः अति-तीव्रः परःसहस्राणां सहस्राधिकानां व्यावल्गतां त्वरमाणानां प्रबलानां प्रकृष्टबलशालिनां गतानां रणभूमाविति भावः आगतानां ततः पराङ्मुखमापतताम् असृपाणां राक्षसानां निर्घोषः कोलाहलः भृशं स्फुरति उद्गच्छति। प्रहर्षणीवृत्तम् ॥ २६ ॥

(य) तर्कये मन्ये। युयुत्सया योद्धुमिच्छया। निर्यियासति निर्जिगमिषति। नक्तञ्चरचक्रवर्त्ती राक्षसाधिपतिः।

दृढ़ेति। अयं रक्षसां विनेता शासिता रावणः दृढ़तरम् अतिप्रबलम् अभियोगम् आक्रमणं शत्रूणामिति शेषः वीक्ष्य दृष्ट्वा तनुजानां पुत्राणां सगर्भाणां सपिण्डानां प्रेष्याणां भृत्यानां रक्षसां राक्षसानां सहस्रैः सह द्राक् झटिति अरराणि कवाटानि अपावृत्य उद्घाट्य सरभसं सवेगं विद्राविताः ताड़िताः निखिलाः समग्राः वनौकसः वनवासिनः वानरा इत्यर्थः येन तथाभूतः सन् नगर्य्याः लङ्कायाः निर्गतः रणभूमिं चलित इत्यर्थः मालिनीवृत्तम् ॥ २७ ॥

क्वणत्कनककिङ्किणीजालमालिना विमानेन सरभसमित एवा-भ्येति (र)।

सूत। [निर्वर्ण्य] देव! भवतैव गन्धर्वराज्याधिपत्याभिषेक-कृतमहाप्रसादश्चित्ररथः (ल)।

[ततः प्रविशति विमानाधिरूढश्चित्ररथः]

चित्र। जयति जयति देवराजः।

वास। गन्धर्वराज! समरदिदृक्षानिर्भरं किं चेतः?

चित्र। तदपि अन्यदपि।

वास। किमन्यत्?

चित्र। अलकेश्वरनिदेशः (व)।

वास। कीदृशः?

चित्र।

दुर्बाधो जनिदिवसान्मम प्रवृत्तः
कोऽप्याधिः प्रबलतमोऽथवा त्रिलोक्याः।

---

(र) कौवेर्य्याः कुवेराधिष्ठितायाः उत्तरस्या इत्यर्थः। ककुभः दिशः। क्वणदिति। क्वणन्ती स्वनन्ती या कनककिङ्किणी काञ्चनी क्षुद्रघण्टिका तस्या जालमाला संहतिरूपा स्रक् विद्यते यत्र तादृशेन विमानेन देवयानेन।

(ल) गन्धर्वेति। गन्धर्वाणां राज्येषु आधिपत्यं तस्मिन् अभिषेकेण कृतः महान् प्रसादः अनुग्रहः यस्मै यस्य वा सः।

(व) अलकेश्वरनिदेशः अलका कुवेरनगरी तस्या ईश्वरः कुवेरः तस्य निदेशः आदेशः।

दुर्बाध इति। यस्येत्यध्याहार्य्यं, यस्य रावणस्य जनिदिवसात् जन्मदिनात्, "जनि-रुत्पत्तिरुद्भव" इत्यमरः। ल्यवर्थे पञ्चमी। जन्मदिनमारभ्येति यावत् मम अथवा त्रिलोक्याः कोऽपि अनिर्वचनीयः प्रबलतमः अतिदारुणः दुर्बाधः बाधितुमशक्यः अप्रतिविधेय इति यावत् आधिः सन्तापः वर्त्तते इति शेषः सर्वेषामेव निष्पीड़नादिति विधेर्दैवस्य विलासात् विपाकात् तस्य रावणस्य इदं निधनदिनं मृत्युकाल इति भावः उपस्थितमिति शेषः। तदिदानीं कल्याणी मङ्गलदायिनी वा जगतामिति भावः रावणविध्वंसिनेति भावः अन्यथा अकल्याणी वा परिणतिः परिणामः अस्तु भवतु। प्रहर्षिणीवृत्तम्॥ २८॥

तस्येदं निधनदिनं विधेर्विलासात्
कल्याणी परिणतिरस्तु वान्यथा वा ॥२८॥

तदवगन्तुमहं प्रहितः।

वास। सकुल्यानामप्येष मनोरथः (श)।

चित्र। किं चित्रं सहजाः किल ते मिथः शत्रवः कृत्रिमताऽपि निधिपुष्पकादिहरणप्रवृत्तेर्दुर्वृत्तस्य सुप्रथिता (ष)।

अथवा।

यावत्त्रिलोक्यां किल जन्तुजातं
तत् सर्वमस्योद्धतदुश्चरित्रैः।
कदर्थितं श्रीरघुनन्दनस्य
प्रीत्या विधत्ते विजयप्रतीक्षाम् ॥ २९ ॥

वास। [निरूप्य] गन्धर्वराज! यदिदमधित्यकातः सुवेलाद्रेरकाण्ड एव प्रबलकिलिकिलाकोलाहलमुखरितहरिन्मुखं बलीमुखचक्रमक्रममेवोच्चलितं तथा मन्ये पतितमेव प्रहरणैरिति (स)।

(श) सकुल्यानां समानकुलजातानां कुवेरो हि रावणस्य सकुल्यः एकपितृकत्वादिति भावः। अन्येषां किं वक्तव्यमित्यपिशब्दार्थः। मनोरथः अभिलाषः।

(ष) किमिति। किं चित्रं किमाश्चर्यं सहजाः भ्रातर इत्यर्थः मिथः परस्परं शत्रवः रिपवः। कृत्रिमता कृत्रिमशत्रुत्वं निधिः रत्नभेदः पुष्पकञ्च आदिर्येषां तथोक्तानां द्रव्याणामिति भावः हरणे प्रवृत्तिर्यस्य तथोक्तस्य दुर्वृत्तस्य दुराचारस्य रावणस्येति शेषः। सुप्रथिता सुप्रसिद्धा।

यावदिति। त्रिलोक्यां त्रिभुवने यावत् जन्तुजातं प्राणिसमूहः किल प्रसिद्धौ अस्तीति शेषः तत् सर्वम् अस्य रावणस्य उद्धतानि उद्दामानि दुष्टानि चरित्राणि तैः कदर्थितं क्लेशितं सत् प्रीत्या अनुरागेण श्रीरघुनन्दनस्य रामस्य विजयप्रतीक्षां विधत्ते करोति। उपजातिवृत्तम् ॥ २९ ॥

(स) अधित्यकातः ऊर्ध्वभूमेः, "उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधित्यका" इत्यमरः।

चित्र। देवराज! पश्य पश्य

अयं रक्षोनाथः क्षितिधरशिरोबन्धुरतरे
रथे तिष्ठन् प्रष्ठः प्रधनरसनिष्णातमनसाम्।
मुहुर्जीवाघोषैर्बधिरयति दिक्प्रान्तशिखरि-
प्रतिध्वानाध्मातैर्गगनविवराभोगमभितः ॥३०॥

राम। गन्धर्वराज! न तुलाधृतस्तावदनयोर्वीरसमयोचितः परिकरः (छ)। [सावेगम्] सूत सूत! सांग्रामिकं मे रथमुपहर रामभद्राय। अहमपि गन्धर्वराजाधिष्ठितं विमानमेवाधितिष्ठामि।

[तथा करोति]

सूत। यथाज्ञापयति देवराजः। [इति निष्क्रान्तः]

चित्र। देवराज! कथमतिसन्धेयं तुमुलम् (ज)। तथाहि,

सुवेलाद्रेः सुवेलाख्यगिरेः। प्रवल्गेति। प्रवल्गेन किलिकिलाकोलाहलेन मुखरितानि शब्दितानि हरितां दिशां मुखानि येन तथोक्तः। वलीमुखचक्रं वानरसैन्यम्। अक्रम क्रमरहितं विशृङ्खलमिति भावः उच्चलितं प्रस्थितम्। प्रहरणैः अस्त्रैः।

अयमिति। प्रधनस्य संग्रामस्य रसेन अनुरागेण निष्णातानि दीक्षितानि मनांसि येषां तादृशानां वीराणामिति भावः प्रष्ठः प्रवरः अयं रक्षोनाथः रावणः क्षितिधरस्य शिरः शृङ्गं तद्वत् बन्धुरतरः उन्नताननतर इत्यर्थः, "बन्धुरन्तून्नताननम्" इत्यमरः। तस्मिन् रथे तिष्ठन् अभितः समन्ततः दिशां प्रान्तेषु ये शिखरिणः पर्वताः तेषु प्रतिध्वानः प्रतिध्वनिः तेन आध्माताः आपूरिताः तैः जीवाघोषैः मौर्वीनिस्वनैः गगनविवराभोगं गगनविवरस्य अन्तरीक्षरन्ध्रस्य आभोगं विस्तारं मुहुः पुनःपुनः बधिरयति आवृणोतीति यावत्। शिखरिणीवृत्तम् ॥ ३० ॥

(छ) तुलाधृतः तुलया समीकरणयन्त्रेण तौलदण्डेनेत्यर्थः धृतः समतां गत इति भावः वीरसमयस्य संग्रामाचारस्य उचितः अनुरूपः परिकरः परिच्छदः उपकरणमिति यावत्।

(ज) अतिसन्धेयम् अतिशयेन सन्धातुमर्हं पर्य्यवेक्षणीयमिति यावत् तुमुलं घोरं रणकर्मेत्यर्थः।

रक्षोभिर्विपिनौकसां परिवृढैश्चारादपास्तक्रमं
मुष्टामुष्टि कचाकचि प्रहरणप्रक्षेपमूढात्मभिः।
प्रारब्धं रणकर्म दुर्द्धरमिथोनिष्पेषशौर्य्यैर्वपु-
र्निष्ठ्यूतास्रभरैरभिरेव सरणिर्दुःसञ्चराभूद्यया ॥३१॥

अपिच।

वीराणां रुण्डतुण्डप्रविघटनपटुस्फारदोर्दण्डखड्ग-
व्यापारक्षिप्यमाणप्रतिभटविकटाटोपवर्ष्मप्ररूढ़ः।
कूटः कोऽप्येष युद्धाजिरभुवि जरठश्चित्रकूटानुकारी
लीयन्ते यत्र शत्रुप्रपतनविवशाः कोटिशः शूरकीटाः ॥३२॥
वास। गन्धर्वराज! इत इतः।

रक्षोभिरिति। रक्षोभिः विपिनौकसां वनौकसां वानराणां परिवृढैः पतिभिः वानरसेनापतिभिरित्यर्थः प्रहरणानाम् अस्त्राणां प्रक्षेपेण मूढ़ाः मोहं गताः आत्मानः स्वरूपाणि येषां तथाभूतैः सद्भिः आरात् समीपे, "आराद् दूरसमीपयोः" इत्यमरः। अपास्तक्रमम् अक्रमं क्रममनाहत्येति भावः मुष्टामुष्टि मुष्टिभिर्मुष्टिभिः प्रहृत्य यत् वृत्तं तत् कचाकचि कचेषु कचेषु केशेषु केशेषु आकृष्य यत् वृत्तं तत् तादृशं रणकर्म तथा प्रारब्धम् उपक्रान्तं यथा दुर्द्धरैः दुःसहैः मिथः परस्परं निष्पेषैर्विमर्दैः शौर्य्यदृप्तैः भिद्यमानेभ्य इति भावः वपुर्भ्यः शरीरेभ्यः निष्ठ्यूताभिः निर्गताभिः अस्राणां शोणितानां भरैभिः प्रवाहैः सरणिः पद्धतिः दुःसञ्चरा दुःखेन सञ्चरितुं शक्या अभूत्। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३१ ॥

वीराणामिति। युद्धाजिरभुवि संग्रामाङ्गणभूमौ वीराणां भटानां रुण्डतुण्डयोः शरीरमुखयोः प्रविघटने कर्त्तने पटवः निपुणाः स्फाराः विशाला ये दोर्दण्डाः बाहुदण्डाः तैः खड्गव्यापारेण छेदनक्रियया क्षिप्यमाणैः पात्यमानैः प्रतिभटानां प्रतिवीराणां विकटाः उत्कटाः आटोपाः गर्वाः औद्धत्यानीति यावत् येषां तथाभूतैः वर्ष्मभिः देहैः प्ररूढ़ः सञ्जातः जरठः प्रवृद्धः चित्रकूटानुकारी चित्रकूटपर्वतसदृशः कोऽपि अनिर्वचनीयः एषः दृश्यमान इति शेषः कूटः राशिर्दृश्यते इति शेषः। यत्र कूटे शत्रूणां निहतानामिति भावः प्रपतनेन उपर्य्युपरि पतनेन विवशाः विह्वलाः कोटिशः बहुसंख्यका इति भावः शूरकीटाः शूरेषु कीटाः क्षुद्राः वीरा इत्यर्थः लीयन्ते लयं गच्छन्ति। स्रग्धरावृत्तम् ॥३२॥

प्रासप्रोतप्रवीरोल्वणरुधिरपराम्टष्टवुक्काजिघत्सा-
धावद्गृध्राधिराजाप्रतिमतनुरुहच्छायया वारितोष्णाः।
विश्राम्यन्ति चणार्द्धं प्रधनपरिसरेष्वेव मुक्ताभियोगाः
वीराः शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गाः ॥३३॥

इतोऽपि।

प्रतीच्छन्ते वीराः प्रतिमुखमुरोभिः सरभसं
विपक्षाणां हेतीः प्रतिनियतधैर्य्यानुभवतः।
विदीर्णत्वग्भारा दलितपिशिताश्छिन्नधमनि-
प्रकाण्डास्थिस्नायुस्फुटतरविलक्ष्यान्त्रनिवहाः ॥३४॥

चित्र। देवराज! अपूर्वोऽयं रक्षःपतेः संग्रामावतरणसर्गः(क)
तथाहि।

प्रासेति। वीराः शस्त्राणां प्रहारव्रणः प्रहारजनितं क्षतं तस्य भरात् अतिरेकात् ये रुधिरोद्गाराः रक्तस्रावाः तैः दिग्धानि लिप्तानि अखिलानि अङ्गानि शरीराणि येषां तथा-भूताः अतएव मुक्ताभियोगाः त्यक्तयुद्धव्यापाराः प्रधनपरिसरेषु रणाङ्गणेषु प्रासैः कुन्तैः प्रोतानां विद्धानां प्रवीराणां भटानाम् उल्वणेन उत्कटेन रुधिरेण परामृष्टायाः सिक्तायाः वुक्कायाः अग्रमांसस्य जिघत्सया भक्षणेच्छया धावतां गृध्राधिराजानां वृहतां गृध्राणाम् अप्रतिमानि अनुपमानि महान्ति इत्यर्थः यानि तनुरुहाणि लोमानि तेषां छायया वारि-तोष्णाः निवारितातपाः सन्तः चणार्द्धं विश्राम्यन्ति विश्रान्तिसुखमनुभवन्ति। स्रग्धरा-वृत्तम् ॥ ३३ ॥

प्रतीच्छन्ते इति। वीराः विदीर्णाः त्वचां चर्मणां भाराः येषां ते छिन्नशरीरत्वग्भागा इत्यर्थः, दलितपिशिताः निकृत्तमांसाः, छिन्नासु धमनिषु नाड़ीषु तथा प्रकाण्डेषु वृहत्सु अस्थिषु स्नायुषु च स्फुटतरं विलक्ष्याः दृश्याः अन्त्राणां शिराविशेषाणां निवहाः समूहाः येषां तथोक्ताः सन्तः प्रतिनियतं व्यवस्थितं यत् धैर्य्यं तस्य अनुभवतः प्रभावात् प्रतिमुखम् अभिमुखं यथा तथा सरभसं सवेगं उरोभिः वक्षोभिः विपक्षाणां शत्रूणां हेतीः अस्त्राणि प्रतीच्छन्ते सहन्ते। शिखरिणीवृत्तम् ॥ ३४ ॥

(क) रक्षःपतेः राक्षसराजस्य। संग्रामे अवतरणं तस्य सर्गः सृष्टिः नियम इत्यर्थः।

प्रेष्याः संग्रामसीमन्यनुजशतवृतो मेघनादोऽपि पार्श्वे
वामेऽन्यत्र प्रवीरेष्वतिविषममदोद्बोधितः कुम्भकर्णः।
कैकस्या बन्धुवर्गोऽप्ययमतिविकटः पृष्ठतस्तिष्ठमानो
ऽध्यास्ते मध्ये निषण्णो रणशिरसि भृशं रावणो दुर्विगाहः॥३५॥

वास। गन्धर्वराज! एवमभियोगोद्धुरं द्विषन्तमभिवीक्ष्यापि (ख) निष्प्रकम्प एव रामभद्रः। अथवोचितमेवैतत्। यतः—

न कम्पन्ते झञ्झामरुति किल वाति प्रतिदिशं
समुन्मूर्च्छत्सारा: कुलशिखरिणः किञ्चिदपि ते।
न मर्य्यादां तेऽपि प्रतिजहति गाम्भीर्य्यगरिम-
स्फुरद्वार्ब्रह्माणोऽकलितमहिमानोऽम्बुनिधयः॥३६॥

प्रेष्या इति। प्रेष्याः भृत्याः एते इति शेषः, संग्रामसीमनि रणाग्रे वर्त्तन्ते इति शेषः। अनुजशतैः कनिष्ठभ्रातृशतैः वृतः मेघनादः इन्द्रजित् वामे पार्श्वे, अन्यत्रापि अपरस्मिन्नपि पार्श्वे दक्षिणे इति भावः प्रवीरेषु प्रधानवीरेषु मध्ये अतिविषमः अत्युत्कटः मदो यस्य तथाभूतः उद्बोधितः अकाले निद्रां त्याजित इति भावः कुम्भकर्णः, पृष्ठतः तिष्ठमानः अयम् अतिविकटः कैकस्याः रावणमातुः बन्धुवर्गः ज्ञातिगणः, रणशिरसि रणाग्रे निषण्णः स्थितः भृशम् अतिशयेन दुर्विगाहः दुर्धर्षः रावणः मध्ये रणभूमेः अग्र्यस्थाः मध्यस्थले इति यावत् अध्यास्ते अधितिष्ठति। रावणो दुर्विगाह इत्यत्र विन्ध्यवत् दुर्विगाह इति च पाठान्तरम्। स्रग्धरावृत्तम्॥ ३५॥

(ख) एवम् इत्थम् अभियोगोद्धुरम् आक्रमणाभिनिविष्टमित्यर्थः द्विषन्तं शत्रुम्।

न कम्पन्ते इति। प्रतिदिशं दिशि दिशि झञ्झामरुति उत्कटे वायुविशेषे वाति वहति अपि ते प्रसिद्धाः कुलशिखरिणः कुलपर्वताः, महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वता इत्युक्ताः, समुन्मूर्च्छन्तः सम्वर्द्धमानाः साराः स्थिरांशाः बलानि च येषां तथाभूताः न किञ्चित् किमपि कम्पन्ते विचलन्ति तथा गाम्भीर्य्यस्य गरिम्णा गौरवेण स्फुरन् वृद्धिं गच्छन् वार्ब्रह्मा जलमयी ब्रह्ममूर्त्तिर्येषु तथाविधाः, अकलितः अनाक्रान्तः महिमा येषां तादृशाः ते प्रसिद्धाः अम्बुनिधयः समुद्रा अपि मर्य्यादां स्थितिं न प्रतिजहति न त्यजन्ति। शिखरिणीवृत्तम्॥ ३६॥

चित्र। देवराज ! पश्य पश्य।

भक्तिप्रह्वं कथमपि यवीयांसमुत्सृज्य चापा-
रोपव्यग्राङ्गुलिकिसलयं मेघनादक्षयाय।
लक्ष्यीकृत्य प्रधनकुशलं सानुजं राक्षसेन्द्रं
जीवां भूयो रघुपतिवृषा स्पर्शतः संस्करोति ॥ ३७ ॥

कथमेतदतिदुष्करमिव मन्ये ? तथाहि—

आक्रम्यैकैकमेते रजनिचरभटाः कोटिशः शस्त्रवर्षैः
भास्वद्वंशप्ररोहं पिदधति परितो योधने यौगपद्याः।

अथवा किं नाम दुष्करम्।

एतावप्युत्प्रभावावकलितमहिमप्राभवौ युद्धभूमौ
इन्धाते शत्रुशस्त्रप्रविदलनफलस्पष्टबाणाभियोगौ ॥३८॥

भक्तिप्रह्वमिति। रघुपतिवृषा राघवेन्द्रः रामः मेघनादस्य इन्द्रजितः क्षयाय निधनाय चापस्य धनुषः आरोपे ज्यासङ्गमने व्यग्राः अङ्गुलिकिसलयाः यस्य तथाभूतं भक्तिप्रह्वं भक्त्या प्रणतं यवीयांसं कनिष्ठभ्रातरं लक्ष्मणं कथमपि उत्सृज्य त्यक्त्वा प्रधनकुशलं संग्रामदक्षं सानुजं कुम्भकर्णसहितं राक्षसेन्द्रं रावणं लक्ष्यीकृत्य भूयः पुनः जीवां मौर्वीं स्पर्शतः स्पर्शेन आकर्षणेनेति भावः संस्करोति शोधयति। मन्दाक्रान्तावृत्तम् ॥ ३७ ॥

आक्रम्येति। योधने रणव्यापारे यौगपद्यं समकालिकत्वं सम्भूयोत्थानमिति यावत् अस्ति येषां तथाभूताः, एते रजनिचरभटाः राक्षसचमूचराः कोटिशः शस्त्रवर्षैः एकैकम् एकमेकं भास्वद्वंशप्ररोहं सूर्यवंशाङ्कुरं लक्ष्मणं रामञ्च इति यावत् आक्रम्य परितः समन्तात् पिदधति आच्छादयन्ति। यावन्त इमे राक्षसाः तावन्त एव रामाः शरवर्षैरभिराच्छादयन्ते इति भावः। यद्वा एकैकं प्रत्येकं शरवर्षैः भास्वद्वंशप्ररोहं रामं परितः समन्तात् आक्रम्य पिदधति आच्छादयन्ति। एतौ अपि रामलक्ष्मणौ उद्गतः प्रभावो ययोः तथोक्तौ, न कलितः न आक्रान्तः महिम्नां प्राभवः सामर्थ्यं ययोः तथाभूतौ तथा शत्रूणां शस्त्राणि तेषां प्रविदलनं विमर्दनं फलं यस्य तादृशः स्पष्टः प्रकटः बाणाभियोगः शरवर्षणं ययोः तादृशौ सन्तौ युद्धभूमौ इन्धाते दीप्येते। योधने यौगपद्या इत्यत्र सत्क्रिया-यौगपद्या इति पाठान्तरम्। स्रग्धरावृत्तम् ॥ ३८ ॥

[ समन्ततोऽवलोक्य ] अहो कथमेते वनौकसोऽपि महति सपत्नसङ्गरे स्वाभिधानयोगमेव ख्यापयन्तः पञ्चषाः केवलं रामभद्रपादमूलमासेवन्ते (ग) तथाहि।

सुग्रीवः स्यन्दनस्याग्रे सोऽङ्गदः पृष्ठतः पुनः।
पञ्चषा जाम्बुवान् भावी लङ्काधीशोऽपि पार्श्वयोः ॥३९॥

[ विचिन्त्य ] हनूमान् पुनः कनीयांसं काकुत्स्थम् (घ)। [ सविमर्षम् ] वरमेत एवोभयथा रामभद्रपादपद्मोपसेविनः। यतस्तावदेतेषाम्—

स्वामिभक्तिश्च धैर्य्यञ्च व्याख्याति गात्रमक्षतम्।
रक्षोऽभियोगे त्वन्येषां दृश्यते दैन्यमप्यलम् ॥४०॥

वाम। गन्धर्वराज! मानुषे लोके वात्सल्यं नाम केवलमखिलेन्द्रियवशीकरणचूर्णमुष्टिः (ग)। यतः—

सौमित्रिः कृतहस्तताप्रभृतिभिर्न्यूनो न कैश्चिद् गुणैः
सारेणापि पुनः प्रसिद्धमहिमा शौर्य्याग्रणी रावणिः।

(ग) वनौकसः वनवासिन अपि युक्तायुक्तविवेकरहिता अपीति भावः। सपत्नसङ्गरे शत्रुसंग्रामे। स्वाभिधानानां स्वनाम्नां योगमेव औचित्यमेव ख्यापयन्तः प्रकटयन्तः। पञ्चषाः पञ्च षट् वा परिमाणमेषां ते पञ्चसंख्याः षट्संख्या चेत्यर्थः।

सुग्रीव इति। सुग्रीवः स्यन्दनस्य रथस्य अग्रे, सः अङ्गदः पुनः पृष्ठतः पृष्ठदेशे, जाम्बुवान् भावी भविष्यन् लङ्काधीशः लङ्केश्वरः विभीषण इति यावत् पार्श्वयोः वक्ष्यमाणो हनूमांश्च एते पञ्चषाः पञ्चसंख्यकाः इत्यर्थः ॥ ३९ ॥

(घ) तत्र तावत् हनूमान् कनीयांसं कनिष्ठं काकुत्स्थं लक्ष्मणमित्यर्थः।

स्वामीति। अक्षतं शत्रुभिरनाविद्धमित्यर्थः गात्रं शरीरं स्वामिभक्तिञ्च धैर्य्यञ्च व्याख्याति प्रकटयति। व्याख्यातीति पाठान्तरम्। रक्षोभिः अभियोगे धर्षणे अन्येषान्तु वानराणां अलमत्यर्थं दैन्यमपि कातर्य्यमपि दृश्यते ॥ ४० ॥

(ग) मानुषे इति। मानुषे लोके मर्त्यलोके केवलं वात्सल्यं पुत्रादिगतस्नेह— इत्यर्थः अखिलानामिन्द्रियाणां वशीकरणे सम्मोहने चूर्णमुष्टिः धूलिमुष्टिक्षेप इत्यर्थः अतीव मुग्धकारीति भावः।

इत्थं तुल्यतरे किल व्यतिकरे रामस्य रक्षःप्रभोः
चान्योन्यं शरवृष्टिरेव बलते दृष्टिस्तयोर्वत्सला ॥४१॥

चित्र। देवराज ! युक्तमेवैतत्। एवं वात्सल्यमनुरुध्यन्ते (घ) किल महात्मानः। [ साद्भुतौत्सुक्यम् ] पश्यतु देवराजः।

सौमित्रेर्बाणवज्रैरधिकतरममी मर्मवेधं प्रविद्धाः
धावन्तः क्ष्माधरेन्द्रा इव रजनिचराः शेरते युद्धसीम्नि।
रक्षोनाथोऽपि पुत्रान् कतिचन पतितान् वीक्ष्य रामाभियोगं
संत्यज्यानिष्टशङ्की निपतति तरसा मेघनादोपकण्ठम् ॥४२॥

तत् एतत् अत्याहितमाशङ्के (ङ)।

वास। गन्धर्वराज ! किमत्र नाम अत्याहितम् अपरिच्छेद्य-महिमानः किल एते ककुत्स्थकुलप्ररोहाः (च)। तथाहि—

---

सौमित्रिरिति। सौमित्रिः लक्ष्मणः कृतहस्तता द्रुतहस्तता प्रभृतिर्येषां तथाभूतैः कैश्चित् कैरपीत्यर्थः गुणैः न न्यूनः न लघुः इन्द्रजिदपेक्षयेति भावः। शौर्य्येण अग्रणीः श्रेष्ठः रावणिः मेघनादः पुनः सारेणापि बलेनापि उत्कर्षेणापि वा प्रसिद्धमहिमा प्रख्यातप्रभावः। इत्थम् एवं तुल्यतरे व्यतिकरे सम्बन्धे अवस्थायां वा रामस्य रक्षसां प्रभोश्च लङ्केश्वरस्य च अन्योन्यं परस्परं प्रतीति शेषः शरवृष्टिः बलते एव चलत्येव। किन्तु तयोः सौमित्रिमेघनादयोः उपरि इति शेषः वत्सला स्नेहवती दृष्टिः चलति इति यावत्। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

(घ) अनुरुध्यन्ते अनुसरन्ति।

सौमित्रेरिति। अमी रजनिचराः राक्षसाः सौमित्रेर्लक्ष्मणस्य बाणवज्रैः वज्रसदृशैः बाणैः मर्मवेधं मर्मणां वेधो यस्मिन् तत् यथा तथा अधिकतरं प्रविद्धाः भिन्ना धावन्तः चरन्तः क्ष्माधरेन्द्रा इव शैलराजाव इव युद्धसीम्नि रणभूमौ शेरते। रक्षोनाथोऽपि रावणोऽपि कतिचन कतिपयान् पुत्रान् पतितान् रणभूमाविति शेषः वीक्ष्य दृष्ट्वा रामाभियोगं रामेण सह युद्धं संत्यज्य अनिष्टशङ्की अमङ्गलमाशंसन् तरसा वेगेन मेघनादस्य उपकण्ठम् अन्तिकं निपतति गच्छति। स्रग्धरावृत्तम् ॥ ४२ ॥

(ङ) अत्याहितम् अमङ्गलं रामस्येति शेषः।

परःसहस्रा रजनीचरेन्द्रा यथास्य वीरस्य किलैकलक्ष्यम् ।
तथा रणेष्वद्भुतवीरगोष्ठीभूषायमाणो दशकन्धरोऽपि ॥ ४३॥

चित्र । देवराज ! बहुभिरेकस्य अभियोगेऽपि शुभोदर्कतेत्ये-तदबहुव्यक्तिनिष्ठम् [सचमत्कारम्] इतोऽवधत्तां देवराजः (छ) ।

रक्षोनाथे सरभसमितो निर्गते विग्रहेच्छुः
क्षुभ्यत्युच्चै रघुपतिशरैः कीलितः कुम्भकर्णः ।
कुम्भोऽप्येतां पितुरुपनतां वीक्ष्य वस्थां वपुष्मान्
गर्वः किंवा निपतति जवाज्जङ्गमः क्ष्माधरेन्द्रः ॥ ४४ ॥

[साद्भुतम्] अहो छिद्रसञ्चारिता मर्कटजातेः (ज) । यतः—

---

(च) अपरिच्छेद्येति । न परिच्छेदः परिच्छेत्तुं शक्यः महिमा येषां तथोक्ताः । ककुत्स्थेति । पुरा पुरञ्जयो नाम इक्ष्वाकुवंश्यः वृषरूपिणो महेन्द्रस्य ककुदि स्थित्वा असुरान् निजघान । ततश्च तस्य ककुत्स्थेति संज्ञा प्रसिद्धिं गता । तद्वंश्याश्च काकुत्स्था उच्यन्ते इति पुराणवार्तावानुसन्धेया ।

पर इति । परः सहस्राः सहस्राधिकाः रजनीचरेन्द्राः राक्षसेन्द्राः अस्य वीरस्य रामस्य यथा एकलक्ष्यं किल, एकेनैव शरेण राक्षसानां सहस्राणि वेद्धुमसौ रामः समर्थ इति भावः तथा दशकन्धरोऽपि रणेषु अद्भुतवीरगोष्ठीभूषायमाणः आश्चर्यकर्मणि अलङ्कारायमाण इत्यर्थः । उपजातिवृत्तम् ॥ ४३ ॥

(छ) अभियोगे आक्रमणे । शुभोदर्कता शुभमुत्तरं फलमेकस्येति भावः । एतत् बहुव्यक्त्यभियोगे एकस्य शुभोदर्कशालित्वमित्यर्थः अबहुव्यक्तिनिष्ठं बहुव्यक्तिनिष्ठं न भवतीत्यर्थः असामान्यजननिष्ठमिति यावत् ।

रक्षोनाथे इति । रक्षसां नाथे रावणे इतः संग्रामात् सरभसं सवेगं निर्गते पलायिते इति यावत् विग्रहेच्छुः संग्रामाभिलाषी कुम्भकर्णः रघुपतेः रामस्य शरैः कीलितः विद्धः सन् उच्चैरत्यर्थं क्षुभ्यति क्षोभं गच्छति व्यथते इत्यर्थः । कुम्भोऽपि कुम्भकर्णस्य सुतोऽपि पितुः कुम्भकर्णस्य एताम् उपनताम् उपस्थितां वस्थां दशां रामशरव्यथितामिति भावः वीक्ष्य दृष्ट्वा वपुष्मान् शरीरी गर्वः किं जङ्गमः चलन् क्ष्माधरेन्द्रः पर्वतराजः वा जवात् वेगात् निपतति धावति रणभूमिमिति शेषः । अत्र किंशब्दो वाशब्दश्च उत्प्रेक्षायां प्रयुक्तः । मन्दाक्रान्तावृत्तम् ॥ ४४ ॥

(ज) मर्कटजातेः वानरजातेः । छिद्रसञ्चारिता रन्ध्रानुपातित्वम् ।

उद्दिश्याराद्दशरथकुलाङ्कुरमाद्यं पतन्तं
सद्यः कुम्भं मृधभुवि कपिः कोऽपि मध्ये रुरोध ।
[सविशेषं निर्वर्ण्य] कथं सुग्रीव एव [सविचिकित्सम्]
दोस्तम्भाभ्यां सरभसमथापीड्य विक्षिप्य भूमौ
क्रान्त्वाप्येनं प्रतिघविवशो माषपेषं पिपेष ॥ ४५ ॥

[ साशङ्कम् ]

एतन्निरीक्ष्य निपपात च कुम्भकर्णः
सुग्रीवमुग्रतरविद्रुतिरग्रहीच्च ।
उन्मोच्य सोऽपि निपुणः स्वममुष्य नासां
लज्जां स्वसुश्च युगपत् किल निश्चकर्त्त ॥ ४६ ॥

वास । गन्धर्वराज ! इत इतः ।

लघुरघुपतिरेष राक्षसाना-
मधिभुवि किञ्च कुमारमेघनादे ।
किमपि चरितमद्भुतं व्यतानीत्
सपदि हि तौ प्रतिघान्धतामधत्ताम् ॥ ४७ ॥

---

उद्दिश्येति । कोऽपि कपिः वानरः आरात् समीपे आद्यं ज्येष्ठं दशरथकुलाङ्कुरं दशरथवंशप्ररोहं राममित्यर्थः उद्दिश्य पतन्तं धावन्तं कुम्भं मृधभुवि रणभूमौ मध्ये अन्तरा सद्यः सपदि रुरोध आचक्राम । अथ रोधानन्तरं दोस्तम्भाभ्यां बाहुदण्डाभ्यां सरभसं सवेगं एनं कुम्भं आपीड्य निर्मथ्य भूमौ विक्षिप्य निपात्य प्रतिघविवशः क्रोधविह्वलः सन् क्रान्त्वापि दलित्वापि माषपेषं माषानिव पिष्ट्वा पिपेष चूर्णयामास । मन्दाक्रान्ता-वृत्तम् ॥ ४५ ॥

एतदिति । कुम्भकर्णः एतत् निरीक्ष्य कुम्भवधं दृष्ट्वेति यावत् निपपात च सुग्रीवं प्रतीति शेषः, उग्रतरा श्रेष्ठतरा विद्रुतिः धावनं यस्य तथाभूतः सन् सुग्रीवम् अग्रहीच्च । सोऽपि सुग्रीवोऽपि निपुणः सुचतुरः स्वम् आत्मानम् उन्मोच्य मोचयित्वा अमुष्य कुम्भ-कर्णस्य नासां स्वसुः भगिन्याः शूर्पणखायाः लज्जाञ्च युगपत् समकालं निश्चकर्त्त चिच्छेद किलेति प्रसिद्धौ । वसन्ततिलकं वृत्तम् ॥ ४६ ॥

अहह ! इदमतिदुष्करं प्रतिसंविधानमापतितमस्य रघुशिशोः (झ) । तथाहि—

यावन्मन्त्रप्रभावादनधिगतगतीन् मेघनादप्रणुन्नान्
दुर्भेद्यान्नागपाशान् विहगपरिवृढास्त्रप्रयोगाद् व्यधूनोत् ।
तावद्रक्षोविनेत्रा पुनरतिरभसं मर्मणि क्रोधभूम्ना
गाढं विद्धः शतघ्न्या हनुमति सहसा मोहनिघ्नो न्यपप्तत् ॥४८॥

चित्र । देवराज ! अयमत्राद्भुततरो विमर्दः । यदा तु भ्रातुर्मोहमधिगम्य भाविलङ्केश्वरात्, अक्रममेव करुणवीरानुभावभावितचित्तवृत्तिः तथाविधस्यापि दर्शनोत्सुकः समवरुध्यत परितः कुम्भकर्णप्रमुखया रक्षःपृतनया तदा पुनरिदमेव प्रत्यकार्षीत् (ञ) । तथाहि—

---

लघुरिति । किञ्च एष लघुः कनीयान् रघुपतिः लक्ष्मणः राक्षसानाम् अधिभुवि अधीश्वरे रावणे किञ्च तथा कुमारमेघनादे च किमपि अनिर्वचनीयम् अद्भुतं चरितं व्यतानीत् विस्तारयामास । हि यतः तौ रावणमेघनादौ सपदि सहसा प्रतिघान्धतां क्रोधान्धताम् अधत्ताम् जगृहतुः । पुष्पिताग्रावृत्तम्, अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥ ४७ ॥

(झ) प्रतिसंविधानं प्रतीकारः । रघुशिशोः लक्ष्मणस्य ।

यावदिति । मन्त्राणां प्रभावात् अनधिगता दुर्बोधा गतिः प्रसरः येषां तान् अतएव दुर्भेद्यान् भेत्तुमशक्यान् मेघनादेन इन्द्रजिता प्रणुन्नान् प्रहितान् नागपाशान् विहगपरिवृढस्य पक्षिराजस्य गरुडस्येत्यर्थः अस्त्रं तस्य प्रयोगात् यावत् व्यधूनोत् निरास्यत् अखण्डयत् लक्ष्मण इति शेषः तावत् रक्षसां विनेत्रा शासित्रा रावणेन पुनः क्रोधभूम्ना कोपातिशयेन अतिरभसम् अतिवेगं यथा तथा शतघ्न्या शतं हन्तीति शतघ्नी तया तदाख्यास्त्रेण मर्मणि गाढं विद्धः सन् सहसा मोहनिघ्नः मूर्च्छां गतः हनुमति हनुमदुत्सङ्गे इति भावः न्यपप्तत् निपपात । स्रग्धरावृत्तम् ॥ ४८ ॥

(ञ) अत्र लक्ष्मणे । विमर्दः प्रहारः । भ्रातुर्लक्ष्मणस्य । अधिगम्य ज्ञात्वा । भाविलङ्केश्वरात् विभीषणादित्यर्थः । अक्रममेव युगपदेव करुणः शोकस्थायिभावः प्रियजनानिष्टजनितो रसविशेषः, वीरः उत्साहस्थायिभावः शत्रुप्रतिविधानार्थको रसविशेषः ।

पुरां जेता पूर्वं त्रिपुरविजये यामुदवहत्
स्थितिं तामेवायं रघुपतिवृषाश्रित्य वपुषा ।
क्षणाद्रक्षोनाथानुजमिषुभिराच्छिद्य कणशः
चमूं भस्मीकृत्याप्यनुजमभियात्युत्सुकतमः ॥ ४८ ॥

[ निर्वर्ण्य ] अहो वात्सल्यमहिमा रघुपुङ्गवस्य । येन पुन र्विषयीकृतमात्रामेवानुजस्यावस्थामभिजानाति स्म । [ परितो-निरूप्य सहर्षम् ] दिष्ट्या स्वस्ति रघुकुलकुमाराभ्यामिताभ्या-मुत्पश्यामि । यतस्तावदेतयोरस्मिन् व्यसनमहार्णवे यातुधा-नाधीशेनापि सपरिवारेण कुम्भकर्णवधात् सम्भ्रान्तम् । [ पुन-रेतौ निर्वर्ण्य ] कथमद्यापि प्रमुग्धावेव । विषमाध्यानव्यति-करस्तावदापतितः (ट) । यतः—

उक्तञ्च दर्पणे । इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् । धीरैः कपोतवर्णोऽयं कथितो यमदैवतः । शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् । तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः । अनुभावा दैवनिन्दा भूपातक्रन्दितादयः । वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च । निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः । विषादजड़तोन्माद-चिन्ताद्या व्यभिचारिणः इति । उत्तमप्रकृतिर्वीरः उत्साहस्थायिभावकः । महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः । आलम्बनविभावास्तु विजेतव्यादयो मताः । विजेतव्यादि-चेष्टाद्यास्तस्योद्दीपनरूपिणः । अनुभावास्तु तत्र स्युः सहायान्वेषणादयः । सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः । इति च । तयोः अनुभावैः दैवनिन्दादिभिः सहायान्वे-षणादिभिश्च भाविता चिन्तिता चित्तवृत्तिः यस्य तथोक्तः तथाविधस्य तादृगवस्थस्य लक्ष्मण-स्येति शेषः । समवरुध्यत समरोधि । परितः समन्तात् । रक्षःपृतनया राक्षससेनया । तदा तस्मिन् काले राक्षससेनाभिः स्वनिरोधकाले इति यावत् । प्रत्यकार्षीत् प्रतिकृतवान् ।

पुरामिति । पूर्वं पुरां जेता त्रिपुरारिः शिवः त्रिपुराणां विजये विजयार्थं यां स्थितिम् उदवहत् बभार यादृग्भावेन शत्रून् प्रति तस्थावित्यर्थः अयं रघुपतिवृषा राघ-वेन्द्रः वपुषा शरीरेण तामेव स्थितिम् आश्रित्य तद्रूपेणैव स्थित्वेति यावत् क्षणात् इषुभिः शरैः रक्षोनाथस्य रावणस्य अनुजः तं कुम्भकर्णं कणशः आच्छिद्य खण्डं खण्डं कृत्वे-त्यर्थः चमूमपि राक्षसीं सेनामपि भस्मीकृत्य उत्सुकतमः अतिशयेन व्यग्रः सन् अनुजं लक्ष्मणम् अभियाति अभिगच्छति । शिखरिणीवृत्तम् ॥ ४८ ॥

बहुच्छलानि रक्षांसि रिपवस्त्ववशः स्वयम् ।
एषावस्थापि कपयः सहायास्तेऽपि विक्लवाः ॥ ५० ॥

तत् किमुपक्रमं दैवमस्तीति न जाने (ठ) ।

वास । गन्धर्वराज ! किमेवमाशङ्कसे ? पश्य । जीवनप्रतिबोधितः किलायमचिन्त्यमहिम्नां प्रथमः प्राभञ्जनिः (ड) । सम्प्रति—

उत्स्फूर्जद्रोमकूपः प्रलयपरिमिलत्पांशुवर्षानुकारी
किञ्चिद्भुग्नाग्रपुच्छाप्रतिमविचलनापास्तनक्षत्रचक्रः ।
भूम्नौत्सुक्यानुरूपव्यवसितिरधिकं पर्यवप्लुत्य गत्वा
क्वापि प्राच्यः क्षणार्द्धात् कमपि गिरिमसावाहरन्नाजगाम ॥५१॥

(ट) वात्सल्यमहिमा स्नेहप्रभावः । विषयीकृतमात्मानमिव साक्षात्कृतामिव । अभिजानाति अनुभवतीत्यर्थः मोहं गच्छतीति भावः । व्यसनमहार्णवे विपन्महासागरे । यातुधानाधीशेन राक्षसराजेन, "यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी" इत्यमरः । सम्भ्रान्तं व्याकुलितम् । अन्यथा अस्मिन्नवसरे अन्यदपि एतयोः संहारार्थं प्रयुक्तं स्यादिति भावः । प्रमुग्धावेव प्रकर्षेण मोहं गतावेव । विषमेति । विषमं दारुणम् आध्यानं चिन्ता तस्य व्यतिकरः सम्बन्धः आपतितः उपस्थितः ।

बह्विति । रक्षांसि राक्षसाः बहुच्छलानि रम्भ्रान्वेषणपराणीति भावः रिपवः शत्रवः । स्वयन्तु राम इति शेषः अवशः अचेतन इति यावत् कपयः वानराः सहायाः किन्तु तेऽपि कपयः विक्लवाः सम्भ्रान्ताः व्याकुलाः एषः अवस्था अपि ? रामस्य आपतितेति शेषः ॥५०॥

(ठ) किमुपक्रमं किमारम्भं दैवं किं विदधातीति भावः ।

(ड) जीवदिति । जीवनाय लक्ष्मणस्येति शेषः प्रतिबोधितः औषधानयनार्थं विज्ञापित इति यावत् अचिन्त्यमहिम्नां महाप्रभावाणां प्रथमः अग्रणीः प्राभञ्जनिः मारुतिः हनूमानित्यर्थः ।

उत्स्फूर्जदिति । उत्स्फूर्जन्तः स्फुरन्तः रोमकूपा यस्य तथोक्तः रोमाञ्चितगात्र इत्यर्थः, प्रलये कल्पान्ते परिमिलतां सङ्गच्छतां पांशुवर्षाणां रजोवृष्टीनाम् अनुकारी प्रलयप्रवृष्टरजोराशिरिवेत्यर्थः ततसवर्ण तया आकाशान्निपतनादिति भावः, किञ्चित् भुग्नस्य ईषत् कुञ्चितस्य अग्रपुच्छस्य लाङ्गूलाग्रस्य अप्रतिमेन असदृशेन विचलनेन सञ्चारेण अपास्तानि

चित्र। [विभाव्य सोल्लासम्] देवराज! पश्य।

यथा चन्द्रालोकं कुमुदनिवहश्चुम्बकमणिं
दृषत्सारस्तत्त्वामृतमपि भवाम्भोनिधिगतः।
तथा सम्भाव्यैतौ हनुमदुपनीताद्रिमरुतं
झटित्युज्जृम्भेते किमपि गहनो वस्तुमहिमा॥ ५२॥

[दक्षिणतो विभाव्य] कथमेष लङ्केश्वरः? कल्पावसाननिर्मर्य्यादं पाथ इव पाथोनाथस्य राक्षसबलमाकर्षन् पुनरभ्यमित्रमिति (ढ)।

[विमृश्य] सम्प्रति तु धर्मयुद्धसम्भावनाप्रतिहतबहुतरप्रधानव्यक्ति रावणमेघनादशेषमेतद्राक्षसबलमेताभ्यामवगणितमित्येतावप्युभौ न गणयन्ते परःसहस्रमप्यस्त्रपकीटाः (ण)। [पुनर्लक्ष्मणं निर्वर्ण्य] एवं तु—

प्रक्षिप्तानि नक्षत्रचक्राणि येन तथाभूतः, भूम्ना बाहुल्येन औत्सुक्यस्य अनुरूपा सदृशी व्यवसितिः उद्योगः यस्य तादृशः प्राज्ञः असौ प्राभञ्जनिः अधिकं यथा तथा पर्य्यवप्लुत्य उत्प्लुत्य क्वापि गत्वा चणार्द्धात् कमपि गिरिं पर्वतम् आहरन् आजगाम। जाम्बवदादिभिरौषधाहरणार्थमुक्तो हनूमान् रात्रौ तत्र पर्वते ओषधीमजानन् सर्वमेव पर्वतम् आजहारेति पुराणवार्त्ता। स्रग्धरावृत्तम्॥ ५१॥

यथेति। कुमुदनिवहः चन्द्रालोकं, दृषत्सारः लौहधातुः चुम्बकमणिम् अयस्कान्तं, भवः संसार एव अम्भोनिधिः समुद्रः तं गतः प्राप्तो जन इत्यर्थः तत्त्वामृतं तत्त्वज्ञानरूपममृतं यथा, तथा एतौ रामलक्ष्मणौ हनूमता उपनीतस्य अद्रेः पर्वतस्य गन्धमादनस्य द्रोणाद्रेर्वा मरुतम् ओषधिगन्धवहमिति भावः सम्भाव्य प्राप्य झटिति सहसा उज्जृम्भेते विकासं गच्छतः विगतमोहौ जाताविति भावः। वस्तूनां महिमा प्रभावः किमपि गहनः दुर्बोधः। शिखरिणीवृत्तम्॥ ५२॥

(ढ) कल्पेति। कल्पावसाने प्रलये निर्मर्य्यादं मर्य्यादा स्थितिः तद्रहितम् उद्वेलमिति यावत् पाथ इव जलमिव पाथोनाथस्य समुद्रस्य। अभ्यमित्रम् अमित्रम् अभीति अभ्यमित्रम् अमित्रं शत्रून् प्रतीत्यर्थः।

शाणोत्कीर्णो मणिरिव घनाम्भोदमुक्तो विवस्वान्
निःकोशोऽसिर्झटिति विगलत्कञ्चुकः पन्नगेन्द्रः।
दीव्यत्युच्चैर्लघुरघुपतिः किन्न वा स्यात् किमन्यद्
दिव्यौषध्या जयति महिमा कोऽप्यचिन्त्यानुभावः॥ ५३॥

[ निरूप्य ] कथं प्रक्रान्तमेव कपिराक्षसनासीरचरयोर्भटयोः पुनरायोधनम् (त)। तथाहि—

शितैर्बाणैरेके मृधभुवि परे तीक्ष्णनखरैः
क्रियासातत्येनाप्यहमहमिकाक्रान्तमनसः।
मिथो विध्यन्ति स्म प्रबलतमसम्मर्दविदलत्-
क्षितिक्षोदःपिष्टातकसुरभिवक्षस्तटभृतः॥ ५४॥

(ण) धर्मयुद्धेति। धर्मेण युद्धं धर्मयुद्धं तस्य सम्भावनाया अनुष्ठानेन प्रतिहताः वारिता बहुतराः प्रधानव्यक्तयः यत्र तथाभूतम्। रावणेति। रावणस्य मेघनादस्य तौ शेषौ यस्य तथोक्तम्। एताभ्यां रामलक्ष्मणाभ्याम् अवगणितम् अवज्ञातम्। एतावुभौ अपि रामलक्ष्मणावपीत्यर्थः। अल्पकीटाः राक्षसकीटाः क्षुद्रा राक्षसा इत्यर्थः।

शाणेति। लघुः कनिष्ठो रघुपतिः लक्ष्मणः इवेति सर्वत्र योज्यम्। शाणेन उत्कीर्णः उल्लिखितः मणिरिव घनात् सान्द्रात् अम्भोदात् मेघात् मुक्तः विश्लिष्टः विवस्वान् सूर्य्य इव, निःकोशः कोशात् निष्काशितः असिरिव खड्ग इव विगलन् विश्लिष्यन् कञ्चुकः गात्रत्वक् यस्य तथाभूतः पन्नगेन्द्रः भुजगेन्द्र इव झटिति उच्चैरतिशयेन दीव्यति राजते अस्त्रक्षतप्रशमनेनेति भावः। अत्र अर्थान्तरं न्यस्यति किमिति, दिव्यौषध्या किं वा न स्यात्? सर्वमेव प्रशान्तिं गच्छेदिति भावः अन्यत् किं वक्तव्यमिति शेषः। अस्याः अचिन्त्यः अनुभावो यस्य तथाभूतः कोऽपि अनिर्वचनीयः महिमा माहात्म्यं जयति। मन्दाक्रान्ता-वृत्तम्॥ ५३॥

(त) प्रक्रान्तम् आरब्धम्। कपिराक्षसनासीरचरयोः वानरराक्षससेनाग्रवर्त्तिनोः। भटयोः वीरयोः। आयोधनं युद्धम्।

शितैरिति। क्रियायाः रणव्यापारस्य सातत्येन नैरन्तर्य्येणापि अहमहमिका परस्पर-स्पर्द्धा, अहमहमिका तु सा स्यात् याः परस्परं भवत्यहङ्कारः इत्यमरः। तया आक्रान्तं मनो येषां तथाभूताः, प्रबलतमेन अतिप्रबलेन सम्मर्देन विदलन्ती विदीर्य्यमाणा या क्षितिः

[ सविशेषं निश्चित्य ] तावदन्तरमनयोर्बलयोरधिगम्यमानं प्रातःसन्ध्यायां यावदन्धतमसारुणालोकयोः (थ)। तथाहि—

प्रतिक्षणमियं रक्षःपृतना क्षीयतेतराम्।
यथा तथा प्लवङ्गानामनन्तगुणतैधते ॥ ५५ ॥

वास। गन्धर्वराज! पुनरितो महत् कदनमुपक्रान्तम् (द)

रक्षोनाथो रघूणां त्वरितमभिभुवा रावणिर्लक्ष्मणेन
द्वन्द्वीभूय प्रहृष्यद्भुजबलमहिमाविष्कृतेष्वासशिक्षौ।
दिव्यास्त्राणां प्रयोगप्रतिकृतिमुचितां चाप्नुवानौ मिथोऽमू
मूर्च्छत्कल्पावसानज्वलनपरिभवं सैन्ययोः पर्य्यदाताम् ॥ ५६ ॥

रणभूमिरिति यावत् तस्याः क्षोदांसि चूर्णानि रजांसीत्यर्थः एव पिष्टातकानि चूर्णगन्धद्रव्यविशेषाः तैः सुरभीणि वक्षस्तटानि उरस्थलानि बिभ्रतीति तथोक्ताः, एके भटाः वीराः राक्षसाः शितैः तीक्ष्णैः बाणैः परे वानराः तीक्ष्णनखरैः मृधभुवि रणभूमौ मिथः परस्परं विध्यन्ति स्म। शिखरिणीवृत्तम् ॥ ५४ ॥

(थ) अनयोः बलयोः राक्षससैन्यवानरसैन्ययोः। अन्तरं प्रभेदः, तावत् तथेत्यर्थः अधिगम्यमानं प्रतीयमानम्।। यावत् यथा प्रातःसन्ध्यायां प्रभाते। अन्धतमसारुणालोकयोः गाढ़ान्धकारसूर्य्यातपयोः।

प्रतिक्षणमिति। इयं रक्षसां पृतना सेना यथा प्रतिक्षणं क्षणे क्षणे क्षीयतेतराम् अतिशयेन क्षयं गच्छति। तथा प्लवङ्गानां वानराणाम् अनन्तगुणता अधिकसंख्यतेति भावः एधते वर्द्धते। अनुष्टुब्वृत्तम् ॥ ५५ ॥

(द) कदनं विमर्दनम्। उपक्रान्तं प्रारब्धम्।

रक्षोनाथ इति। रक्षोनाथो रावणः रघूणाम् अभिभुवा रामेण, रावणस्य अपत्यं पुमान् रावणिरिन्द्रजित् लक्ष्मणेन अमू द्वन्द्वीभूतौ रामरावणौ लक्ष्मणेन्द्रजितौ चेत्यर्थः, प्रहृष्यतां प्रवर्द्धमानानां भुजबलानां महिम्ना प्रभावेण आविष्कृता प्रकटिता इष्वासशिक्षा धनुर्वेदशिक्षा याभ्यां तथाभूतौ, उचिताम् अनुरूपां दिव्यास्त्राणां प्रयोगस्य प्रतिकृतिं प्रतीकारम् आप्नुवानौ कुर्वाणौ चेत्यर्थः, मिथः परस्परं सैन्ययोः उभयोः मूर्च्छन् प्रवर्द्धमानः

चित्र । देवराज ! दुरवरोधोऽयमनयोर्महावीरयोर्मिथो-
विमर्दः । तथाहि—

क्ष्वेडाभिः ककुभः पृषत्कनिकरैर्व्योम द्विधा खण्डितै-
र्देहैर्विद्विषतां धरातलमपि प्रच्छादयन्तौ चिरम् ।
कुर्वातेऽश्रुजलाविलेक्षणपथान्येतावकाण्डोच्चर-
द्रोमाञ्चानि सवेपथून्यपि मुहुर्वर्ष्माणि नः पश्यताम् ॥ ५७ ॥

[ सविशेषं विभाव्य ] कथं प्रत्यक्षानुमानाभ्यामुपलभ्यमान-मेकमेव वस्तु विप्रकृष्टान्तरं सम्पद्यते (ध) । तथाहि—

अस्माद्रावणवृत्ताद्राघववृत्तं तु दशगुणं वीक्षे ।
अनुमन्येऽनन्तगुणं पार्श्वपतत्कौणपेन्द्रविनिपातैः ॥ ५८ ॥

[ परितो निरूप्य, सकुतुकाश्चर्य्यम् ]

कल्पावसाने प्रलये यो ज्वलनः अग्निः तस्य परिभव इव परिभवः विध्वंसः तं पर्य्यदातां कृतवन्तावित्यर्थः परस्परं सैन्यदलनं चक्रतुरिति यावत् । स्रग्धरावृत्तम् ॥ ५६ ॥

क्ष्वेडाभिरिति । एतौ रामरावणौ लक्ष्मणेन्द्रजितौ च क्ष्वेडाभिः सिंहनादैः ककुभः दिशः, पृषत्कनिकरैः शरसमूहैः व्योम आकाशं, विद्विषतां शत्रूणां द्विधा खण्डितैः देहैः धरातलमपि प्रच्छादयन्तौ आवृण्वन्तौ सन्तौ पश्यताम् अवलोकयतां नः अस्माकं वर्ष्माणि देहान् चिरम् अश्रुजलेन आविलानि कलुषितानि ईक्षणपथानि दृष्टिपथानि येषां तथा-भूतानि अकाण्डे उच्चरन्तः उद्गच्छन्तः रोमाञ्चाः येषां तथोक्तानि सवेपथूनि सकम्पानि अपि मुहुः पुनः पुनः कुर्वाते । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५७ ॥

(ध) प्रत्यक्षानुमानाभ्यां प्रमाणाभ्यामिति शेषः उपलभ्यमानं प्रतीयमानम् एकमेव वस्तु रामवृत्तमिति भावः विप्रकृष्टान्तरं विप्रकृष्टं सुदूरम् अन्तरं भेदः यस्य तथोक्तं सम्पद्यते सम्भवति ।

अस्मादिति । राघवस्य रामस्य वृत्तं चरितम् अस्मात् रावणवृत्तान्तात् रावणस्य चरितात् युद्धव्यापारादिति भावः दशगुणं तु दशगुणमेव वीक्षे पश्यामि प्रत्यक्षप्रमाणमेतत् । पार्श्वयोः पततां कौणपेन्द्राणां राक्षसप्रवराणां विनिपातैः अनन्तगुणम् असङ्ख्यगुणम् अनुमन्ये अनुमानप्रमाणमेतत् । तदनयोर्महान् विप्रकर्ष इतिभावः । आर्य्यावृत्तम् ॥ ५८ ॥

यावन्तो रजनीचराः प्रहरणोद्घूर्णद्भुजाकेतवः
युध्यन्तोऽभिमुखाः स्फुरद्भुजमदाध्माताः पुरो निर्गताः।
प्रक्षिप्ताशुगजालपक्षपवनाधूते प्रतापानले
चित्रं दाशरथेः क्षणाच्छलभतां यान्ति स्म सर्वेऽपि ते ॥ ५९ ॥

[ सविमर्शम् ] एव किलेयं पाञ्चभौतिकी सृष्टिः (न)।

त्रैलोक्यमप्यपर्य्याप्तं रक्षसां स्थातुमप्यदः।
येषां ते केवलं भूमौ विलिल्युः पञ्चतां गताः ॥ ६० ॥

वाम। गन्धर्वराज! पश्य विस्मयनीयविप्रलम्भौ किलामू रामलक्ष्मणौ (प)। यतः—

यावन्त इति। यावन्तः यत्सङ्ख्यकाः रजनीचराः राक्षसाः प्रहरणानि शस्त्राणि उद्घूर्णन्तः भ्रामयन्तः भुजा, बाहव एव केतवः ध्वजाः येषां तथोक्ताः, स्फुरद्भिः प्रसरद्भिः भुजमदैः हस्तावलेपैः आध्माताः आपूरिताः अभिमुखाः युध्यन्तः पुरः अग्रतः निर्गताः, चित्रम् आश्चर्य्यं सर्वेऽपि ते प्रक्षिप्तानाम् आशुगजालानां शरसङ्घानां पक्षपवनैः आधूते सन्धुक्षिते दाशरथेः रामस्य प्रतापानले क्षणात् क्षणमात्रेणैव शलभतां पतङ्गतां यान्ति गच्छन्ति। शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

(न) एवेति। इयं सृष्टिः पाञ्चभौतिकी क्षित्यादिपञ्चभूतरचितेत्यर्थः किलैव प्रसिद्धैव न तात्त्विकीति भावः। तथाहि

त्रैलोक्यमिति। अदः त्रैलोक्यं त्रिभुवनमपि येषां रक्षसां स्थातुमपि दण्डाकारेण अवस्थातुमपि ननु शयनादिनेति अपिशब्दार्थः। अपर्य्याप्तम् अप्रभूतम् अक्षममिति यावत् ते पञ्चतां गताः निधनं प्राप्ताः केवलं भूमौ विलिल्युः विलयं प्रापुः। यदि पञ्चभिर्भूतैः सृष्टास्तदा पञ्चसु एव विलयस्य युक्तत्वादिति भावः। अत्र ते इत्यत्र तानीति गता इत्यत्र गतानीति च वक्तुमुचितं रक्षसामित्यस्य क्लीवत्वेन एतदन्वयस्यानुपपत्तेरिति सुधीभिर्विभाव्यम् ॥ ६० ॥

(प) विस्मयनीयेति। विस्मयनीयः आश्चर्य्यवत् प्रतीयमानः विप्रलम्भः प्रतारणं ययोः तथोक्तौ रामलक्ष्मणौ। एतावपि रावणेन्द्रजितोः मायया वञ्चिताविति विस्मय इति भावः।

एताभ्यां राघवाभ्यां सकुतुकमिषुभिश्छिद्यमानेषु मूर्द्ध-
स्वेकस्यैकोऽप्यनन्तः किमु सरसगुणो वर्णनीयोऽपरस्य।
एतत् संपश्यतोरप्यतिचिरमनयोः कोऽप्यचिन्त्यः प्रभावः
यत्रोत्साहो न धैर्य्याद् विरमति न शिरश्छेदतः पत्रिणोऽपि ॥६१॥

[ नेपथ्ये ]

भो भोः रामभद्र! किमद्याप्युपेक्षसे दुर्वृत्तमेनम्? कथं वैकक्रियासाध्यमेतावन्तमर्थम्? अवधत्स्व तावत् (फ)।

भवान् सीतां लोकस्त्रिभुवनगतः प्रीतिमुचितां
कनीयान् पौलस्त्यः पुरममरतां स्वां पुनरयम्।
किमत्रान्यत् साक्षात्कृतपरमतत्त्वो मुनिगणः
प्रसादप्रोन्मीलन्मुदि मनसि शान्तिं च लभताम् ॥ ६२ ॥

एताभ्यामिति। एताभ्यां राघवाभ्यां रामलक्ष्मणाभ्यां सकुतुकं सविस्मयमित्यर्थः पुनः पुनः शिरश्छेदप्रयासेऽपि वैफल्यादिति भावः इषुभिः शरैः मूर्द्धसु शिरःसु छिद्यमानेषु एकस्य रावणस्य एकोऽपि मूर्द्धेति भावः अनन्तः भवतीति शेषः न क्षयं गच्छतीति भावः, अपरस्य इन्द्रजितः सरसगुणः उत्साहातिशयः किमु वर्णनीयः नैव वर्णयितुं शक्य इत्यर्थः एतत् शिरसः पुनः पुनरुत्थापनम् अतिचिरं संपश्यतोरपि अनयोः रामलक्ष्मणयोः कोऽपि अचिन्त्यः प्रभावः सामर्थ्यमित्यर्थः अस्तीति शेषः। यत्र प्रभावे सतीति यावत् उत्साहः धैर्य्यात् न विरमति धैर्य्यं न त्यजतीत्यर्थः पत्रिणोऽपि शरा अपि शिरश्छेदतः न विरमन्ति पुनः पुनः शिरश्छेत्तुं गच्छन्तीति यावत्। स्रग्धरावृत्तम ॥६१॥

(फ) दुर्वृत्तमेनं दुराचारं रावणञ्च। कथं वा एकया क्रियया एकैकास्त्रप्रयोगेणेति यावत् साध्यं सम्पाद्यम् एतावन्तम अर्थं रावणस्य रावणेश्च बधरूपमित्यर्थः उपेक्षसे न अवधारयसीति भावः। अवधत्स्व अवधानं कुरु।

भवानिति। भवान् सीतां, त्रिभुवनगतः त्रिलोकीस्थितः लोकः उचितां प्रीतिं सन्तोषं, कनीयान् पौलस्त्यः विभीषणः पुरं लङ्काम्, अयं रक्षोनाथः पुनः स्वां निजाम् अमरतां देवत्वम् अत्र अन्यत् किं वक्तव्यमिति शेषः साक्षात्कृतं परमं तत्त्वं ब्रह्मरूपं वस्तु येन तथाभूतः मुनिगणः प्रसादेन प्रसन्नतया प्रोन्मीलन्ती प्रस्फुरन्ती मुद् हर्षः यस्मिन् तादृशे मनसि शान्तिं लभताञ्च। शिखरिणीवृत्तम् ॥ ६२ ॥

चित्र। [ निशम्य ] कथमेष दिव्यर्षिगणोऽप्येतयोर्वधाय राघवौ त्वरयति ? अथवा दुष्टप्रशान्तिः कस्य न मनःप्रीत्यै ? [ ससम्भ्रमाङ्गुतौत्सुक्यम् ] देवराज ! पश्य—

आभ्यां ब्रह्माच्युतास्त्रस्मरणसुरभिभिर्मार्गणैराघवाभ्यां
मूर्द्धानौ चिच्छिदाते रजनिचरपते रावणस्य क्रमेण।
पश्चाद्रक्षःकबन्धौ मृधभुवि विवशः सोऽपि रक्षोऽवरोधः
क्षोण्यां श्रीदाशरथ्योः शिरसि च वियतः पुष्पवर्षं पपात ॥६२॥

वास। [ नेपथ्याभिमुखमवलोक्य। सोल्लासम् ] गन्धर्वराज ! पश्य तावदेते किल त्रिभुवनशत्रोर्दशकन्धरस्य निधनवृत्तान्त-श्रवणेन प्रमोदनिर्भराः (ब) महर्षयः सुमनसः कमपि महोत्सव-मनुबुभूषन्तो ( भ ) मामेव प्रतीक्षन्ते तद्गच्छाम्येतेषां मनोरथ-सम्पादनाय त्वमप्येतद्वृत्तान्तनिवेदनेन प्रियसखमलकेश्वरं प्रीणय (म)।

[ इति परिक्रम्य निष्क्रान्ताः ]

इति महावीरचरिते षष्ठोऽङ्कः।

---

आभ्यामिति। आभ्यां राघवाभ्यां रामलक्ष्मणाभ्यां ब्रह्माच्युतास्त्रयोः ब्रह्मास्त्रनारायणा-स्त्रयोः स्मरणेन सुरभिभिः सौरभवद्भिः सुतेजितैरिति यावत् मार्गणैः शरैः क्रमेण रजनि-चरपतेः राक्षसेन्द्रस्य रावणस्य मूर्द्धानौ शिरसी चिच्छिदाते छिन्नवन्तौ। पश्चात् अनयोः मस्तक-च्छेदानन्तरं रक्षसः रावणस्य रावणस्य कबन्धः अशिरा देहः मृधभुवि रणभूमौ, सोऽपि रक्षसां अवरोधः अन्तःपुरिकावर्गः विवशः मोहं गतः सन् क्षोण्यां पृथिव्यां, वियतः आका-शात् पुष्पवर्षं श्रीदाशरथ्योः श्रीरामलक्ष्मणयोः शिरसि च पपात। स्रग्धरावृत्तम् ॥ ६२ ॥

(ब) प्रमोदनिर्भराः अतीव प्रमुदिता इत्यर्थः।

(भ) अनुबुभूषन्तः अनुभवितुमिच्छन्तः।

(म) अलकेश्वरं कुबेरम्। प्रीणय सन्तोषय।

इति वि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचिता महावीरचरितनाटकस्य
षष्ठाङ्कव्याख्या समाप्ता।

# सप्तमोऽङ्कः ।

[ ततः प्रविशति शोकाकुला लङ्का ]

लङ्का । [साक्रोशम् ] हा महाराअ दसकंधर । तेल्लक्कवीरलच्छीपड़िग्गहदुल्ललिद ! हा सअलरक्खसलोअपड़िवालणसमत्थदुम्मदभुअदण्ड ! हा पसुवइपादजुअलच्चणपजुत्तमुद्धमुहपुण्डरीअ ! हा केकसीपुत्ततिलअ ! हा बंधुअणवच्छल ! कहिं मए तुमं पेक्खिदव्वो ? हा कुमार कुम्भकण्ण ! हा वच्छ मेहणाद ! कहिं सि ? देहि मे पड़िवअणं [ परितो विलोक्य ] कहं कोबि ण मंतेदि ? [ऊर्द्धमवलोक्य] हा दुट्ठदेव्वदुव्विलसिअ ! कीस एव्वं परिणदं सि ? अहवा को एत्थ भवदो उवालम्भो ? अत्तणो एव्व दुच्चरिदं एदं विपरिणमेदि (क) । [इति सानुक्रोशं रोदिति]

[ततः प्रविशति अलका]

अल । अहो कथमस्य रक्षःपतेरपूर्वः कोऽप्ययं दशापरिपाकः ? यदेतावानपि रक्षः सर्गः क्षणेनैव विभीषणमात्रशेषः संवृत्तः [ शब्दश्रवणं नाटयित्वा परिक्रम्य । ] कथं कनीयसी

(क) हा महाराज ! दशकन्धर ! त्रैलोक्यवीरलक्ष्मीपरिग्रहदुर्ललित ! हा सकलराक्षसलोकप्रतिपालनसमर्थदुर्मदभुजदण्ड ! हा पशुपतिपादयुगलार्चनप्रयुक्तमुग्धमुखपुण्डरीक ! हा केकसीपुत्रतिलक ! हा बन्धुजनवत्सल ! कुत्र मया त्वं प्रेक्षितव्यः ? हा कुमार कुम्भकर्ण ! हा वत्स मेघनाद ! कुत्रासि ? देहि मे प्रतिवचनम् ।—कथं कोऽपि न मन्त्रयति ?—हा दुष्टदैवदुर्विलसित ! कथमेवं परिणतमसि ? अथवा कोऽत्र भवतः उपालम्भः ? आत्मन एव दुश्चरितमेतत् विपरिणमति त्वं ।

उपालम्भः तिरस्कारः । विपरिणमति फलति ।

मे भगिनी प्रत्यग्रभर्तृविरहव्यथाविधुरा क्रन्दन्ती लङ्का ? [उपसृत्य] भगिनि ! समाश्वसिहि समाश्वसिहि (ख)।

लङ्का। [विभाव्य] कहं बहिणिआ मे अलया ? (ग)।

अलका। भगिनि ! समाश्वसिहि समाश्वसिहि। एवं किलेयं लोकयात्रा (घ)।

लङ्का। अयि बहिणिए ! कुदो मे आस्सासो ? जुवइजणमेत्तसेसा संवुत्त म्हि, एको उण कुलतन्तू कुमारविहीसणो क्खु चिट्ठदि त्ति सुणीअदि, सोवि मन्दभाइणीए अधसदाए रिउवक्खं जेव्व सेवेदि (ङ)।

अलका। अयि भगिनि ! मा मैवं, न खलु अस्माकं स रिपुपक्षः।

लङ्का। कहं विअ ? (च)।

अलका। यस्य रिपुः स गतः। तच्च गतं, संप्रति तु निसर्गसुहृदस्माकं त्रिभुवनप्रसिद्धसम्बन्धो दाशरथिः (छ)।

---

(ख) रक्षः सर्गः राक्षससृष्टिः। प्रत्यग्रेति। प्रत्यग्रेण अभिनवेन भर्तृविरहेण या व्यथा तया विधुरा व्याकुला।

(ग) कथं भगिनी मे अलका ?

(घ) लोकयात्रा संसारयात्रा।

(ङ) अयि भगिनि ! कुतो मे आश्वासः। युवतिजनमात्रशेषा संवृत्तास्मि। एकः पुनः कुलतन्तुः कुमारविभीषणः खलु तिष्ठतीति श्रूयते। सोऽपि मन्दभागिन्या अधन्यतया रिपुपक्षमेव सेवते स।

कुलतन्तुः वंशकरः सन्तानः। अधन्यतया दुर्भाग्यतया।

(च) कथमिव ? स।

(छ) यस्य रिपुः यस्य रावणस्येति। सः रावणः। तच्च रिपुत्वमित्यर्थः शत्रुभाव इत्यर्थः। निसर्गसुहृत् स्वभावमित्रम्। त्रिभुवनेति। त्रिभुवने प्रसिद्धः प्रख्यातः सम्बन्धः संबन्धः यस्य तथोक्तः।

लङ्का। आश्वस्य। कहं ईरिसो वि ? (ज)।

अलका। ईदृश एव।

लङ्का। कहं अह्मसामिसु ईरिसो विपरिणदो ? (झ)।

अलका। अपि अननुसन्धाने किमेवं भाषसे ? (ञ)। शृणु।

रघुकुलतिलकेऽस्मिन् भ्रातृमात्रद्वितीये
किमपि पितृनिदेशाद्दण्डकां संप्रविष्टे।
यदुचितममुना ते राक्षसानां विनेत्रा
विहितमयमशेषः कर्मणस्तस्य पाकः॥ १॥

लङ्का। हुं तुमं उण ईरिसे पत्थावे कहं एत्थ उवट्ठिदासि ? (ट)।

अलका। अवधत्स्व अहं किल वैमात्रकेण पौलस्त्येन गन्धर्वराजाच्चित्ररथादमुं वृत्तान्तमुपलभ्य शिष्टबन्धुप्रतिबोधनाय, विभीषणस्य च लङ्काभिषेकसाक्षात्करणाय, रावणापहृतविमानराजस्य पुष्पकस्य च रामभद्रोपस्थानोपदेशदानाय सन्दिष्टा (ठ)।

(ज) कथमीदृशोऽपि ? सं।

(झ) कथमस्माकं स्वामिषु ईदृशः विपरिणतः। सं।

(ञ) अननुसन्धाने अनुसन्धानमकृत्वेति यावत्।

रघ्विति। अस्मिन् भ्रातृमात्रद्वितीये रघुकुलतिलके रामे किमपि कुतश्चिदित्यर्थः पितुर्निदेशात् आज्ञया दण्डकां प्रविष्टे सति अमुना ते तव राक्षसानां विनेत्रा राज्ञा रावणेन यत् उचितं विहितं कृतं तं प्रति तन्नार्याहरणेन अनुचितमनुष्ठितमिति भावः वैपरीत्यलक्षणसम्बन्धेन उचितमनुचितमिति लक्षणया प्रतीतेरिति भावः। तस्य कर्मणः अयम् अशेषः समग्रः पाकः परिणामः। मालिनीवृत्तम्॥ १॥

(ट) हुं त्वं पुनरीदृशे प्रस्तावे कथमत्र उपस्थितासि ? सं।

प्रस्तावे प्रसङ्गे समये इत्यर्थः।

(ठ) वैमात्रकेण विमातृजेन भरद्वाजकन्याजातेन पौलस्त्येन पुलस्त्यपौत्रेण कुवेरेणेत्यर्थः।

लङ्का। अह्मो! कहं भअवदो पसुवइणो वि मित्तं णिधाणाहिवई सअं एव्व उवचरदि रामभद्रं? (ड)।

अलका। अयि! किमत्राश्चर्यम्।

इदं हि तत्त्वं परमार्थभाजाम्
अयं हि साक्षात् पुरुषः पुराणः।
त्रिधा विभिन्ना प्रकृतिः किलैषा
त्रातुं भुवि स्वेन सतोऽवतीर्णा॥ २॥

लङ्का। कहं अह्मसामिणा रक्खसणाहेण एदं ण ओधारिदं? (ढ)।

अलका। अयि सरले! शापमहिम्ना किल मूर्च्छन्मोहः सोऽपि नापराध्यति (ण)।

(ड) अहो! कथं भगवतः पशुपतेरपि मित्रं निधानाधिपतिः स्वयमेव उपचरति रामभद्रम्? सं।

निधानाधिपतिः धनेश्वरः। उपचरति सेवते।

इदमिति। इदं रामरूपं वस्तु इति भावः परमार्थभाजां परमार्थदर्शिनां तत्त्वं हि परमं धनमेव, अयं रामः साक्षात् स्वयं पुराणः पुरुषो हि आदिपुरुष एव। एषा त्रिधा त्रिप्रकारेण विभिन्ना सत्त्वरजस्तमोभेदादिति भावः प्रकृतिः मूलकारणं, "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमरः। सतः साधून् त्रातुं रक्षितुं दुर्जनेभ्य इति शेषः भुविः पृथिव्यां स्वेन आत्मना अवतीर्णा। भूभारहरणार्थमादिपुरुषः स्वयं रामरूपेणावतीर्ण इति निष्कर्षः॥ २॥

(ढ) कथमस्मत्स्वामिना राक्षसनाथेन एतत् न अवधारितम्? सं।

(ण) शापमहिम्ना अभिसम्पातप्रभावेण। नन्दीश्वरस्य तथा वेदवत्याश्च शापयोः महिम्ना। विस्तरस्तु उत्तरकाण्डे यह १६ तथा १७ सर्गे द्रष्टव्यः। मूर्च्छन्मोहः प्रवर्धमानाज्ञानः।

[ नेपथ्ये कलकलः ]

उभे। [ ससम्भ्रममाकर्णयतः ]। [ पुनर्नेपथ्ये ] समवधत्त भोस्त्रिजगच्चराणि भूतानि ! ( त )।

वस्वर्करुद्रसहितः स्वयमेष साक्षाद्
वृद्धश्रवाः समभिनन्दति साधु साध्वीम्।
अग्निप्रवेशपरिनिर्गमशुद्धभावां
सीतां रघूत्तम ! भवत्स्थितिमाद्रियस्व ॥ ३ ॥

अलका। कथमेते दिवौकसोऽपि दशकन्धरगृहनिवास-व्यसनकौलीनशङ्कापनुत्त्यै कृतपावकप्रवेशनिर्गमनां सीतादेवीम् अभिनन्दन्ति ? (थ)·अहह !

पतिव्रतामयं ज्योतिर्ज्योतिषान्येन शोध्यते।
इदमाश्चर्य्यमथवा लोकस्थित्यनुवर्त्तनम् ॥ ४ ॥

---

(त) समवधत्त अवधानं कुरुत। त्रिजगच्चराणि त्रिभुवनस्थितानि।

वस्विति। वसुभिरष्टाभिः अर्कैर्द्वादशभिः रुद्रैरेकादशभिः सहितः परिवृतः एष स्वयं वृद्धश्रवाः इन्द्रः अग्निप्रवेशात् परिनिर्गमेण ततः समुज्ज्वलतया उत्थानेनेति भावः शुद्धः पूतः भावः आशयः चरितमिति यावत् यस्याः तथोक्ताम् अतएव साध्वीं सीतां साधु यथा तथा समभिनन्दति सम्यक् प्रशंसति। हे रघूत्तम ! राम ! भवतः स्थितिं मर्य्यादां पतिव्रताया अपरित्यागरूपामितिभावः। अथवा भवतः स्थितिं वंशवर्द्धनीं सीताम् आद्रियस्व अवलम्बस्व। साध्वीं सीतां गृहाणेति भावः। वसन्ततिलकं वृत्तम् ॥३॥

(थ) दशेति। दशकन्धरस्य रावणस्य गृहे निवास एव व्यसनं दोषः तेन कौलीनं लोकवादः कलङ्क इति यावत् तस्य शङ्कायाः संशयस्य अपनुत्तिः अपनोदनं प्रशमनं तस्यै।

पतिव्रतेति। पतिव्रतामयं सतीत्वरूपं ज्योतिः तेजः अन्येन ज्योतिषा अग्निना शोध्यते शुद्धिं नीयते इदम् अपरेण ज्योतिषा सतीत्वज्योतिःशोधनं आश्चर्य्यम् अपर-ज्योतिषः सतीत्वज्योतिषो बलवत्त्वादिति भावः। अथवा लोकस्थितेः संसारमर्य्यादायाः अनुवर्त्तनम् अनुसरणं कर्त्तव्यमिति शेषः यदेतत् कृतं तत् लोकविश्वासायेति भावः। अनुष्टुब् वृत्तम् ॥ ४ ॥

लङ्का। [ शब्दश्रवणं नाटयित्वा ]। कहं मंगलतरतूररव-मिस्साओ गीदीओ णिसामीअंति ? (द)।

अलका। [नैपथ्याभिमुखमवलोक्य] कथं सीताविशुद्ध्यनुमोदनार्थमवतीर्णाभिरप्सरोभिर्दिव्यर्षिगणैश्च ( ध ) रामभद्रनिदेशेन निष्पादिताभिषेककल्याणो विभीषणः पुष्पकं पुरस्कृत्य रामभद्रमभ्येति। तदेहि तथाविधसहजमहिममहनीयचरितमहानुभावावलोकनेन चक्षुः कृतार्थयावः। (न)

[ इति परिक्रम्य निष्क्रान्ते ]।

[ मिश्रविष्कम्भकः (प) ]

[ ततः प्रविशति पुष्पकं पुरस्कृत्य विभीषणः ]

विभी। अनुष्ठितः किल मया रामभद्रादेशः। तथाहि। सत्कृतं मातलिमनु ( फ )।

अजस्रगलदस्रसंप्लवकिणाङ्गगण्डस्थलाः
स्खलत्कनककङ्कणा नियमितैकवेणीभृतः।

---

(द) कथं मङ्गलतरतूर्य्यरवमिश्राश्च गीतयः निशाम्यन्ते ? सं।

मङ्गलतरेण अतिमङ्गलजनकेन तूर्य्यरवेण तूर्य्यशब्देन मिश्राः संवलिताः निशाम्यन्ते श्रूयन्ते।

(ध) सीतेति। सीतायाः विशुद्धिः अग्नौ शोधनं तस्याः अनुमोदनार्थम् अभिनन्दनार्थम् अवतीर्णाभिः दिव इति शेषः अप्सरोभिः सुरसुन्दरीभिः।

(न) तथाविधेति। तथाविधेन सहजेन स्वाभाविकेन महिम्ना महनीयं पूजनीयं चरितं महान् अनुभावश्च यस्य तथाभूतस्य रामस्येति भावः अवलोकनेन दर्शनेन।

(प) मिश्रविष्कम्भकः सङ्कीर्णविष्कम्भकः। उक्तञ्च दर्पणे—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः। मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः।" अत्र अलका मध्यमा लङ्का नीचेति भावः।

(फ) अनु लक्षीकृत्येत्यर्थः।

क्षमातलविवर्त्तनातिमलिनाम्बरा मोचिताः
प्रयान्ति किल सस्मिताः स्म सुरलोकवन्दिस्त्रियः ॥५॥

[ उपसृत्य ] जयति जयति रामभद्रः । देव ! एतदवसानः किल निर्देशः सम्पादितः (व) ।

वन्दीभिरेधिताः काराः शृङ्खलाभिरलङ्कृताः ।
कार्त्तस्वराभिर्दृश्याभिः पताकाभिश्च साम्प्रतम् ॥६॥

अयं च पुष्पकनामा स विमानराजः ।

असंरुद्धगतेरिष्टप्रवृत्तेर्वशवर्त्तिनः ।
मनोरथस्यानुगुणं सर्वदा यस्य चेष्टितम् ॥ ७ ॥

---

अजस्रेति । अजस्रम् अनवरतं गलतां प्रसरताम् अस्राणां वाष्पाणां संप्लवेन संस्रवेणेत्यर्थः यः किणः मालिन्यरेखेति भावः तस्य अङ्कश्चिह्नं येषु तादृशानि गण्डस्थलानि कपोलदेशा यासां ताः । स्खलन्तः अङ्गस्य कार्श्यात् स्रंसन्तः कनककङ्कणाः स्वर्णवलया यासां तथोक्ताः । नियमिता संयमिता या एका वेणी तां बिभ्रतीति तथाभूताः प्रवासे एकवेणीधरं शिर इति शास्त्रादिति भावः । क्षमातलेषु भूतलेषु विवर्त्तनेन लुण्ठनेन मलिनम् अम्बरं वसनं यासां तथोक्ताः, सुरलोकस्य वन्दिस्त्रियः वन्दीभूता नार्य्यः मोचिताः कारावन्धनादिति भावः अतएव सस्मिताः मन्दहासिन्यः सत्यः प्रयान्ति स्म किल सुरलोकमिति शेषः । पृथ्वीवृत्तम् ॥ ५ ॥

(व) एतदवसानः एतावत्पर्य्यन्तः ।

वन्दीभिरिति । वन्दीभिः हठहृताभिः स्त्रीभिः सुरसुन्दरीभिः एधिताः वर्द्धिताः भृता इत्यर्थः काराः बन्धनागाराणि साम्प्रतं कार्त्तस्वराभिः सुवर्णमयीभिः दृश्याभिः सुदर्शनाभिः शृङ्खलाभिः पताकाभिश्च अलङ्कृताः शोभिताः तासां मोचनेन तदीयाभिः शृङ्खलाभिः ग्रथिताः पताका उत्थापिता इति भावः ॥ ६ ॥

असंरुद्धगतेरिति । न संरुद्धा न प्रतिहता गतिर्यस्य तथोक्तस्य, अप्रतिहतप्रसरस्येत्यर्थः इष्टा इच्छानुसारिणी स्वामिन इति शेषः प्रवृत्तिर्गतिर्यस्य तथाभूतस्य वशवर्त्तिनः वशे स्थितस्य यस्य पुष्पकस्य चेष्टितं चरितं सर्वदा सर्वस्मिन् काले मनोरथस्य सङ्कल्पस्य अनुगुणम् अनुकूलम् अनुसारीत्यर्थः ॥ ७ ॥

रामः। साधु लङ्केश्वर! साधु सम्पादितम् [सुग्रीवं प्रति] सखे वैकर्त्तने! (भ) किमत्रावशिष्यते?

सुग्री। उत्खातस्त्रिभुवनकण्टकोऽतिदृप्य-
द्दोर्दण्डाञ्चितमहिमाप्ययं निकारः।
देव्याश्च प्रतिशमितस्तथात्र सन्धा
निर्व्यूढ़ा प्रगुणविभीषणाभिषेकात्॥ ८॥

सम्प्रति तु द्रोणाद्रिं प्रत्याहरतो हनूमतः सविशेषं गृहीतप्रवृत्तिर्दुर्मनायते किल कुमारभरतः। तं प्रति वार्त्ताहरः प्रविसृज्यतां प्राभञ्जनिः। स्वयमप्यलङ्क्रियतां विमानराजः (म)।

रामः। यदभिरुचितं प्रियवयस्याय। [इति तथा करोति]।

सर्वे। [विमानारोहणं नाटयन्ति]।

सीता। [अपवार्य्य लक्ष्मणं प्रति]। अह्मेहिं सम्पदं कहिं पत्थीअदि? (य)।

लक्ष्म। देवि! रघुकुलराजधानीमयोध्यां प्रति।

सीता। अवि समत्तो सो बणवासस्स अवही? (र)।

---

(भ) वैकर्त्तने! विकर्त्तनस्य सूर्य्यस्य अपत्यं पुमान् वैकर्त्तनिः सुग्रीवः तत्सम्बुद्धौ।

उत्खातेति। अतिदृप्यद्भिः दोर्दण्डैः अञ्चितः प्रशंसितः महिमा यस्य तादृशः त्रिभुवनकण्टकः त्रिलोकशत्रुः रावणः उत्खातः उद्धृतः निहतः इति शेषः। अयमपि देव्याः सीतायाः निकारः रावणधर्षणजः कलङ्कः इति यावत् प्रतिशमितः शान्तिं नीतः। तथा अत्र लङ्कायां प्रगुणस्य प्रकृष्टगुणशालिनः विभीषणस्य अभिषेकात् सन्धा प्रतिज्ञा निर्व्यूढ़ा प्रतिपालिता। प्रहर्षिणीवृत्तम्॥ ८॥

(म) प्रत्याहरतः आनयतः। गृहीतप्रवृत्तिः ज्ञातवृत्तान्तः। वार्त्ताहरः दूतः। प्रविसृज्यतां प्रहीयताम्। प्राभञ्जनिः मारुतिः हनूमानित्यर्थः। अलङ्क्रियतां दीप्यताम् आरोहणेनेति भावः। विमानराजः पुष्पकरथः।

(य) अस्माभिः साम्प्रतं कुत्र प्रस्थीयते? सं।

(र) अपि समाप्तः सः वनवासस्य अवधिः? सं।

लक्ष्म । देवि ! अद्यतनमिव दिनं तत् ।

सर्वे । [ विमानगतिं रूपयन्ति ] ।

सीता । [ साद्भुतम् ] अज्जउत्त ! एदे उण कदमा दूरादो अणिद्धारिददक्खिणोद्देसा आवित्थरिज्जंतसामलत्तणा परिसरा दीसंति ( ल ) ।

राम: । देवि ! नैते भुवां परिसराः, किन्तु

साक्षात् किलाष्टमूर्त्तेस्तस्यैषा मूर्त्तिरम्मयी प्रथमा ।
गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्य्यः ॥ ८ ॥

सीता । जो अह्माणं जेट्ठससुरेहिं किदणिम्माणो त्ति वुड्ढपरंपराए सुणीअदि । एदस्स मज्झे वि किं एदं दूरप्पसारिदं धवलंसुअं विअ अहिणवतिणच्छण्णासु भूमिसु दीसइ ( व ) ।

---

(ल) आर्य्यपुत्र ! एते पुनः कतमा दूरात् अनिर्द्धारितदक्षिणोद्देशाः आविस्तीर्य्यमाणश्यामलत्वाः परिसरा दृश्यन्ते ? सं ।

अनिर्द्धारितः अनिर्णीतः दक्षिणोद्देशः दक्षिणविभागः येषां ते । आविस्तीर्य्यमाणं श्यामलत्वं येषां तथोक्ताः । परिसराः प्रदेशाः ।

साक्षादिति । तस्य प्रसिद्धस्य अष्टौ मूर्त्तयः जलवह्नियजमानसूर्य्यचन्द्राकाशवायुपृथ्वीरूपाः यस्य तथाभूतस्य शिवस्य साक्षात् एषा अम्मयी जलमयी प्रथमा मूर्त्तिः नृभिः मानुषैः अपरिच्छेद्यम् अनिर्द्धार्य्यम् आत्मनः गाम्भीर्य्यं गभीरत्वं यस्य तथाभूतः सागरः सगरैः खानितत्वात् तथोक्त इति भावः गीतः कीर्त्तितः, विधेयप्राधान्यात् पुंस्त्वम् । आर्य्यावृत्तम् ॥ ८ ॥

(व) योऽस्माकं ज्येष्ठश्वशुरैः कृतनिर्माण इति वृद्धपरम्परया श्रूयते । एतस्य मध्येऽपि किमेतत् दूरप्रसारितं धवलांशुकमिव अभिनवतृणच्छन्नासु भूमिषु दृश्यते ? सं ।

ज्येष्ठश्वशुरैः सगरपुत्रैः सगराश्वमेधीयतुरगान्वेषिभिरिति भावः । दूरप्रसारितं सुदूरविस्तारितम् धवलांशुकमिव शुभ्रवसनमिव ।

लक्ष्म । देवि !

सोत्साहं धृतशासनैः सकुतुकैर्वृक्षौकसां नायकैः

दिक्पर्य्यन्तधराधरेन्द्रशिखराण्यानाय्य निर्मापितः ।

कल्पान्तावधिवन्दनीयमहिमा लोकस्य सेतुर्नवः

कीर्त्तिस्तम्भ इवायमार्य्यचरितस्याम्भोनिधौ लक्ष्यते ॥ १० ॥

रामः । [ अङ्गुल्या निर्दिशन् ] वत्स !

एता भुवः परिचिनोषि मिलत्तमाल-

च्छायान्धकारिततुषारनिकुञ्जपुञ्जाः ।

उन्मूर्च्छदच्छमलयाचलतुङ्गशृङ्ग-

प्राग्भारनिष्पतितनिर्झरपूरभाजः ॥ ११ ॥

लक्ष्म । आर्य्य ! ता एवैताः । नातिदूर एव तावदासां म जीर्णकन्दरः (अ) ।

सोत्साहमिति । सोत्साहं साग्रहमिति यावत् धृतं गृहीतं शासनम् आदेशः यैः तथोक्तैः सकुतुकैः कुतूहलिभिः वृक्षौकसां वृक्षवासिनां वानराणामित्यर्थः नायकैः अधिपतिभिः दिक्पर्य्यन्तेभ्यः दिशां प्रान्तेभ्यः धराधरेन्द्राणां शैलराजानां शिखराणि शृङ्गाणि आनाय्य आहार्य्य निर्मापितः निर्माणं कारितः कल्पान्तावधि आकल्पान्तं लोकस्य जगतः वन्दनीयः प्रशंसनीयः महिमा प्रभावः यस्य तथाभूतः अम्भोनिधौ सागरे नवः सेतुः संक्रमः आर्य्य-चरितस्य रामचरितस्य कीर्त्तिस्तम्भ इव लक्ष्यते दृश्यते । शार्दूलविक्रीडितं वृत्तम् ॥१०॥

एता इति । मिलतां सङ्गच्छतां सङ्घवर्त्तिनामित्यर्थः तमालानां छायाभिः अन्धकारिताः आवृता इति यावत् अतएव तुषाराः शीतलाः निकुञ्जपुञ्जाः लतादिपिहितवनोद्देशाः यासु ताः, उन्मूर्च्छतां प्रवर्द्धमानानाम् अच्छानां निर्मलानां मलयाचलस्य तुङ्गानाम् उन्नातानां शृङ्गाणां प्राग्भारेभ्यः विस्तारेभ्यः निष्पतितानां निर्गलितानां निर्झराणां पूरान् प्रवाहान् भजन्ते इति तथोक्ताः, एताः समक्षं दृश्यमाना इति भावः भुवः भूप्रदेशान् परिचिनोषि प्रत्यभिजानासि ? वसन्ततिलकं वृत्तम् ॥ ११ ॥

(अ) आसां भुवाम् । जीर्णकन्दरः पुरातनगुहा

गर्जाजर्जरितासु दिक्षु वधिरे तत्स्फूर्जथुस्फूर्जिते
व्योम्नि भ्राम्यति दुष्प्रभञ्जनजवादभ्रेऽप्यदभ्रे मुहुः।
आक्षिप्यान्धयति द्रुमान्धतमसे चक्षुः प्रविश्य क्षपा
यत्रासीत् क्षपिता क्षरज्जलधरे त्वक्सारलक्षीकृते ॥१२॥

सीता। [स्वगतम्] अहो! प्पमादो कहं मह मंदभाइणीए दुट्ठदेव्वेहिं एदे वि महाणुहावा ईरिसं अवत्थन्तरं अनुहाविदा (ष)।

विभो। देव रामभद्र! दृश्यन्ते किल एताः कावेरीतीरभूमयः।

यत्पर्य्यन्तमहीध्रसीम्नि कुहलीमाध्वीकधारोद्गिरद्-
धृष्यत्पूगवनीघनीकृततलैस्तुङ्गैर्जरच्छाखिभिः।
लक्ष्यन्ते विविधाश्रमाः स्थिरतपःस्वाध्यायसाक्षात्कृत-
ब्रह्माणो निवसन्ति यत्र मुनयः कल्पस्थितेः साक्षिणः॥ १३ ॥

गर्जेति। गर्जैः गर्जनैः आजर्जरितासु सम्यग् जर्जरतां गतासु दिक्षु तस्य अभ्रस्य स्फूर्जथुना वज्रनिर्घोषेण स्फूर्जितं दीपितं यत्र तस्मिन् व्योम्नि आकाशे वधिरे श्रवणेन्द्रियशक्तिहारके सति अदभ्रे वहुलेऽपि, अदभ्रं वहुलं बहित्यमरः। अभ्रे मेघे दुष्प्रभञ्जनजवात् प्रचण्डवायुवेगात् मुहुरजस्रं भ्राम्यति सञ्चरति सति चक्षुराक्षिप्य आकृष्य अन्धयति अन्धीकुर्वति द्रुमैर्वृक्षैः अन्धतमसे स्वभावादेव गाढान्धकारे इत्यर्थः क्षरन्तः वर्षन्तः जलधरा यस्मिन् तादृशे त्वक्सारैः वंशगुच्छैः लक्षीकृते चिह्नित यत्र जीर्णकन्दरे प्रविश्य क्षपा रात्रिः क्षपिता नीता आवाभ्यामिति शेषः आसीत्। शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

(ष) अहो प्रमादः कथं मम मन्दभागिन्या दुर्दैवैः एतेऽपि महानुभावाः ईदृशं अवस्थान्तरम् अनुभाविताः? सं।

प्रमादः दुःखम्।

यदिति। यासां पर्य्यन्तमहीध्रस्य प्रान्तवर्त्तिनो गिरेः सीम्नि सीमायां कुहलीनां ताम्बूलीलतानां माध्वीकधारां मकरन्दप्रवाहम् उद्गिरतां धृष्यतां स्फूर्जतां पूगानां

यतो नातिदूर एव किल अवाच्यां लोपामुद्रापरिष्कृत-परिसरे दीप्यति कौम्भसम्भवं ज्योतिः (स)।

रामः। कथमतिक्रान्तमागस्त्यमाश्रमपदम्।

अयं वारां राशिः किल मरुरभूद् यद्विलसितैः
अयं विन्ध्यो येनाहृतविहृतिराध्मानमजहात्।
विलिल्ये यत्कुक्षिस्थितशिखिनि वातापिवपुषा
स कासां वाणीनां मुनिरकलितात्मास्तु विषयः॥ १४॥

तदप्रमेयविभवा विश्वान्तरात्मसाक्षिणः ते महात्मानः कुतश्च नाभिवन्द्याः (ह)।

सर्वे। [ तथा कुर्वन्ति ]

---

क्रमुकवृक्षाणां वनीभिः श्रेणीभिः घनीकृतानि निविडीकृतानि तलानि येषां तैः तुङ्गैः उन्नतैः जरच्छाखिभिः जीर्णतरुभिः उपलक्षिता इति शेषः विविधा बहवः आश्रमाः तपोवनानि लक्ष्यन्ते दृश्यन्ते यत्र स्थिरेण तपसा स्वाध्यायेन वेदाध्ययनेन च साक्षात्कृतं प्रत्यक्षीकृतं ब्रह्म परमार्थतत्त्वं यैः तथाभूताः, कल्पस्थितेः साक्षिणः मन्वन्तरपुराणाः इति भावः मुनयः निवसन्ति। शार्दूलविक्रीडितं वृत्तम्॥ १३॥

( स ) अवाच्यां दक्षिणस्याम्। लोपामुद्रया स्वपत्न्या परिष्कृतः परिसरः प्रदेशः तस्मिन्। कौम्भसम्भवं कुम्भसम्भवः अगस्त्यः, अगस्त्यः कुम्भसम्भव इत्यमरः। तस्येदं कौम्भसम्भवम्। ज्योतिः तेजः।

अयमिति। अयं वारां राशिः समुद्रः यस्य अगस्त्यस्य विलसितैः गण्डूषेषु पानैरिति भावः। मरुः निर्जलः अभूत् किलेति प्रसिद्धौ। अयं विन्ध्यः पर्वतविशेषः येन अगस्त्येन आहृता अपनीता शमिता इत्यर्थः विहृतिः उच्छ्राय इति यावत् तस्य तथाभूतः सन् आध्मानं गर्वं अजहात् तत्याज, वातापिस्तदाख्यो दानवः तस्य वपुः शरीरं तेन यस्य कुक्षौ जठरे स्थितः शिखी अग्निः तस्मिन् विलिल्ये भस्मीभूत इत्यर्थः अकलितः अगृहीतः आत्मा स्वरूपं यस्य तथाभूतः स मुनिः कासां वाणीनां वाचां विषयः अस्तु भवतु। न कथमपि केनापि निर्वक्तुं शक्य इति निष्कर्षः। शिखरिणीवृत्तम्॥ १४॥

( ह ) अप्रमेयेति। न प्रमेयः प्रमातुं शक्यः विभवः प्रभावः येषां तथोक्ताः। विश्वस्य जगतः यः अन्तरात्मा ईश्वर इत्यर्थः तस्य साक्षिणः साक्षात् द्रष्टारः।

[ आकाशे ]

सानुजस्त्वं प्रजाः शाधि कल्पान्तस्थायि ते यशः ।
नामापि राम ! शृण्वतामस्मृतत्वाय कल्पताम् ॥ १५ ॥

रामः । [ आकर्ण्य ] कथमशरीरिण्या गिरा परमनुगृहीतो महामुनिवन्दारुः (च) ।

[ इतरे अभिनन्दन्ति ]

विभो ! देव रामभद्र ! एतास्ताः पम्पापर्य्यन्तभूमयः यासु बहोः कालादनुभूयमानानि अपि अभिज्ञानानि बलाच्चक्षुराकर्षन्ति (क) । तथाहि—

बाणेनैकेन विद्धं विलसति पुरतस्तज्जरत्तालखण्डं
सोऽपि क्रीडाकपित्वं चणमिषुनिवहैरन्वभूदत्र बाली ।
पादाङ्गुष्ठेन घातात् त्वमिह हि सकुतुकं प्राक्षिवः कूटमस्थ्नां
दृष्टं सौमित्रिणास्मिन् हनुमति भवतैवोत्तरीयं च देव्याः ॥१६॥

सानुज इति । त्वं सानुजः अनुजैः सह वर्त्तमानः सन् प्रजाः जनान्, प्रजा स्यात् सन्ततौ जने इत्यमरः । शाधि पालय । ते तव यशः कल्पान्तस्थायि आप्रलयं तिष्ठत्विति यावत् । हे राम ! नाम तवेति शेषः शृण्वतां कीर्त्तयतामपि अमृतत्वाय मुक्तये कल्पतां प्रभवतु ॥ १५ ॥

( च ) अशरीरिण्या आकाशसञ्चारिण्या । गिरा वाचा । महामुनिरगस्त्यः तस्य वन्दारुः सेविता अहमिति शेषः ।

( क ) पम्पेति । पम्पा नाम सरः तस्याः पर्य्यन्तभूमयः प्रान्तभूप्रदेशाः । अनुभूयमानानि प्रतीयमानानीत्यर्थः ।

बाणेनेति । पुरतः अग्रतः एकेन बाणेन विद्धं तत् प्रसिद्धं पूर्वानुभूतं वा जरत् जीर्णं तालखण्डं सप्ततालमिति यावत् विलसति प्रतिभाति । अत्र सोऽपि बाली चणं चणमात्रमेवेत्यर्थः इषुनिवहैः शरसमूहैः क्रीडाकपित्वं क्रीडनकवानरपुत्तलत्वमिति यावत् अन्वभूत् प्रापेत्यर्थः । शरविद्धः पञ्चतां गत इति भावः । इह अस्मिन् प्रदेशे

सीता। [स्वगतम्] किं णाम मह उत्तरीअं अज्जउत्तेण हनुमंतस्स हत्थे दिट्टं? (ख)।

रामः। [सस्मरणम्] हे देवि! तदा किल वैक्लव्यादपक्रियमाणाया भवत्याः प्रभ्रष्टमनसूयानामाङ्कमुत्तरीयमस्माभिः प्रथममभिज्ञानमासादितम् (ग)।

दृशोः शरच्छीतकरप्रकाशः
कायेऽपि कर्पूरपरागपूरः।
स्वान्तेऽपि सान्द्रामृतकुम्भसेकः
तदा यदासीत् किल दृष्टमात्रम्॥ १७॥

[सीता लज्जां नाटयति]

लक्ष्म। अयम्

त्वं सकुतुकं पादाङ्गुष्ठेन घातात् निक्षेपात् अस्थ्नां दुन्दुभिदानवस्य कङ्कालानामित्यर्थः कूटं राशिं प्राक्षिपः अस्मिन् प्रदेशे हनुमति हनुमत्सकाशे देव्याः सीतायाः उत्तरीयञ्च वसनं सौमित्रिणा लक्ष्मणेन सह भवता दृष्टम् पादाङ्गुष्ठेन इत्यादिषु सौमित्रिः पादघातादिह हि सकुतुकं प्राक्षिपत् कूटमस्थ्नाम्। कावन्धं दृष्टमस्मिन् हनुमति भवतैवोत्तरीयञ्च देव्याः॥ इति प्रामादिकः पाठः। पञ्चमेऽङ्के दुन्दुभिकङ्कालस्य रामपादाङ्गुष्ठेन प्रक्षेप उक्त इह तु सौमित्रिः प्राक्षिपदिति पौर्वापर्य्यविरोधः सुधीभिश्चिन्त्यः। स्रग्धरावृत्तम्॥ १६॥

(ख) किं नाम मम उत्तरीयम् आर्य्यपुत्रेण हनुमतो हस्ते दृष्टम्?

(ग) वैक्लव्यात् व्याकुलत्वात्। अभिज्ञानं चिह्नम्।

दृशोरिति। तदा तस्मिन् काले यत् उत्तरीयं दृष्टमात्रं किल दृष्टमात्रमेव दृशोश्चक्षुषोः शरदः शरत्कालस्य यः शीतकरश्चन्द्रः तस्य प्रकाशः स्फुरणं चन्द्रवदानन्दजननमिति भावः कार्य्ये शरीरेऽपि कर्पूरपरागपूरः कर्पूररजःसञ्चयः, स्वान्ते मनसि अपि, स्वान्तं हृन्मानसं मन इत्यमरः। सान्द्रः घनः अमृतकुम्भस्य सेकः आसीत्। उपजातिवृत्तम्॥ १७॥

तातस्य मित्रं किल गृध्रराजः
तं पापमस्मिन् सहसानुबध्नन् ।
गात्रं जराजर्जरितं विहाय
यशःशरीरं नवमाललम्बे ॥ १८ ॥

सीता । [ स्वगतम् ] कहं मह कारणादो तादिसाणं वि महानुहावाणं ईरिसो अवत्थाविसेसो णिसामीअदि (घ) ।

सुग्री । देव ! अतिक्रम्यन्ते किलैता दण्डकासीमानः ।
यत्र तेऽपि स्वसुः कर्णनासाच्छेदप्रहिंसया ।
सानुप्लवाः क्वापि यातास्त्रिमूर्द्धखरदूषणाः ॥ १९ ॥

सीता । [ वेपमाना ] । अह्मो कहं पुणोवि जेव्व रक्खसा सुणीअंति (ङ) ।

रामः । देवि ! अलं शङ्कया अभिधानमात्रमवशिष्यते (च) ।

तातस्येति । तातस्य पितुर्दशरथस्य मित्रं सुहृत् किलेति प्रसिद्धौ गृध्रराजो जटायुः अस्मिन् प्रदेशे तं पापं रावणमिति यावत् सहसा अनुबध्नन् अनुधावन् सहसा झटिति जरया वार्द्धकेन जर्जरितम् अतिजीर्णं गात्रम् अङ्गं विहाय त्यक्त्वा नवं नूतनं यशःशरीरम् आललम्बे जग्राह । सीतां हरता रावणेन सह युद्धं कृत्वा तत्प्रहारेण निकृत्तपक्षः प्राणान् परित्यज्य यशोराशिं लेभे इति निष्कर्षः । उपजातिवृत्तम् ॥ १८ ॥

( घ ) कथं मम कारणात् तादृशानामपि महानुभावानाम् ईदृशोऽवस्थाविशेषो निशाम्यते सं ।

अवस्थाविशेषः निधनम् । निशाम्यते श्रूयते ।

यत्रेति । यत्र दण्डकासीमायां ते प्रसिद्धाः त्रिमूर्द्धखरदूषणाः सानुप्लवाः अनुप्लवैः सहचरैः राक्षसैः सहिताः स्वसुः भगिन्याः शूर्पणखायाः कर्णनासाच्छेदनस्य लक्ष्मणकृतस्येति भावः प्रहिंसया प्रतीकारेच्छया क्वापि याताः निधनं प्राप्ता इत्यर्थः कर्णनासाच्छेदप्रहिंसया इत्यत्र कर्णनासौष्ठविचिचीर्षया इति प्रामादिकः पाठः ॥ १९ ॥

( ङ ) वेपमाना कम्पमाना ।

अहो कथं पुनरपि एव राक्षसाः श्रूयन्ते सं ।

( च ) अभिधानमात्रं नाममात्रम् ।

शरासनस्य टङ्कारात्सौमित्रेः केवलं किल ।
रक्षसां प्रलयः सिंहगर्जनाद्दन्तिनां यथा ॥ २० ॥

[ निरूप्य ] किमन्यादृशीव गतिरस्य विमानराजस्य (छ) ।

विभी । देव ! अत्युच्चैः किलायं सह्यः सानुमान् । एनमतिक्रम्य गम्यते किल आर्य्यावर्त्तः । तदतिक्रमणाय इदमपि मध्यमलोकसान्निध्यं किञ्चिदुज्झति (ज) ।

लक्ष्म । द्रष्टव्यः किल उत्तमपुरुषपदलाञ्छितो मध्यमलोकः (झ) ।

[ सर्वे उच्चैर्गतिवेगं निरूपयन्ति ]

रामः । [ निरूप्य सविस्मयम् ] ।

यः पूर्वेषां नः कुलस्य प्रतिष्ठा
देवः साक्षादेष धाम्नां निधानम् ।
त्रय्याः सारः कोऽपि मूर्त्तो विवस्वान्
प्रत्यासन्नः पुष्पकारोहणेन ॥ २१ ॥

शरासनस्येति । केवलं सौमित्रेः लक्ष्मणस्य शरासनस्य धनुषः टङ्कारात् सिंहस्य गर्जनात् दन्तिनां हस्तिनां यथा तथा रक्षसां प्रलयः संहारः किल निश्चयेन अभूदिति शेषः ॥ २० ॥

(छ) किमिति । अन्यादृशीव अन्यप्रकारेव । विमानराजस्य पुष्पकरथस्य ।

(ज) अत्युच्चैः अत्युन्नतः । सह्यः तदाख्यः । सानुमान् पर्वतः । आर्य्यावर्त्तः विन्ध्यहिमालययोर्गिर्य्योर्मध्यवर्त्ती देशः, आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोरित्यमरः । इदमपि पुष्पकमपि । मध्यमलोकः पृथिवी तस्य सान्निध्यं सामीप्यम् । उज्झति त्यजति ।

(झ) उत्तमेति । उत्तमपुरुषः विष्णुः तस्य पदैः लाञ्छितः विष्णुपदसंज्ञया विख्यातः मध्यमलोकः आकाशप्रदेशः भुवर्लोक इत्यर्थः वियत् विष्णुपदं वापि पुंस्याकाशविहायसि इत्यमरः । तथा च विक्रमोर्वश्यां कालिदासः । पितुः पदं मध्यममुत्क्रमन्ती ।

य इति । यः नः अस्माकं पूर्वेषां पूर्वपुरुषाणां मन्वादीनां कुलस्य प्रतिष्ठा उद्-

[ सर्वे कपोतकेन (ञ) प्रणमन्ति ] ।

सीता । [ ऊर्द्ध्वैर्निरूप्य ] अह्मो कहं दिणम्मि वि तारआचक्कं विअ एदं दीसदि (ट) ।

रामः । देवि ! तारकाचक्रमेवैतत् अतिविप्रकर्षाद्रविकिरणप्रतिहतचक्षुर्भिर्न दृश्यते किल दिवसे । अधुना स विमानारोहणाद् अपास्तः (ठ) ।

सीता । [ सकुतुकम् ] कहं गअणवाडिआए फुल्लाइं खकुसुमाइं व्व दीसंदि (ड) ।

रामः । [ समन्तादवलोक्य ] कथमपरिच्छेद्यदिग्विभागमिव (ढ) सम्प्रति जगत् । यतः—

संस्तूयन्ते विप्रकर्षात् भौमा नोपाधयः स्फुटम् ।
आन्तरीक्षाः पुनरमी सर्वतः सदृशा इव ॥ २२ ॥

भवत्येवं, धाम्नां तेजसां निधानम् आश्रयः त्रय्याः वेदत्रयस्य कोऽपि अनिर्वचनीयः मूर्त्तः शरीरी सारः उत्कर्षः एक देवः विवस्वान् सूर्य्यः पुष्पकस्य आरोहणेन साक्षात् प्रत्यासन्नः सन्निहितः दृश्यते इति शेषः । शालिनीवृत्तम्, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ २१ ॥

( ञ ) कपोतकेन कपोताकारेण अञ्जलिपुटेनेत्यर्थः ।

( ट ) अहो कथं दिनेऽपि तारकाचक्रमिव एतत् दृश्यते ? सं ।

तारकाचक्रमिव नक्षत्रपुञ्जमिव ।

( ठ ) अतिविप्रकर्षात् अतिदूरत्वात् । रवीति । रविकिरणैः सूर्य्यरश्मिभिः प्रतिहतं चक्षुर्येषां तैः । सः रविः । अपास्तः अधः कृतः ।

( ड ) कथं गगनवाटिकायाः फुल्लानि खकुसुमानीव दृश्यन्ते ? सं

गगनमेव वाटिका उद्यानवाटी तस्याः ।

( ढ ) अपरिच्छेद्येति । अपरिच्छेद्यः परिच्छेत्तुमशक्यः दिशां विभागो यस्य तथाभूतम् ।

संस्तूयन्त इति । अमी भौमाः पार्थिवाः उपाधयः नामानि विप्रकर्षात् दूरत्वात्

सुग्री । देव ! भ्रातुः सौहार्देन विधेयीकृतो यदृच्छया दिगन्तेषु विचरन्नभ्युपपन्नवानस्मि (ण) । तथाहि—

उदयास्ताचलावेतौ यत्क्रोडे बाल्यवार्द्धके ।
विस्रम्भाच्चन्द्रसूर्य्याभ्यामतीयेते विनिर्भयम् ॥ २३ ॥

अवधत्तामितो देवः ।

कैलासाञ्जनशैलावेतौ तुल्योन्नतत्वपरिणाहौ ।
चन्दनमृगमदलेपं गमितौ क्षौण्या नु वक्षोजौ ॥ २४ ॥

इतश्चायं काञ्चनाचलः । परतश्चायमभ्रङ्कषशिरः शिखरी गन्धमादनः । ततः परस्मादगम्या मादृशां भूमयः (त) ।

रामः । [ परितो विलोक्य । ससंभ्रमाद्भुतम् ] कथमेकपद एव सर्वमहो चक्षुर्गोचरः । परिच्छेद्या च सर्गस्थितिः ? (थ) ।

---

स्फुटं प्रकटं यथा तथा न संस्तूयन्ते न परिचीयन्ते । अमी पुनः प्रदेशाः आन्तरीक्षाः अन्तरीक्षदेशाः सर्वतः समन्तात् सदृशा इव समाना इव असमाना अपीति भावः दृश्यन्ते इति शेषः ॥ २२ ॥

( ण ) भ्रातुरिति । भ्रातुर्वालिनः सौहार्देन मित्रत्वेन विधेयीकृतः वशीकृतः । अभ्युपपन्नवान् परिज्ञातवान् ।

उदयेति । एतौ उदयास्ताचलौ उदयाद्रिरस्ताचलश्च पूर्वापरयोर्दिशोर्दृश्येते इति शेषः । ययोः क्रोडे उत्सङ्गे चन्द्रसूर्य्याभ्यां विनिर्भयं विशेषेण भयरहितं यथा तथा बाल्यवार्द्धके अतीयेते अतिक्रम्येते उदयाद्रौ बाल्यम् अस्ताद्रौ च वार्द्धकमतिक्रम्येते इति यावत् ॥ २३ ॥

कैलासेति । एतौ कैलासाञ्जनशैलौ कैलासाद्रिरञ्जनाद्रिश्चेत्यर्थः तुल्यौ समौ उन्नतत्वपरिणाहौ तुङ्गत्वविस्तारौ ययोः तथाभूतौ क्षौण्याः पृथिव्याः चन्दनमृगमदयोः लेपं क्रमेणेति भावः गमितौ प्रापितौ वक्षोजौ नु स्तनौ किम् ? नु वितर्के । आर्य्यावृत्तम् ॥ २४ ॥

(त) काञ्चनाचलः हेमाद्रिः । अभ्रङ्कषशिरः गगनस्पर्शिशृङ्गः ।

(थ) सर्वं जगदिति शेषः । अहो आश्चर्य्यम् । चक्षुर्गोचरः दृष्टिविषयः । परिच्छेद्या परिच्छेत्तुं शक्या निर्धार्य्येत्यर्थः सर्गस्थितिः सृष्टिमर्य्यादा ।

सीता। अह्मो एदं किं वि अदिट्ठपुव्वं असादिसं जं दीसइ ण माणुसो णावि पसु (द)।

रामः। देवि! अश्वमुखं किन्नरमिथुनमेतत् प्रायेणैतासु भूमिषु एवंविधानामेव भूयसां प्रचारः (ध)।

विभी। कथं सम्मुखमेवाभ्येति, प्रायेणालकेश्वरादेशधारिणा अनेन भवितव्यम् (न)।

[ नेपथ्ये ]

देव! दिनकरकुलमणे! रामभद्र! भवन्तमेकपिङ्गाचलेश्वरनिदेशादुपश्लोकयितुं साकेतं प्रस्थितयोरावयोर्यात्रासुकृतपरिणामादन्तराल एव चक्षुर्विषयोऽसि। तन्निदेशपारतन्त्र्यमपि भूयसे गुणाय यत् पुराणस्यैव पुंसोऽभिव्यक्तिपर्य्यायनिष्ठं महः साक्षात्क्रियते (प)। [ इति प्रदक्षिणीकृत्याभिवन्देते ]।

[ सर्वे निरूपयन्ति ]

[ पुनर्नेपथ्ये किन्नरः ]।

(द) अहो एतत् किमपि अदृष्टपूर्वम् असादृशमेव दृश्यते न मानुषः नापि पशुः ? सं।

(ध) अश्वमुखम् अश्वस्येव मुखं यस्य तादृशम्। किन्नरमिथुनं निकृष्टदेवयोनिविशेषयुगलम्। भूयसां बहूनाम्।

(न) अलकेश्वरादेशधारिणा अलकेश्वरः कुवेरः तस्य आदेशधारिणा वार्त्तावहेन।

(प) एकपिङ्गेति। एकपिङ्गाचलः कैलासः तस्य ईश्वरः कुवेरः तस्य निदेशात् आदेशात्। उपश्लोकयितुं स्तोतुम्। साकेतम् अयोध्याम्। प्रस्थितयोः गतयोः गच्छतोरिति यावत्। यात्रासुकृतपरिणामात् प्रयाणपुण्यपरिपाकात् अन्तराल एव मध्य एव चक्षुर्विषयः दृष्टिगोचरः। तदिति। तस्य कुवेरस्य निदेशः आज्ञा तस्य पारतन्त्र्यम् अधीनत्वम्। भूयसे समधिकाय गुणाय उपकाराय जातमिति शेषः। यत् यतः पुराणस्य पुंसः आदिपुरुषस्य अभिव्यक्तयः अवतारेषु प्रकाशाः तासां पर्य्यायेषु निष्ठा स्थितिर्यस्य तादृशं महः ज्योतिः भवानिति भावः।

आपन्नवत्सल ! जगज्जनतैकबन्धो !
विद्वन्मरालकमलाकर ! रामचन्द्र ! ।
जन्मादिकर्मविधुरैः सुमनश्चकोरैः
आचम्यतां तव यशः शरदां सहस्रम् ॥ २५ ॥

[ तत्रैव किन्नरी ]

यावत् फणीन्द्रशिरसि क्षितिचक्रमेतत्
यावत् पुनर्ग्रहगणैः शबलं विहायः ।
वैदेहि ! तावदमलो भुवनेषु पुण्यः
श्लोकः प्रशस्तचरितैरुपगीयतां ते ॥ २६ ॥

[ दम्पती मन्दाक्षं नाटयतः ] (फ)

आपन्नेति । हे आपन्नवत्सल ! विपन्नजनप्रिय ! जगतां जनता लोकसमूहः तस्या एकः अद्वितीयः बन्धुः मित्रं तत्सम्बुद्धौ । विद्वांस एव मरालाः हंसाः तेषां कमलाकरः तड़ागः तत्सम्बुद्धौ सुधीजनसेवित इत्यर्थः रामचन्द्र ! जन्मादिकर्मभिर्विधुरैः विक्लवैः सुमनसः मनीषिण इत्यर्थः एव चकोराः पक्षिविशेषाः तैः शरदां वत्सराणां सहस्रं तव यशः अमृतमिति भावः आचम्यतां पीयतामित्यर्थः । अत्र विदुषां मरालत्वारोपः रामचन्द्रस्य कमलाकरत्वारोपे निमित्तमिति सुमनसां चकोरत्वारोपः यशसः चार्थस्यामृतत्वरूपणस्य निमित्तमिति च परम्परितरूपकम् । तदुक्तं दर्पणे । यत्र कस्यचिदारोपः परारोपणकारणम् । तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनमिति । वसन्ततिलकं वृत्तम् ॥२५॥

यावदिति । हे वैदेहि सीते ! फणीन्द्रस्य शेषस्य शिरसि यावत् एतत् क्षितिचक्रं भूमण्डलं तिष्ठतीति शेषः, ग्रहगणैः सूर्य्यचन्द्रादिभिः अन्तरीक्षचारिभिः विहायः गगनं यावत् पुनः शबलं चित्रितं विभातीति शेषः, तावत् भुवनेषु पुण्यः पवित्रः अमलः निर्दोषः ते तव श्लोकः यशः प्रशस्तचरितैः पुण्यकीर्त्तिभिः जनैरिति शेषः उपगीयतां कीर्त्यताम् । वसन्ततिलकं वृत्तम् ॥ २६ ॥

(फ) दम्पती भार्य्यापती सीतारामावित्यर्थः । मन्दे सङ्कुचिते अक्षिणी यत्र तत् मन्दाक्षं सलज्जमित्यर्थः, स्वस्वप्रशंसाकीर्त्तना[illegible]ति भावः ।

इतरे। प्रियं नः प्रियम्।

रामः। लङ्केश्वर! चिरसञ्चरणादत्र नानुरोधं तर्कये। तदद्य रमितो मध्यमलोकसान्निध्येन गन्तुम् (ब)।

विभी। देव!

एते ते सुरसिन्धुधौतदृषदः कर्पूरखण्डोज्ज्वलाः
पादा जर्जरभूर्जवल्कलभृतो गौरीगुरोः पावनाः।
तत्त्वालोकनिरस्तमोहतमसामध्यात्मविद्याजुषां
यत्र ब्रह्मविदां निसर्गमधुरं जागर्त्ति सौम्यं महः॥ २७॥

लक्ष्म। आर्य्य! कथमेते भुवां परिसराः संस्तुतपूर्वान्यविषयग्राहित्वं न क्षमन्ते चक्षुषोः? (भ)।

रामः। [निरूप्य सस्मरणावेगम्] वत्स! ता एता गुरूणां कौशिकपादानां सञ्चरणेन पवित्रितपर्य्यन्ताः तपोवनभूमयः। यत्र तु तत्रभवता याज्ञवल्क्यान्तेवासिना द्वितीयेन विदेहाधि-

(ब) लङ्केश्वर! विभीषण! अत्र दिव्यभूमाविति भावः अनुरोधं निर्बन्धं न तर्कये न करोमीत्यर्थः।

एते इति। सुरसिन्धुर्मन्दाकिनी तया धौताः क्षालिताः दृषदः पाषाणाः येषां तथोक्ताः, कर्पूरखण्डवत् उज्ज्वलाः विशदाः जर्जराणि अतिजीर्णानि भूर्जानां वल्कलानि त्वचः बिभ्रतीति तथोक्ताः एते ते प्रसिद्धाः गौरीगुरोर्हिमवतः पावनाः पुण्याः पादाः प्रत्यन्तशैलाः दृश्यन्ते इति शेषः। यत्र येषु तत्त्वालोकेन परमार्थसाक्षात्कारेण निरस्तं विनाशितं मोहतमः अज्ञानतिमिरं येषां तथाभूतानाम् अध्यात्मविद्याजुषां वेदान्तविद्यासेविनां ब्रह्मविदां ब्रह्मज्ञानाम् ऋषीणामिति यावत् निसर्गमधुरं स्वभावरम्यं सौम्यम् आनन्दजनकं महः तेजः जागर्त्ति दीप्यते इत्यर्थः, ब्रह्मविदो मुनयः प्रतिवसन्तीति भावः। शार्दूलविक्रीडितं वृत्तम्॥२७॥

(भ) परिसराः प्रदेशाः। संस्तुतपूर्वाः पूर्वपरिचिताः तेभ्यः अन्ये विषयाः अपरिचितविषयाः अपरिचितविषया इत्यर्थः तेषां ग्राहित्वं दर्शनोत्सुकत्वमिति भावः न क्षमन्ते न सहन्ते। एषां परिचितपरिसराणामिव दर्शने उत्तम्यति हृदयं नान्येषामिति भावः।

पतिना सह तत्संलापामृतप्रमोदमनुभवतां गुरूणां लालनीयाभ्यामावाभ्यां बाल्योचितमुल्ललितम् (म)।

सीता। [स्वगतम्] कहं कणिट्ठतादो त्ति सुणीअदि (य)। [इति परितः सस्पृहमालोकयते]।

रामः। लङ्केश्वर! नोचितमिदानीं गुरुचरणपङ्कजपवित्रितेषु परिसरेषु विमानाधिरोहणम्।

[नेपथ्ये] भो भो रामलक्ष्मणौ! स भगवान् कृशाश्वान्तेवासी वां समाज्ञापयति (र)।

उभौ। [विमानाधिदेवतामिङ्गितेन स्तम्भाय नियुज्य] अवहितौ स्वः। (ल)

[पुनर्नेपथ्ये]

पुरीं यथा स्थितौ यातं विलम्बेथां च मान्तरा।
अरुन्धतीसहचरं ज्योतिर्वां सम्प्रतीक्षते॥ २८॥

(म) कौशिकपादानां विश्वामित्रचरणानाम्। तत्रभवता पूज्येन। तदिति। ते संलापाः परस्परं भाषणानि, संलापो भाषणं मिथ इत्यमरः। एव अमृतानि तैः प्रमोदः आनन्दः तम्। गुरूणां पूजनीयानां तापसानां पित्रादीनां वा। लालनीयाभ्यां सादरं पालनीयाभ्याम्। उल्ललितं क्रीड़ितम्। द्वितीयेन विदेहपतिना कुशध्वजेन।

(य) कथं कनिष्ठतात इति श्रूयते? सं।

कनिष्ठतातः कुशध्वजः।

(र) कृशाश्वान्तेवासी विश्वामित्रः। वां युवाम्।

(ल) विमानेति। विमानस्य पुष्पकस्य अधिदेवता अधिष्ठात्री देवी ताम्। इङ्गितेन सङ्केतेन स्तम्भाय स्थैर्याय।

पुरीमिति। युवां यथा स्थितौ पुरीम् अयोध्यां यातं गच्छतम् अन्तरा मध्ये मा विलम्बेथाञ्च विलम्बं मा कुरुतम्। अरुन्धत्या सहचरं ज्योतिः वशिष्ठ इत्यर्थः वां युवां सम्प्रतीक्षते। अनुष्टुब्वृत्तम्॥२८॥

अहमपि तृतीयकालक्रियानुसन्धानपरवान् मुहूर्त्तद्वयेन आगत एव। (ब)

उभौ। यथा आज्ञापयन्ति गुरवः। [पुनर्विमानं प्रतिष्ठेते]

रामः। अहो! महात्मानोऽपि वात्सल्यपरतन्त्राः यन्महिम्ना तपःस्वाध्याययोर्लवशोविभक्ते समये तत्राप्यागमनमनुरुध्यन्ते। अथवा युक्तमेवैतत्। यतः करुणापारतन्त्र्येण मृदुस्वभावास्ते तपोवनरुरुषु तरुषु च किं मनुष्येषु (श)। विशेषतस्तु—

राज्ञां मार्त्तण्डवंश्यानां गृहे नौ जन्म केवलम्।
शास्त्रास्त्रज्ञानमुख्यस्तु संस्कारोऽस्मान्महात्मनः ॥२९॥

विभो। [विलोक्य] किमिदमकाण्ड एव नीहारजालैरिव क्ष्मारजोभिः आच्छाद्यन्ते ककुभः? (ष)।

सर्वे। [सविस्मयं पश्यन्ति]

रामः [सवितर्कम्] मन्ये प्राभञ्जनेः अस्मत्प्रवृत्तिम् उपलभ्य मां प्रत्युपयाति इहससैन्यो भरतः (स)।

---

(ब) तृतीयेति। तृतीयः कालः मध्याह्न इत्यर्थः तस्मिन् या क्रिया पितृकृत्यमित्यर्थः तस्याः अनुसन्धाने अनुष्ठाने परवान् पराधीनः तत्कार्य्यासक्त इति यावत् मुहूर्त्तद्वयेन मुहूर्त्तौ दण्डद्वयं तस्य द्वयं दण्डचतुष्टयमित्यर्थः तेन।

(श) वत्सल्येति। वात्सल्यं पुत्रादिषु स्नेहः तस्य परतन्त्राः पराधीनाः। यन्महिम्ना यस्य वात्सल्यस्य महिम्ना प्रभावेण। तपःस्वाध्याययोः तपसः वेदाध्ययनस्य च लवशः खण्डशः। तपोवनरुरुषु तपोवनमृगविशेषेषु।

राज्ञामिति। मार्त्तण्डवंश्यानां सूर्य्यवंशीयानां राज्ञां गृहे नौ आवयोः केवलं जन्म उत्पत्तिमात्रमित्यर्थः, अस्मात् महात्मनः विश्वामित्रात् तु शास्त्रास्त्रज्ञानमुख्यः शास्त्रञ्च अस्त्रञ्च तयोः ज्ञानं मुख्यं प्रधानं यस्य तादृशः संस्कारः शरीरात्मनोर्धर्मो व्यापारविशेषः जात इति शेषः ॥ २९ ॥

(ष) अकाण्ड एव सहसैव। नीहारजालैरिव अवश्यायनिचयैरिव क्ष्मारजोभिः पार्थिवरेणुभिः। ककुभः दिशः।

(स) प्राभञ्जनेः हनुमतः। अस्मत्प्रवृत्तिं अस्माकं वृत्तान्तम्।

[प्रविश्य । हनूमान् । सपादपङ्कजग्रहं प्रणम्य ]। देव !

स्थितो ध्यायन्नन्तः किमपि चरितं स्वेन भवतः
चिरं वार्त्तामेनामथ मदुपलभ्य प्रचलितः ।
जटी चीरी रामेत्यमृतविभवं नाम रसयन्
मुहुर्हर्षोद्भ्रान्तप्रकृतिसहितोऽभ्येति भरतः ॥ ३० ॥

रामः । [सोल्लासम्] अहो ! चिरायायुष्मत्सौहार्दमुपलभामह इति सर्वानन्दानामुपरि वर्त्तामहे (ङ) ।

लक्ष्म । [सौत्सुक्यम्] सखे ! मारुते ! कुत्र आर्य्यः ?

हनू । य एते सैन्यस्य पुरतः पञ्चषाः तन्मध्ये पुरःसरः सानुजः स महात्मा भरतः (च) ।

लक्ष्म । [निर्वर्णयति] ।

सीता । [निरूप्य] कहं अण्णारिसो अज्ज दीसइ (क) ।

विभी । हंहो विमानराज ! चिराय बन्धुजनदर्शनालिङ्गनसम्भावनादिना मिथोऽङ्गप्रमोदमनुभवन्त्वेते महानुभावाः तत् क्षणं विरम ।

सर्वे । [विमानावतरणं नाटयन्ति] ।

---

स्थित इति । स्वेन आत्मना भवतः किमपि चरितम् अन्तर्ध्यायन् चिन्तयन् चिरं स्थितः नन्दिग्रामे इति शेषः । अथानन्तरम् एनां वार्त्तां भवदागमनप्रवृत्तिमित्यर्थः मत् मम सकाशादित्यर्थः उपलभ्य ज्ञात्वा प्रचलितः जटी जटावान् चीरी वल्कलपरिधानः भरतः रामेति अमृतविभवम् अमृतानुभावं नाम रसयन् रटन् मुहुः पुनः पुनः हर्षेण उद्भ्रान्ताभिः उल्लसिताभिः प्रकृतिभिः प्रधानामात्यादिभिः प्रजाभिर्वा सहितः परिवृतः स न् अभ्येति अभिगच्छति । शिखरिणीवृत्तम् ॥ ३० ॥

(ङ) आयुष्मत्सौहार्दम् आयुष्मतः भरतस्य सौहार्दं सद्भावम् । उपलभामहे अनुभवामः

(च) पुरतः अग्रतः पञ्चषा पञ्चसंख्यकाः षट्संख्यका वा ।

(क) कथमन्यादृश इव दृश्यते ? छं ।

[ततः प्रविशतः कतिचनप्रधानपुरुषपरिवृतौ भरतशत्रुघ्नौ]।

रामः। [सरभसं पादपतितं भरतमुत्थाप्य] एह्येहि वत्स!

अनुभावयति ब्रह्मानन्दसाक्षात्क्रियामिव।

स्पर्शस्तेऽद्य वराम्भोजप्रस्फुरन्नालकर्कशः॥ २१॥

[इति निर्भरमालिङ्ग्य विसृजति]

लक्ष्म। [सपादपतनं भरतमालिङ्गति]

शत्रुघ्नः। [रामलक्ष्मणावभिवादयते]

उभौ। कुलस्थितिमनुवर्त्तस्व (ख)।

भरतशत्रुघ्नौ। [दण्डवत् सीतां प्रणमतः]

सीता। कुमारा! जेट्ठाणं भादुभार्यं अभिमदा होह (ग)।

रामः। वत्सौ भरतशत्रुघ्नौ!।

अस्माकं व्यसनाम्भोधावयं पोतत्वमागतः।

कपीन्द्रोऽयं च लङ्केन्द्रो मित्रं धर्महिते रतः॥ २२॥

तत् परिष्वजतम् [इति सुग्रीवविभीषणौ दर्शयति]

भरतशत्रुघ्नौ। [तौ परिष्वज्य यथोचितमुपचरतः] (घ)

---

अनुभावयतीति। अद्य वरम् उत्तमम् अम्भोजं पद्मं तस्य प्रस्फुरत् विकसत् उत्तम-दित्यर्थः यत् नालं तद्वत् कर्कशः परुषः ते तव स्पर्शः ब्रह्मानन्दस्य ब्रह्मज्ञानजनित-प्रमोदस्य साक्षात्क्रियामिव अनुभावयति प्रत्याययति। भरतशरीरस्य आनन्दजरोमहर्ष-परीततया सकण्टकपद्मनालवत् कार्कश्यमिति भावः॥ २१॥

(ख) कुलस्थितिं वंशमर्य्यादाम्।

(ग) कुमारौ! ज्येष्ठयो भ्रात्रोः अभिमतौ भवतम्। सं।

अस्माकमिति। मित्रं धर्महिते रतः अयं कपीन्द्रः सुग्रीवः अयं लङ्केन्द्रश्च विभी-षणश्च अस्माकं व्यसनं विपद् एव अम्भोधिः समुद्रः तत्र पोतत्वं पारगमनयानत्वम् आगतः प्राप्तः। एतयोः साहाय्येनैव वयं विपत्सागरात् उत्तीर्णा इति भावः। अनुष्टुब्-वृत्तम्॥ २२॥

(घ) उपचरतः सेवेते।

भर। आर्य्य! कुलगुरुर्नो भगवान् मैत्रावरुणि: सिंहासनग्रहे सम्पादितसकलाभिषेकसम्भारो भवन्तं प्रतीक्षते (ङ)। यथा आज्ञापयत्यार्य्य:।

राम:। [स्वगतम्] कौशिकपादा: प्रतीक्षणीया: स च भगवान् मैत्रावरुणिरेवमाज्ञापयति। भवतु समयोचितं प्रतिकरिष्यते। [प्रकाशम्] यथा आज्ञापयति कुलगुरु:।

सर्वे। [परिक्रामन्ति]

[ तत: प्रविशति वशिष्ठो दशरथकलत्रै: उपचर्य्यमाणा अरुन्धती च ] (च)।

वशि। [स्वगतम्]

क्षमाया: स क्षेत्रं गुणमणिगणानामपि खनि:
प्रपन्नानां मूर्त्त: सुकृतपरिपाको जनिमताम्।
कृपारामो रामो वहिरिह दृशोपास्यत इति
प्रमोदाद्दै तस्याप्युपरि परिवर्त्तामह इमे॥ २२॥

भवतु तथापि लोकयात्रा अनुवर्त्तनीया। [प्रकाशम्) वध्वौ कौशल्यासुमित्रे! (छ)।

(ङ) न: अस्माकम्। मैत्रावरुणि: वशिष्ठ: सिंहासनग्रहे सिंहासनस्य ग्रहणार्थमित्यर्थ:।

(च) दशरथकलत्रै: दशरथमहिषीभि: कौशल्यादिभिरित्यर्थ: उपचर्य्यमाणा सेव्यमाना।

क्षमाया इति। स राम: क्षमाया: क्षेत्रं भूमि: क्षमाशील इत्यर्थ:, गुणा एव मणय: रत्नानि तेषां गणा: समूहा: तेषां खनि: उत्पत्तिस्थानं सर्वगुणाकर इत्यर्थ:, प्रपन्नानां विपन्नानां शरणार्थिनामिति यावत् जनिमतां जन्मिनां प्राणिनामित्यर्थ: मूर्त्त: शरीरवान् सुकृतस्य पुण्यकर्मण: परिपाक: फलं, कृपया रमते इति कृपाराम: परमदयालुरित्यर्थ:, इह वहिर्दृशा वाह्यदृष्ट्या उपास्यते सेव्यते अन्तर्दृष्ट्या तु सततं सेव्यत एवेति ध्वन्यते। इति प्रमोदाद्दै आनन्दादिव तस्यापि प्रमोदस्यापि उपरि इमे वयमिति शेष: परिवर्त्तामहे तिष्ठाम:। शिखरिणीवृत्तम्॥ २२॥

(छ) लोकयात्रा लोकाचार:। अनुवर्त्तनीया अनुसरणीया।

उभे । आणवेदु कुलगुरू (ज) ।

वशि । दिष्ट्या अक्षतप्रतिनिवृत्तवत्सै स्तः (झ) ।

उभे । तुह्माणं आसिसाणं प्पहावो (ञ) ।

अरु । [कैकेयीं विलोक्य] वत्से कैकेयि ! किमेवमतिदुर्मनायसे ?

कैके । अम्ब ! मह मंदभाइणीए अधमदाए सअलो वि लोओ एव्वं कोलोणं भणदि । जं वच्छाणं प्पवासजणणी मज्झमजणणी मंथरामुहे आसि । ता कहं वच्छाणं मए मुहं पेक्खिदव्वं (ट) ।

अरु । वत्से ! अलं वृथा कौलीनशङ्कया । आर्य्यमिश्रैः अयमर्थः तदैव आन्तरेण चक्षुषा साक्षात्कृतः (ठ) ।

सर्वाः । कहं विअ ? (ड)

अरु । मन्थरारूपधारिण्या शूर्पणखया माल्यवद्वचनादेतद्विहितमिति ।

सर्वाः । अहो ! रक्खसाणं दुट्टताभिजोओ जो इह ट्ठिदं अबलाजणं वि बाधेदि (ढ) ।

---

(ज) आज्ञापयतु गुरुः सं ।

(झ) दिष्ट्या भाग्येन अक्षतौ प्रतिनिवृत्तौ वनवासात् प्रत्यागतौ वत्सौ पुत्रौ ययोः तथोक्ते ।

(ञ) युष्माकम् आशिषां प्रभावः सं ।

(ट) अम्ब ! मम मन्दभागिन्याः अधन्यतया सकलोऽपि लोके एवं कौलीनं भणति । यत् वत्सानां प्रवासजननी मध्यमजननी मन्थरामुखे आसीत् । तत् कथं वत्सयोः मया मुखं प्रेक्षितव्यम् सं ।

कौलीनम् अपवादम् । मध्यमजननी मध्यमा जननी माता यद्वा मध्यमस्य भरतस्य जननी ।

(ठ) कौलीनशङ्कया अपवादशङ्कया । आर्य्यमिश्रैः वशिष्ठादिभिरिति भावः । तदैव तस्मिन्नेव काले प्रवाससमये एव आन्तरेण चक्षुषा दिव्यदृष्ट्या । साक्षात्कृतः ज्ञातः ।

(ड) कथमिव ? सं ।

(ढ) अहो राक्षसानां दुष्टताभियोगो य इह स्थितम् अबलाजनमपि बाधते सं ।

वशि। हुं मङ्गलसमये अलमलं यत्किञ्चिद्दुःखकैः का पुनरद्यापि राक्षसाभियोगवार्त्ता।

रामः। [वशिष्ठं विलोक्य सोल्लासम्] स एष भगवान् मैत्रावरुणिः।

यद्दर्शनात् किमप्येवं द्रवीभवति मे मनः।
राकासुधाकरालोकादिन्दुकान्तोपलो यथा॥ ३४॥

[लक्ष्मणं प्रति।] वत्स! इत इतः।

उभौ। [उपसृत्य] भगवन् कुलगुरो! रामलक्ष्मणौ अभिवादयेते।

वशि। चक्षुषां स्वस्वसमये संस्कारत्वं समाप्नुताम्।
वत्सौ नयेन धर्मेण ज्ञानेन च पुरस्कृतम्॥ ३५॥

[उभौ अरुन्धतीमभिवन्देते]

अरु। इष्टैर्युज्येथाम्।

उभौ। [क्रमेण सर्वा मातॄरभिवन्देते]

सर्वाः। [तौ निर्भरं परिष्वज्य मूर्ध्न्युपाघ्राय] जं अह्मो चिन्तेमो तं तुह्माणं होदु (क)।

सीता। [उपसृत्य वशिष्ठं प्रणमति]

वशि। वत्से! वीरप्रसविनी भव।

सीता। [अरुन्धतीं प्रणमति]

---

दुष्टताभियोगः दुष्टाशयता। बाधते पीड़यति कलङ्कयतीत्यर्थः।

यदिति। मे मम मनः राकासुधाकरस्य पूर्णचन्द्रस्येत्यर्थः आलोकात् दर्शनात् इन्दुकान्तोपलः चन्द्रकान्तमणिः यथा यस्य दर्शनात् एवम् इत्थं किमपि अनिर्वचनीयं यथा तथा द्रवीभवति गलतीत्यर्थः नितराम् आनन्दमनुभवतीति भावः॥ ३४॥

चक्षुषामिति। वत्सौ! नयेन नीत्या धर्मेण ज्ञानेन च पुरस्कृतं विभूषितं चक्षुषां संस्कारत्वं स्वस्वसमये तत्तत्कार्य्यकाले समाप्नुतां लभताम्। नीतिप्रयोगसमये ज्ञानानुशीलनसमये च यथायथं विशुद्धदृष्टिशालित्वं युवयोरस्त्विति भावः॥ ३५॥

(क) यत् वयं चिन्तयामः, तत् युष्माकं भवतु स्र।

अरु । [सीतां निर्भरमालिङ्ग्य]

लोपामुद्रानसूयाहमिति तिस्रस्त्वया सह ।
पतिव्रताश्चतस्रोऽत्र सन्तु जानकि ! साम्प्रतम् ॥ ३६ ॥

सीता । [श्वश्रूरभिवन्दते]

सर्वाः । जादे ! कुलपड्ठावअदारअप्पसविणी होहि (त)

[ नेपथ्ये ]

प्रवर्त्तन्तां पौराः ! प्रतिसदनमद्योत्सवविधौ
चिरं स्वे स्वे कर्मण्यथ समवधत्ताप्यधिकृताः ।
यथोक्तं सम्भारं पुनरिह विधत्त द्विजवराः !
कृशाश्वान्तेवासी कुशिकपतिराज्ञापयति वः ॥ ३७ ॥

वशि । [आकर्ण्य ] अहो ! अयं भाग्यमहिमा वत्सस्य, यद् भगवान् कौशिकः स्वयं सिंहासने समभिषेक्तुं संप्राप्तः ।

इतरे । प्रियं नः प्रियम् ।

[ ततः प्रविशति सशिष्यो विश्वामित्रः ]

विश्वा ।

सत्रप्रत्यूहशान्त्यै दशरथकरतः कर्षतैनं मया यत्-
यत् स्वान्ते संविमृष्टं तदद्गुणविधौ यच्च वैयग्र्यमासीत् ।

---

लोपेति । हे जानकि ! लोपामुद्रा अगस्त्यपत्नी, अनसूया अत्रिगृहिणी, अहम् अरुन्धतीत्यर्थः इति तिस्रः त्वया सह चतस्रः पतिव्रताः अत्र जगति साम्प्रतमिदानीं सन्तु भवन्तु । अनुष्टुव्वृत्तम् ॥ ३६ ॥

(त) जाते ! कुलप्रतिष्ठापकदारकप्रसविनी भव स' ।

जाते ! वत्से !

प्रवर्त्तन्तामिति । कृशाश्वस्य अन्तेवासी शिष्यः कुशिकपतिः विश्वामित्रः वः युष्मान् आज्ञापयति, हे पौराः ! पुरवासिनः ! अद्य प्रतिसदनं प्रतिगृहम् उत्सवविधौ उत्सव-व्यापारे प्रवर्त्तन्तां भवन्तु इति शेषः । अथेदानीम् अधिकृताः कर्मचारिणः यूयं चिरं स्वे स्वे कर्मणि निजे निजे अधिकारे समवधत्त सम्यक् अवधानं कुरुत । हे द्विजवराः ! ब्राह्मणाः ! इह अस्मिन् रामस्य राज्याभिषेके पुनः यथोक्तं यथाविहितं सम्भारं समुद्-योगं विधत्त कुरुत । शिखरिणीवृत्तम् ॥ ३७ ॥

तद् दैवस्यानुगुण्यात् प्रयतनविभवैस्त्वाद्य राज्येऽभिषिच्य
श्रीरामं निर्वृतानां फलितमिति मुहुः सम्प्रमोदामहे नः ॥ ३८ ॥

[ इति परिक्रामति ]

वशि। स एष कौशिकः।

क्षात्रं प्राकृतिकं तेजो ब्राह्मं यस्य विशिष्यते।
लोकोत्तरचमत्कारनिधेस्तस्याद्भुतं न किम्? ॥ ३९ ॥

[ वशिष्ठविश्वामित्रावुपसृत्यान्योन्यमुपचरतः ] (ध)

विश्वा। भगवन्मैत्रावरुणे! किमद्यापि प्रतीक्ष्यते?

वशि। यथोचितमाक्रियताम् (द)।

विश्वा। [ दिव्यर्षिगणमुद्दिश्य ] निर्वर्त्यतां रामभद्रस्याभिषेकः।

इतरे। [ यथोचितमाचरन्ति ]

[ नेपथ्ये दुन्दुभिध्वनिः ]

सर्वे। [ सविस्मयं पुष्पवृष्टिं रूपयन्ति ]

वशि। कथं सलोकपालो भगवान् पाकशासनो रामभद्रस्याभिषेकमनुमोदते।

---

ममेति। सत्राणां यज्ञानां प्रत्यूहस्य विघ्नस्य शान्त्यै उपशमार्थं दशरथस्य करतः हस्तात् एनं रामं कर्षता नयता मया स्वान्ते मनसि यत् यत् संविमृष्टं सञ्चिन्तितं तदनुगुणविधौ तस्य अनुकूलविधाने यच्च वैयग्र्यं व्यग्रता आसीत् ममेति शेषः। दैवस्य आनुकूल्यात् साहाय्यात् प्रयतनविभवैः प्रयत्नप्रभावैश्च पुरुषकारातिशयैश्च रामस्येति भावः निर्वृतानां निश्चिन्तानां निरुद्वेगानामिति यावत् नः अस्माकं तत् सङ्कल्पितमिति भावः फलितम् इति हेतोः अद्य श्रीरामं राज्ये अभिषिच्य मुहुः पुनः पुनः प्रमोदामहे आनन्दमनुभवाम इत्यर्थः। स्रग्धरावृत्तम् ॥ ३८ ॥

क्षात्रमिति। यस्य प्राकृतिकं नैसर्गिकं क्षात्रं क्षत्रियसम्बन्धि तेजः, ब्राह्मं ब्रह्मण्यसम्बन्धि तेजस्तु विशिष्यते उत्कृष्यते। लोकोत्तरचमत्कारनिधेः अलौकिकाश्चर्याश्रयस्य तस्य विश्वामित्रस्य किं न अद्भुतम् आश्चर्यं सर्वमेव आश्चर्यमित्यर्थः। अनुष्टुब्वृत्तम् ॥ ३९ ॥

(ध) उपचरतः अभिनन्दतः।

(द) आक्रियतां संविधीयताम्।

[ कृताभिषेकमङ्गलो रामः। वशिष्ठविश्वामित्रावुपसृत्य ]गुरू अभिवादये।

उभौ। रामभद्र ! गुणाराम ! भ्रातृभिस्त्वं पुरस्कृतः।
इक्ष्वाकुमुख्यैर्भूपालैश्चिरमूढां धुरं वह ॥ ४० ॥

इतरे। तथास्तु [ इत्यनुमोदन्ते। ]

विश्वा। वत्स रामभद्र !

रामः। आज्ञापयन्तु गुरवः।

विश्वा। विसृज्येतामितावनुभूतोत्सवप्रमोदौ सुग्रीवविभीषणौ पुष्पकं च संकल्पसमयसुलभं राजराजमेव आश्रयताम् (ध)।

रामः। [ तथा करोति ]

विश्वा। वत्स रामभद्र !

निर्व्यूढं गुरुशासनं गुरुतरं धर्मोऽपि संरक्षितः
रक्षःसंहरणाच्चिकित्सितमनोरोगा त्रिलोकी कृता।
सिद्धार्थाश्च सुराः सहानुजसुहृद्दारेण राज्यं पुनः
लब्धं किं करणीयमेतदधिकं श्रेयस्तदप्युच्यताम् ॥ ४१ ॥

---

रामभद्रेति। हे गुणाराम ! रामभद्र ! त्वं भ्रातृभिः पुरस्कृतः सेवितः सन् इक्ष्वाकुः मुख्यः प्रधानः श्रेष्ठ इति यावत् येषां तैः भूपालैः राजभिः चिरम् ऊढां धृतां धुरं राज्यभारमित्यर्थः वह गृहाण। अनुष्टुब्वृत्तम् ॥ ४० ॥

(ध) राजराजं कुबेरम्।

निर्व्यूढमिति। गुरुतरम् अतिदुर्भरमित्यर्थः गुरुशासनं पित्रादेशः निर्व्यूढं प्रतिपालितं, धर्मः वेदोदितः राक्षसानां दुराचारादिति भावः पितृसत्यरूपो वा संरक्षितः परिपालितः। रक्षसां संहरणात् त्रिलोकी चिकित्सितः शासितः मनोरोगः मानसी पीडा यस्याः तथाभूता कृता। सुराः देवाः सिद्धार्थाः कृतार्थाश्च सञ्जाता इति शेषः। सहानुजसुहृद्दारेण अनुजबान्धवकलत्रसहितेन च त्वयेति शेषः पुनः राज्यं लब्धं प्राप्तम्। एतदधिकम् एतेभ्यः पूर्वोक्तेभ्यः अधिकं किं श्रेयः शुभं करणीयं तदपि उच्यतां कथ्यताम्। शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

राम:। इतोऽधिकमपि श्रेयोऽस्ति। तथापीदमस्तु भगवत्पादप्रसादात्।

क्ष्मापाला: क्षीणतन्द्रा: क्षितिवलयमिदं पान्तु ते कालवर्षा
वार्वाहा: सन्तु राष्ट्रं पुनरखिलमपास्तेति सम्पन्नसस्यम्।
लोके नित्यप्रमोदं विदधतु कवय: श्लोकमाप्तप्रसादं
संख्यावन्तोऽपि भूत्वा परकृतिषु मुदं सम्प्रधार्य्य प्रयान्तु ॥ ४२ ॥

विश्वा। एवमस्तु।

निष्क्रान्ता: सर्वे

[ इति सप्तमोऽङ्क: ]

---

[ समाप्तमिदं महावीरचरितं नाम नाटकम् ]

---

क्ष्मापाला इति। क्ष्मापाला: भूपाला: क्षीणतन्द्रा: अनलसा: सन्त: इदं क्षितिवलयं भूमण्डलं पान्तु रक्षन्तु। वार्वाहा: वारिमुच: मेघा इत्यर्थ: कालवर्षा: समयवर्षिण: सन्तु भवन्तु। अखिलं समग्रं राष्ट्रं राज्यं पुन: अपास्ता: निराकृता: ईतय: अतिवृष्टिरनावृष्टि: शलभा मूषिका: खगा:। प्रत्यासन्नाश्च राजान: षडेता ईतय: स्मृता:। इत्युक्ता: यस्मिन् तथोक्तम् अतएव सम्पन्नसस्यं सम्पूर्णसस्यं भवत्विति शेष:। कवय: काव्यरचयितार: आप्त: लब्ध: प्रसाद: तदाख्यगुणविशेष:, चित्तं व्याप्नोति य: क्षिप्रं शुष्केन्धनमिवानल:। स प्रसाद: समस्तेषु रचनासु चेत्युक्तलक्षण: येन तथाभूतं नित्य: सन्तत: प्रमोद: आनन्द: यत्र तथोक्तं श्लोकं पद्यं सन्दर्भविशेषं वा विदधतु प्रणयन्तु। संख्यावन्त: पण्डिता अपि भूत्वा बाहुल्येन परकृतिषु अन्यकृतेषु सन्दर्भेष्वित्यर्थ: सम्प्रधार्य्य अभिनिविश्य मुदम् आनन्दं प्रयान्तु लभन्ताम्। स्रग्धरावृत्तम् ॥ ४२ ॥

इति बि ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचिता महावीरचरितनाटकस्य सप्तमाङ्क-
व्याख्या समाप्ता।

---

समाप्तोऽयं ग्रन्थ:।